जीवनीयानि सर्वाणि रास्ना गोक्षुरकस्तथा ।
शतपुष्पा वचा कुष्ठं सरलश्च पुनर्नवा ॥ १३१ ॥
चन्दनं तगरं मांसी पद्मकं रक्तचन्दनम् ।
सुरसा नागरं कृष्णा बिडं मुस्ता तथोत्पलम् ॥ १३२ ॥
एषामक्षसमैर्भागैः क्षीरं दत्त्वा चतुर्गुणम् ।
बृंहणं वातपित्तघ्नं क्षतशोषज्वरापहम् ॥ १३३ ॥
पीठसर्पिप्रपङ्गुनामर्दितेऽपि च शस्यते ।
पुंस्त्वोपघातिनां नृणां वन्ध्यानां चैव योजितम् ॥ १३४ ॥
बलवर्णकरं ह्येतदलक्ष्मीघ्नं प्रजाकरम् ।
इदं शतावरीसर्पिरश्विभ्यां परिकीर्तितम् ॥ १३५ ॥

वात व्याधि में शतावरीघृत—शतावरी का मूल एक तुला लेकर दो द्रोण जल में पकावे। अष्टमांश शेष क्वाथ में घृत एक प्रस्थ सभी जीवनीय गण की औषधि ( ऋद्धि, वृद्धि, जीवक, ऋषभक, मेदा, महामेदा, काकोली, क्षीर काकोली, मुलेठी, जीवन्ती, मुद्गपर्णी, माषपर्णी ), रासन, गोखरू, सौंफ, वच, कूठ, शाल, गदहपूरना, श्वेत चन्दन, तगर, जटामांसी, पद्मकाठ, रक्त चन्दन, तुलसी, सोंठ, पीपर, विडनमक, मोथा, नीलकमल का फूल—एक २ अक्ष—इन द्रव्यों के कल्क के साथ चौगुना ( चार प्रस्थ ) दूध मिलाकर घृत सिद्ध करे। यह घृत बृंहण, वात-पितनाशक, क्षत, सूखारोग तथा ज्वरनाशक है। पीठ सर्पि, तथा प्रपङ्गु के अर्दित ( एक भाग का टेढ़ा होना ) रोग में प्रशस्त ( लाभप्रद ) है। नपुंसक पुरुष तथा वांझ स्त्रियों के लिये प्रयोग करने पर बल तथा वर्ण को देता है, दरिद्रता का नाश करता है तथा सन्तानोत्पादक है। इस शतावरी घृत को अश्विनीकुमारों ने कहा है ॥ १३०–१३५ ॥

शङ्खपुष्प्याद्यं घृतम्—

( शङ्खाब्राह्मीगुडूच्युग्राशतावर्यर्कवल्लिकाः ।
मलपूं ब्रह्मसोमां च कल्कीकृत्य घृतं पचेत् ॥ १ ॥
दुग्धं चतुर्गुणं दत्त्वा वातश्लेष्महरं च तत् ।
मेधाकरं तथाऽऽयुष्यमश्विभ्यां परिकीर्तितम् ॥ २ ॥ )

शंखपुष्प्याद्य घृत—( शंखपुष्पी, ब्राह्मी, गुडूची, वच, शतावरी, अर्कवल्ली ( सूर्यवल्ली ), मलपू ( काष्ठोदुम्बर ), ब्रह्मसोमा ( सोमलता ), सम भाग इन द्रव्यों के कल्क के साथ दूध चौगुना मिलाकर घृत एक प्रस्थ सिद्ध करे। अश्विनीकुमार का कहा हुआ यह घृत वात-कफ को नाशकर, मेधा ( धारणा शक्ति ) वर्द्धक तथा आयु बढ़ाने वाला है ॥ १–२ ॥

सारस्वतं घृतम्—

ब्राह्मीं समूलपत्रां तु सम्यक् प्रक्षाल्य वारिणा ।
उलूखलेन संक्षुद्य रसं वस्त्रेण गालयेत् ॥ १३६ ॥
चतुर्गुणे रसे तस्मिन् घृतप्रस्थ विपाचयेत् ।
औषधानि च पेष्याणि तत्रेमानि प्रदापयेत् ॥ १३७ ॥
हरिद्रा मालती चैव त्रिफला च हरीतकी ।
एतेषां पालिका भागाः शेषाणां कार्षिकाः स्मृताः ॥ १३८ ॥
पिप्पल्योऽथ विडङ्गानि सैन्धवं शर्करा वृषः ।
एतानि तु समालोड्य शनैर्मृद्वग्निना पचेत् ॥ १३९ ॥
ततः पक्कं तु विज्ञाय क्षिप्र तदवतारयेत् ।
तस्य प्राशनमात्रेण बधिरत्वं प्रणश्यति ॥ १४० ॥
सप्तरात्रोपयोगेन भवेत्कविरसंशयम् ।
घृत सारस्वतं नाम सरस्वत्या विनिर्मितम् ॥ १४१ ॥

सारस्वत घृत—ब्राह्मी के मूल तथा पत्ते को जल से अच्छी तरह धोकर ओखरी में अच्छी तरह कूट, वस्त्र से छान कर, स्वरस चौगुना ( चार प्रस्थ ) लेकर, एक प्रस्थ घृत, हल्दी, मालती, त्रिफला ( आंवला-हर्रे-बहेडा ), हर्रे एक २ पल, पीपर, विडंग, सेन्धानसक, शर्करा, अडूसा—एक २ कर्ष—इन द्रव्यों के कल्क को मिलाकर धीरे २ मन्द आँच से पकावे । अच्छी तरह पक जाने पर उतार कर रख ले । इसके खाने मात्र से बाधिर्य रोग ( कान से न सुनाई देना ) नष्ट हो जाता है । सात रात्रि तक सेवन करने से निस्सन्देह कवि हो जाता है । इस सारस्वत नामक घृत को सरस्वती ने बनाया है ॥१३६–१४१॥

सन्तानार्थं फलघृतम्—

मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा वचा ।
अजमोदा हरिद्रे द्वे हिङ्गु तिक्तकरोहिणी ॥ १४२ ॥
काकोली क्षीरकाकोली मूलं चैवाश्वगन्धजम् ।
जीवकर्षभकौ मेदे रेणुका बृहतीद्वयम् ॥ १४३ ॥
उत्पलं चन्दनं द्राक्षा पद्मकं देवदारु च ।
एषामक्षसमैर्भागैर्घृतप्रस्थं विपाचयेत् ॥ १४४ ॥
चतुर्गुणेन तोयेन विपचेन्मृदुनाऽग्निना ।
एतत्सर्पिर्नरः पीत्वा स्त्रीषु नित्यं वृषायते ॥ १४५ ॥
पुत्रं जनयते वीरं मेधाढ्यं पुष्करेक्षणम् ।
वन्ध्या च लभते गर्भं श्यामा शीघ्रं प्रसूयते ॥ १४६ ॥
या चैव स्थितगर्भा स्यान्मृतापत्या तु या भवेत् ।

अल्पायुर्जननी चैव या च सूत्वा पुनः स्थिता ॥ १४७ ॥
एतदेव कुमाराणां सर्वाङ्गग्रहमोक्षणम् ।
धन्य यशस्यमायुष्यं कान्तिलावण्यपुष्टिदम् ॥ १४८ ॥
ये च कल्याणके प्रोक्तास्ते चापीह गुणाः स्मृताः ।
एतत्फलघृतं नाम ह्यश्विभ्यां परिकीर्तितम् ॥ १४९ ॥

संतान के लिये फल घृत—मंजीठ, मुलेठी, कूठ, त्रिफला ( हर्रे, वहेड़ा, आंवला ), शकर, वच, अजमोदा, आमाहल्दी, दारुहल्दी, हिंगु, कुटकी, काकोली, क्षीरकाकोली, असगन्ध का मूल, जीवक, ऋषभक, मेदा, महामेदा, सम्भालू का बीज, छोटी कटेरी, वनभंटा, नीलकमल का फूल, रक्त चन्दन, मुनक्का, पद्मकाठ, देवदारु—समभाग एक २ अक्ष—इन द्रव्यों के कल्क से साथ चौगुने ( चार प्रस्थ ) जल में एक प्रस्थ घृत मन्द आंच से पकावे। इस घृत को पान कर मनुष्य स्त्री के साथ प्रसंग करने मे वृष ( साँढ ) के समान शक्ति प्राप्त करता है। तथा बलवान्, मेधावी, पुष्करेक्षण ( सर्वतोन्मुखी दृष्टि वाला ), पुत्र को उत्पन्न करता है। बांझ स्त्री गर्भ को प्राप्त करती है और गर्भवती शीघ्र ही ( कष्ट के विना ही ) प्रसव करती है। जो स्त्री स्थितगर्भा (गर्भ धारण शक्ति-हीन ), मृत संतान पैदा करनेवाली, कम आयु की सन्तान पैदा करनेवाली तथा एक बार प्रसव के बाद पुनः गर्भ न धारण करने वाली है वह भी ( दीर्घ-जीवी ) संतान को उत्पन्न करती है।

यही घृत सुकुमारों के सर्वाङ्ग ग्रह को मोक्ष करनेवाला, धन, यश, आयु, कान्ति, सुन्दरता तथा पुष्टि को देने वाला है। जो गुण कल्याणक घृत मे कहे गये हैं वे सभी गुण इस घृत में हैं। इस फल घृत को अश्विनीकुमारों ने बताया है ॥ १४२–१४९ ॥

अग्निवेशात्क्षतक्षीणे श्वदंष्ट्राद्यं घृतम्—

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्यकत्तृणम् ।
पृश्निपर्णी स्थिरा दर्भमूलं च जीवकर्षभौ ॥ १५० ॥
पालिकान् साधयेत्तेषां रसे क्षीरचतुर्गुणे ।
कल्कैर्जीवकजीवन्तीस्वगुप्तामेदकर्षभात् ॥ १५१ ॥
शतावर्यृद्धिमृद्वीकाशर्कराश्रावणीबिसात् ।
प्रस्थः सिद्धो घृताद्वातपित्तहृद्द्रवशूलनुत् ॥ १५२ ॥
मूत्रकृच्छ्रप्रमेहार्शःकासशोषक्षयापहः ।
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः ॥ १५३ ॥

अग्निवेश वर्णित क्षतक्षीण में श्वदंष्ट्राद्य घृत—श्वदंष्ट्रा ( गोखरु ), खस, मंजीठ, वला, गम्भारी, तृण ( भूतृण ), पिठवन, शालपर्णी, कुशा की जड़,

जीवक, ऋषभक—एक पल—इन द्रव्यों के कषाय, तथा चौगुने दूध में जीवक, जीवन्ती, केवाछ का वीज, मेदा, ऋषभक, शतावरी, ऋद्धि, मुनक्का, शर्करा, श्रावणी ( मुण्डी ), कमलतन्तु—सम भाग ( चार पल )—इन द्रव्यों के कल्क के साथ, घृत एक प्रस्थ सिद्ध करे। यह घृत वात-पित्तजन्य, हृदय शूल को दूर करता है। मूत्रकृच्छ्र, प्रमेह, अर्श, कास, सूखा रोग तथा क्षय रोग को नाश करता है। और धनुष, स्त्रीप्रसंग, मद्य, बोझ तथा मार्ग चलने से थके हुए व्यक्तियों का वल तथा मांस वढ़ाता है ॥१५०-१५३॥

कामलायां हारीताद् द्राक्षाद्यं घृतम्—

पिष्ट्वा गोस्तनिकायास्तु पलान्यष्टौ समावपेत् ।
पुराणसर्पिषः प्रस्थं पक्वं क्षीरे चतुर्गुणे ।
कामलापाण्डुरोगार्शोज्वरकासार्तिनाशनम् ॥ १५४ ॥

कामला रोग में हारीत वर्णित द्राक्षाद्य घृत—चौगुने दूध में द्राक्षा आठ पल का कल्क बना कर एक प्रस्थ पुराना घृत सिद्ध करे। यह घृत कामला पाण्डुरोग, अर्श, ज्वर तथा कासरोग को नाश करता है ॥ १५४ ॥

वाग्भटात्कुष्ठे महावज्रकं घृतम्—

वासामृतानिम्बपटोलतिक्ताव्याघ्रीकरञ्जोदककल्कसिद्धम् ।
सर्पिर्विसर्पज्वरकामलार्तिकुष्ठापहं वज्रकमामनन्ति ॥ १५५ ॥

वाग्भट कथित कुष्ठ रोग मे वज्रक घृत—अडूसा, गुडूची, नीम, पटोल-पत्र, कुटकी, ( व्याघ्री ) भटकटैया, करंज—इन द्रव्यों के क्वाथ तथा कल्क से सिद्ध किया हुआ महावज्रक नामक घृत, विसर्प, ज्वर, कामला रोग तथा कुष्ठ रोग को नाश करता है। ( इस योग में परिमाण नहीं वताया है अतः एक प्रस्थ घृत, चार प्रस्थ क्वाथ्य द्रव्य का चतुर्थांशावशिष्ट क्वाथ, तथा चार पल कल्क द्रव्य लेना चाहिए ) ॥ १५५ ॥

वाग्भटात्कुष्ठे महावज्रकं घृतम्—

त्रिफलात्रिकटुद्विकण्टकारीकटुकाकुम्भनिकुम्भराजवृक्षैः ।
सवचातिविषाग्निकैः सपाठैः पिचुभागैर्नव वज्रदुग्धसुष्ट्याः ॥ १५६ ॥
पिष्टैः सिद्धं सर्पिषः प्रस्थमेभिः क्रूरे कोष्ठे स्नेहनं रेचनं च ।
कुष्ठश्वित्रप्लीहवर्ध्माश्मगुल्मान्हन्यात्कृच्छ्रांस्तन्महावज्रकाख्यम् ॥१५७॥

वाग्भट वर्णित कुष्ठ रोग मे महावज्रक घृत—त्रिफला ( हरें, आँवला, वहेडा ), त्रिकटु ( सोंठ-पीपर-मरिच ), भटकटैया, वनभंटा, कुटकी, कुम्भ ( निशोथ ), निकुम्भ ( दन्तीमूल ), असलतास, वच, अतीस, चित्रक, पाठा—एक २ पिचु ( कर्ष )—इन द्रव्यों को नव पल सेहुंड के दूध मे पीस कर कल्क वनावे। इस कल्क के साथ एक प्रस्थ घृत, ( चौगुने चार प्रस्थ

जल में मिला कर ) सिद्ध करे। यह घृत कडे कोष्ठवालों के लिये, स्नेहन तथा रेचन ( दस्तावर ) करने वाला है। यह महावज्र नामक घृत, कष्टसाध्य कुष्ठ, श्वित्र, प्लीहा वृद्धि, वर्ध्म ( पद्मगत रोग ) तथा अश्म गुल्म ( पथरी-गुल्म ) को नाश करता है ॥ १५६–१५७ ॥

अग्निवेशात् कुष्ठे तिक्तकं घृतम्—

निम्बपटोलं दार्वीं दुरालभां तिक्तरोहिणीं त्रिफलाम्।
कुर्यादर्धपलांशं पर्पटकं त्रायमाणां च ॥ १५८ ॥
सलिलाढकसिद्धानां रसेऽष्टभागस्थिते क्षिपेत्पूते।
चन्दनकिराततिक्तकमागधिकात्रायमाणाश्च ॥ १५९ ॥
मुस्त वत्सकबीजं कल्कीकृत्यार्धकार्षिकान् भागान्।
नवसर्पिषश्च षट्पलमेतत्सिद्ध घृतं पेयम् ॥ १६० ॥
कुष्ठज्वरगुल्मार्शोग्रहणीपाण्ड्वामयश्वयथुहारि।
विसर्पपामापिडकाकण्डूमदगण्डनुत्तिक्तम् ॥ १६१ ॥

अग्निवेश वर्णित, कुष्ठरोग में तिक्तक घृत—नीम, पटोलपत्र, दारुहल्दी, यवासा, कुटकी, त्रिफला ( हर्रे, बहेड़ा, आंवला ), पित्तपापड़ा, त्रायमाणा—आधा २ पल—इन द्रव्यों को एक आढक जल में क्वाथ कर, अष्टमांशावशिष्ट, परि स्रावित क्वाथ में, चन्दन, चिरायता, पिप्पली, त्रायमाणा, मोथा, इन्द्रजव—आधा २ कर्ष—इन द्रव्यों का कल्क तथा नवीन घृत छः पल मिलाकर घृत सिद्ध करे। यह तिक्तक, घृत, पान करने से कुष्ठ रोग, ज्वर, गुल्म रोग, अर्श, ग्रहणी दोष, पाण्डु रोग तथा शोथ को हरने वाला और विसर्प, पामा, पिडका, खुजली तथा मद, ( मादकता ) गण्ड, को नाश करता है ॥ १५८–१६१ ॥

अग्निवेशात् कुष्ठे महातिक्तकं घृतम्—

सप्तच्छदं प्रतिविषां शम्याकं तिक्तरोहिणीं पाठाम्।
मुस्तमुशीरं त्रिफलां पटोलपिचुमर्दपर्पटकम् ॥ १६२ ॥
धन्वयवासं चन्दनमुपकुल्यां पद्मक हरिद्रे द्वे।
षड्ग्रन्थां सविशालां शतावरीं सारिवे चोभे ॥ १६३ ॥
वत्सकबीजं वासां मूर्वाममृतां किराततिक्तं च।
कल्कीकुर्यान्मतिमान् यष्ट्याह्वं त्रायमाणां च ॥ १६४ ॥
कल्कश्चतुर्थभागो जलमष्टगुणं रसोऽमृतफलानाम्।
द्विगुणो घृतात्प्रदेयस्तत्सिद्धं पाययेत्सर्पिः[1] ॥ १६५ ॥

---

१. 'मतिमान्' इति पा०।

कुष्ठानि रक्तपित्तप्रबलान्यर्शांसि रक्तवाहीनि ।
वीसर्पमस्लपित्तं पित्तासृक् पाण्डुतां[1] गुल्मम् ॥ १६६ ॥
विस्फोटकान् सपामानुन्मादं कामलां कृमीन् कण्डूम् ।
[2]हृद्रोगज्वरपिडका ह्यसृग्दरं गण्डमालां च ॥ १६७ ॥
हन्यादेतत्सद्यः पीतं काले यथाबलं सर्पिः ।
योगशतैरप्यजितान्महाविकारान्महातिक्तम् ॥ १६८ ॥

अग्निवेश कृत, कुष्ठ रोग में महा तिक्तक घृत—सप्तच्छद ( छतिवन ), अतीस, शम्पाक ( अमलतास ), कुटकी, पाठा, मोथा, खस, त्रिफला ( हर्रे-बहेड़ा-आंवला ), पटोलपत्र, नीम, पित्तपापड़ा, धन्वयवास ( धमासा ), रक्तचन्दन, पीपर, पद्मकाठ, आमाहल्दी, दारुहल्दी, वच, इन्द्रायण, शतावरी, कृष्णसारिवा, रक्तसारिवा, इन्द्रयव, अडूसा, मूर्वा ( मोरवेल्ल ), गुडूची, चिरायता, जेठी मधु, त्रायमाणा—चतुर्थांश—इन द्रव्यों का कल्क बनाकर घृत से अठगुना जल तथा अमृतफल ( गुडूची ) का स्वरस दुगुना ( बारह पल ) मिला कर घृत सिद्ध करे और इस घृत को पान कराये। यह घृत कुष्ठ रोग, प्रबल रक्तपित्त, रक्तवाही अर्श रोग, ( रक्तस्रावी ) विसर्प, अम्लपित्त, रक्तपित्त, पाण्डुरोग, गुल्म, विस्फोटक ( फोटका, छलकई भवानी ), पामा, उन्माद, कामला, कृमिरोग, कण्डू, हृद्रोग, ज्वर, पिडका, रक्तप्रदर तथा गण्डमाला ( ग्लैन्ड टी. बी. ) को नाश करता है। यह महातिक्तक घृत, बल के अनुसार समय से पान करने पर सैकड़ों योगों से असाध्य महान् रोगों को भी नाश करता है ॥ १६२–१६८ ॥

जतुकर्णात् कुष्ठे द्वितीयं महातिक्तकं घृतम्—

करञ्जसप्तच्छदपिप्पलीनां मूलानि कृष्णा मधुकं विशाला ।
यवासकश्चन्दनमुत्पलं च स्यात् त्रायमाणा कटुका वचा च ॥ १६९ ॥
उशीरपाठातिविषारजन्यः किराततिक्तः कुटजस्य बीजम् ।
निम्बासनारग्वधमालतीनां पत्राणि मूलानि च कण्टकार्याः ॥१७०॥
शतावरीपद्मकदेवदारुमुस्तानि कालीयककेसराणि ।
वासागुडूचीनतसारिवाश्च बला पटोल त्रिफला च मूर्वा ॥ १७१ ॥
नीपः कदम्बो धववेतसौ च कर्कोटकः पर्पटकः पयस्या ।
वाराहकन्दं सदयन्तिका च ब्राह्मी समङ्गपर्णको बला च ॥ १७२ ॥
एतैः समांशैरथ कार्षिकैश्च घृतस्य पात्रं विपचेन्नवस्य ।
द्रोणं जलस्याकलुषस्य दद्यात् पात्रद्वयं चामलकीरसस्य ॥ १७३ ॥

---

[1] पाण्डुरोगं च' इति पा० ।  [2] 'हृद्रोगगुल्मपिडकाः' इति पा० ।

पक्वं प्रशान्तं गतफेनशब्दं प्रयोजयेत् कुष्ठहरं प्रशस्तम् ।
तद्रक्तपित्तानिलसन्निपातविस्फोटपाल्यामयविद्रधीनाम् ॥ १७४ ॥
किलासकासज्वरगण्डमालाग्रन्थ्यर्बुदानि त्वथ वातरक्तम् ।
हृत्पाण्डुरोगान् सभगन्दरांश्च निषेव्यमाणं नियमेन काले ॥ १७५ ॥
घृतं महातिक्तमिदं प्रशस्त निहन्ति सर्वान् श्वयथूपदिष्टान् ।

जातुकर्ण वर्णित कुष्ठ रोग में द्वितीय महातिक्तक घृत—करञ्ज, छतिवन तथा पीपर ( अश्वत्थ ) का मूल, पिप्पली, मुलेठी, इन्द्रायण, यवासा, रक्तचन्दन, नीलकमल का फूल, त्रायमाणा, कुटकी, वच, खस, पाठा, अतीस, आमाहल्दी, दारुहल्दी, चिरायता, इन्द्रयव, नीम, विजयसार, अमलतास तथा मालती का पत्र, भटकटैया का मूल, शतावरी, पद्मकाठ, देवदारु, मोथा, कालीयक ( पीत चन्दन ), केशर, अडूसा, गुडूची, तगर, सारिवा, बरियार, परोरा का पत्ता, त्रिफला (आंवला, हर्रे, बहेड़ा), मूर्वा (मोर बेल), कमल, कदम्ब, धव का फूल, अम्लवेत, कर्कोटक (इक्षु), पर्पटक (पित्तपापड़ा), क्षीरकाकोली, वाराहीकन्द, मेहदी, ब्राह्मी, मंजीठ, ऋषभक, बरियार—समभाग एक २ कर्ष—इन द्रव्यों के कल्क के साथ ताजा घृत एक पात्र ( आढ़क ), स्वच्छ जल एक द्रोण तथा आंवला का स्वरस दो पात्र ( दो आढ़क ) मिला कर घृत सिद्ध करे। फेन तथा शब्द से रहित अच्छी तरह परिपक्व, शीतल उत्तम घृत को कुष्ठनाशार्थ प्रयोग करे। यह घृत रक्तपित्त, वातरक्त, संनिपात, विस्फोटक ( फफोला ), पाली रोग के लिये उत्तम है, और किलास, कुष्ठभेद, कास, ज्वर, गण्डमाला, ग्रन्थि, अर्बुद, वातरक्त, हृदय रोग, पाण्डु रोग, भगन्दर तथा सभी प्रकार के शोथों को, नियमपूर्वक समय से सेवन करने पर उत्तम महातिक्तक नाम का घृत नाश करता है ॥ १६९-१७५½ ॥

कृष्णात्रेयात् प्लीह्नि रोहीतकं घृतम्—

शतं पलानि रोहीतात् संक्षुद्य बदराढकम् ।
पाचयित्वा जलद्रोणे चतुर्भागावशेषिते ॥ १७६ ॥
घृतप्रस्थं समावाप्य छागं क्षीरं चतुर्गुणम् ।
तस्मिन् दद्यादिमांश्चैव सर्वान् कर्षसमन्वितान् ॥ १७७ ॥
व्योषं फलत्रयं हिङ्गु यवानी तुम्बुरु बिडम् ।
अजाजी सैन्धवं कुष्ठं दाडिमं देवदारु च ॥ १७८ ॥
पुनर्नवा विशाला च यवक्षारश्च पुष्करम् ।
विडङ्गं चित्रकश्चैव हपुषा चविका वचा ॥ १७९ ॥
एभिर्द्रव्यैर्घृतप्रस्थं स्थापयेद्भाजने शुभे ।

पाययेच्च पलं मात्रां व्याधीन् शमयते क्षणात् ॥ १८० ॥
प्लीहं प्लीहोदरं चैव प्लीहशूलं तथैव च ।
हृच्छूलं पार्श्वशूलं च कुक्षिशूलमरोचकम् ॥ १८१ ॥
हन्ति विबन्धशूलं च पाण्डुरोगं सकामलम् ।
छर्द्यतीसारशूलघ्नं तन्द्राज्वरविनाशनम् ॥ १८२ ॥
रोहीतकघृतं ह्येतत् प्लीहानं शमयेद् द्रुतम् ।

कृष्णात्रेय वर्णित प्लीहा वृद्धि में रोहीतक घृत—रोहितक ( रोहेडा ), एक सौ पल कूट कर लेले और वैर एक आढक मिलाकर एक द्रोण जल में पकावे। चतुर्थांश शेष क्वाथ से एक प्रस्थ घृत, चौगुना ( चार प्रस्थ ) बकरी का दूध, मिला कर व्योष ( सोंठ-पीपर-मरिच ), फलत्रय (हर्रे-बहेडा-आंवला), हींग, अजवायन, तुम्बुरु, विडनमक, स्याहजीरा, सेन्धा नमक, कूठ, अनार, देवदारु, पुनर्नवा, इन्द्रायण, यवाखार, पुष्करमूल, विडंग, चित्रक, हाऊवेर, चव्य, वच—एक २ कर्ष—इन द्रव्यों के कल्क के साथ घृत सिद्ध कर स्वच्छ पात्र में रक्खे और शीघ्र रोगों की शान्ति के लिये एक पल मात्रा में पिलाये। यह रोहितक नामक घृत प्लीहावृद्धि, प्लीहोदर, प्लीहाशूल, पार्श्वशूल, उदरशूल, तथा अरोचक ( अरुचि ) को नाश करता है, तथा विबन्ध ( मलावरोधजन्य ) शूल, पाण्डु और कामला को भी नाश करता है। छर्दि ( वमन ), अतिसार शूल को भी नाश करने वाला है, तन्द्रा ज्वर को दूर करता है और प्लीहावृद्धि को शीघ्र ही शान्त करता है ॥ १७६–१८२½ ॥

चारपाणेः प्लीहनि बिल्वाद्यं घृतम्—

बिल्वं पाठाऽभया धान्यं यवानी सैन्धवं विडम् ।
मरिचं पञ्चकोलं च क्षारश्चैभिर्घृतं पचेत् ॥ १८३ ॥
दध्ना चतुर्गुणेनैव शकृद्वातविबन्धनुत् ।
सर्वामप्लीहवातार्तिगुदभ्रंशरुजापहम् ॥ १८४ ॥

चारपाणि वर्णित प्लीहा वृद्धि में बिल्वाद्य घृत—बेल का गूदा, पाठा, हर्रे, धनिया, अजवायन, सेन्धानमक, विडनमक, मरिच, पञ्चकोल, ( पीपर-पिपरामूल-चव्य-चित्रक-सोंठ ), यवाखार—समभाग—इन द्रव्यों के कल्क के साथ, घृत से चौगुना दही मिलाकर घृत सिद्ध करे ( परिमाण स्नेहपाक विधि के अनुसार बना ले )। यह घृत मलावरोध तथा वात विबन्ध को दूर करता है और सभी प्रकार के आम ( आव ), प्लीहा, वात रोग, गुदभ्रंश को नाश करने वाला है ॥ १८३–१८४ ॥

हारीतात् सर्वोदरे द्विपञ्चमूलाद्यं घृतम्—

द्वे पञ्चमूल्यौ त्रिवृतानिकुम्भे सप्तपलं चित्रकशिग्रुमूलम् ।

[1]कुरण्टबीजं त्रिफला गुडूची ह्येरण्डमूलं सदयन्तिका च ॥ १८५ ॥
पाठा सभार्गी सुषवी सनीला सरोहिपा [2]पापकुचेलिका च ।
एषां पृथक् पञ्चपलं जलस्य द्रोणे पचेत्तच्चतुरंशशेषम् ॥ १८६ ॥
घृतं विपक्वं सकषायकल्कं निहन्ति पीतं सकलोदराणि ।

हारीत वर्णित सभी उदर रोग में द्विपंचमूलाद्य घृत—दोनों पंच मूल ( बेल की छाल, गम्भारी, पाढल, अरलू, अरणी, शालपर्णी, पृश्निपर्णी, वनभंटा, भटकटैया, गोखरु ), निशोथ, दन्तीमूल, सातला, चित्रक मूल, सहिजन मूल कुरण्ट बीज ( करञ्जबीज ), त्रिफला, गुडूची, एरण्ड मूल, मेंहदी, पाठा, भांगरा, सुषवी ( मंगरैला ), नीला ( नील ), दूर्वा, पापकुचेलिका, ( पाठा )—अलग २ पाँच २ पल—इन द्रव्यों को एक द्रोण जल में पकावे। चतुर्थांश शेष क्वाथ में एक प्रस्थ घृत तथा चतुर्थांश ( चार पल ) समभाग इन्हीं द्रव्यों के कल्क के साथ पकाये। यह घृत पान करने से सभी प्रकार के उदर रोगों को नाश करता है ॥ १८५–१८६½ ॥

उदरे ब्राह्मं घृतम्—

शिलाह्वयं नागरकालशाके काकादनीमूलनिदग्धिके च ॥ १८७ ॥
पञ्चैव दद्याल्लवणानि हिङ्गु कृष्णां च तैरक्षसमैः पृथक् च ।
प्रस्थं घृतस्याथ पचेन्नवस्य चतुर्गुणं मूत्रमथ प्रदाप्य ॥ १८८ ॥
पयश्च दद्याद् द्विगुणं विपक्वं तद् ब्रह्मसृष्टं प्रवदन्ति सर्पिः ।
प्लीहोदरं दूष्यमथोदर च संसेव्यमानं जठराणि हन्यात् ॥ १८९ ॥

उदर रोग में ब्राह्म घृत—शिलाजीत, सोंठ, कालशाक ( नाड़ी या ललितापाट ), काकादनी ( गुञ्जा ) की जड़, वनभंटा, भटकटैया, पाँचों नमक (सेन्धा, सौवर्चल, विड, साभर, सामुद्र), हींग, पीपर—समभाग एक २ अक्ष—इन द्रव्यों के कल्क के साथ ताजा घृत एक प्रस्थ, गोमूत्र चौगुना ( चार प्रस्थ ) मिलाकर पकावे और उसमें दूध दुगुना ( दो प्रस्थ ) छोड़ दे। इस सिद्ध घृत को ब्रह्मसृष्ट ( ब्रह्मा का बनाया हुआ ) घृत कहते है। यह घृत सेवन करने से दुष्ट प्लीहोदर, उदर रोग तथा जाठराग्नि रोग को नाश करता है ॥ १८७–१८९ ॥

कासे कण्टकारीघृतम्—

पाठाविडव्योषविडङ्गसिन्धुत्रिकण्टरास्नाहुतभुग्बलाभिः ।
शृङ्गीवचाम्भोधरदेवदारुदुरालभाभार्ग्यभयाशटीभिः ॥ १९० ॥
सम्यग्विपक्वं द्विगुणेन सर्पिर्निदग्धिकायाः स्वरसेन चैतत् ।

---

१. 'करञ्जबीजम्' इति पा०। २. 'पीतकुचेलिका' इति पा०।

श्वासाग्निसादस्वरभेदभिन्नान्निहन्त्युदीर्णानपि पञ्चकासान् ॥ १९१ ॥

कास रोग में कण्टकारी घृत—पाठा, विडंग, त्र्योष ( सोंठ-पीपर-मरिच ), विडंग, सेन्धानमक, गोखरू, रास्ना, चित्रक, बला, काकड़ासिंगी, वच, अम्भोधर ( मोथा ), देवदारु, यवासा, भांगरा, हर्रे, कपूरकचरी—समभाग—इन द्रव्यों के कल्क के साथ कण्टकारी ( भटकटैया ) का स्वरस दुगुना मिलाकर घृत अच्छी तरह पकावे। यह घृत श्वास, मन्दाग्नि, स्वरविकृति, तथा स्वर भिन्न, उद्दण पाचों प्रकार के कास को नाश करता है। ( इस योग में कल्क द्रव्यों का तथा घृत का परिमाण नहीं दिया गया है अतः घृत के चौथाई कल्क द्रव्यों को लेना चाहिए तथा घृत के दुगुना स्वरस ग्रहण करें ॥ १९०–१९१ ॥

कासे द्वितीय कण्टकारी घृतम्—

क्षुद्रायाः स्वरसं सम्यग् ग्राहयेद्यन्त्रपीडितम् ।
चतुर्गुणे रसे तस्मिन् घृतप्रस्थं विपाचयेत् ॥ १९२ ॥
दद्यात्त्रिकटुकं गर्भे रास्नां गोक्षुरकं बलाम् ।
पञ्चकासानिदं सर्पिः पीतं सद्यो व्यपोहति ॥ १९३ ॥

कास रोग में द्वितीय कण्टकारी घृत—क्षुद्रा ( भटकटैया ) को कूटकर निकाला हुआ स्वरस चार प्रस्थ में घृत एक प्रस्थ तथा त्रिकटु ( सोंठ, पीपर, मरिच ), रास्ना, गोखरू, बरियार—समभाग ( एक २ पल )—इन द्रव्यों का कल्क मिलाकर घृत सिद्ध करे। यह घृत पीने से शीघ्र ही पांचों प्रकार के कास को नाश करता है ॥ १९२–१९३ ॥

अग्निवेशात् कासे त्र्यूषणाद्य घृतम्—

त्र्यूषणं त्रिफला द्राक्षां काश्मर्यं च परूषकम् ।
द्वे पाठे देवदार्वृद्धि स्वगुप्तां चित्रकं शटीम् ॥ १९४ ॥
व्याघ्रीमामलकीं मेदां काकनासां शतावरीम् ।
त्रिकण्टकं गुडूची च पिष्ट्वा कर्षसमं घृतात् ॥ १९५ ॥
प्रस्थं चतुर्गुणे क्षीरे सिद्धं कासहरं पिबेत् ।
ज्वरगुल्मारुचिप्लीहशिरोहृत्पार्श्वशूलनुत् ॥ १९६ ॥
कामलार्शोऽनिलाष्ठीलाक्षतशोषक्षयापहम् ।
त्र्यूषणं नाम विख्यातमेतद् घृतमनुत्तमम् ॥ १९७ ॥

अग्निवेश वर्णित कास रोग में त्र्यूषणादि घृत—त्र्यूषण ( सोंठ, पीपर, मरिच ), त्रिफला ( हर्रे, बहेडा, आंवला ), मुनक्का, गम्भारी, फालसा, लघु पाठा, राजपाठा, देवदारु, ऋद्धि, केवाछ का बीज, चित्रक, कपूरकचरी, भटकटैया, आंवला, मेदा, काकनासा, शतावरी, गोखरू, गुडूची—समभाग एक २ कर्ष—इन द्रव्यों का कल्क बनाकर घृत एक प्रस्थ, चौगुने ( चार प्रस्थ ) दूध

में मिला सिद्ध करे और कासनाशक घृत को पीवे। यह उत्तम त्र्यूषण नाम से प्रसिद्ध घृत, ज्वर, गुल्म, अरुचि, प्लीहावृद्धि, शिरःशूल, हृदयशूल तथा पार्श्वशूल को दूर करता है और कामला, अर्श, वाताष्ठीला, क्षत, शोप तथा क्षय रोग को नाश करता है॥ १९४–१९७॥

कृष्णात्रेयाद् व्रणे गौर्याद्यं घृतम्—

गौरीनिम्बपटोलरोध्रफलिनीयष्ट्याह्वनीलोत्पलै-
र्मञ्जिष्ठाकटुकेन्द्रवारुणिजपामूर्वानिशाचन्दनैः।
जातीक्षोरकपत्रकेशरदलैः पूतीकघोण्टाफलै-
स्तुल्यैः सिक्थकसारिवाद्वययुतैर्गव्यं घृतं पाचयेत्॥ १९८॥
गृष्टिक्षीरसपञ्चवल्कलदलक्काथैश्च गौर्यादिभिः
सिद्धं सर्पिरिदं हितं त्रिषु भवेत्सद्यःक्षतेषु ध्रुवम्।
ये गूढाश्चिरकालजातगतयः प्रोच्छिन्नमांसा व्रणाः
सस्रावाः सरुजः सदाहपिडिकाः शुष्यन्ति रोहन्ति च॥ १९९॥

कृष्णात्रेय-कथित व्रण रोग में गौर्याद्य घृत—दारुहल्दी, नीम, परोरा का पत्ता, पठानी लोध, प्रियंगु, यष्टी ( मधुयष्टी ), नीलकमल, मंजीठ, कुटकी, इन्द्रवारुणी, जपा ( अढहुल ) का फूल, मूर्वा ( मोरवेल ), आमाहल्दी, चन्दन, चमेली का पत्ता, चोरक ( यवासा ), तेजपत्र, नागकेशर, दालचीनी, पूतिकरंज, घोण्टाफल ( वैर, झड़वेरी ), मोम, कृष्णसारिवा, रक्तसारिवा-समभाग (घृत के चतुर्थांश)—इन द्रव्यों के कल्क के साथ गाय का घृत, गृष्टि-क्षीर ( नवप्रसूता गाय का दूध ) तथा पञ्चवल्कल ( वट, उदुम्बर, पीपर, पाकड, जामुन ) की छाल के क्वाथ ( घृत से चौगुना क्वाथ्यद्रव्य लेकर क्वाथ कर अवशिष्ट चतुर्थांश क्वाथ लेना चाहिए, यहाँ घृत से दुगना क्वाथ और दुगना दूध लेना अभीष्ट है ) में मिलाकर घृत सिद्ध करे। यह घृत तीनों प्रकार के सद्यः क्षत में निश्चित लाभप्रद है। जो गूढ़, बहुत दिनों से चल रहे, बिखरे-सडे मांस वाले व्रण, पीड़ायुक्त, बहने वाले तथा दाहयुक्त पिड़का हैं वे सूख जाते हैं और उसमें रोहण-क्रिया हो जाती है ( वे भर जाते हैं )॥१९८–१९९॥

भेडाद् गुग्गुलुतिक्तक घृतम्—

निम्बामृतापटोलानां कण्टकार्या वृषस्य च।
पृथग्दशपलान् भागान् जलद्रोणे विपाचयेत्॥ २००॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
त्रिकटुत्रिफलामुस्तारजनीद्वयवत्सकम्॥ २०१॥
शुण्ठी दारुहरिद्रा च पिप्पलीमूलचित्रकम्।

भल्लातको यवक्षारः कटुकाऽतिविषा वचा ॥ २०२ ॥
विडङ्गं स्वर्जिकाक्षारः शतपुष्पाऽजमोदकम् ।
एषामक्षसमैर्भागैर्गुग्गुलोः पञ्चभिः पलैः ॥ २०३ ॥
सुसिद्धं पीयमानं च ह्येतद् गुग्गुलुतिक्तकम् ।
विद्रधिं हन्ति सद्यो हि त्वग्दोषानपि दारुणान् ॥ २०४ ॥
कुष्ठानि स्त्रापसङ्कोचवेगवन्ति स्थिराणि च ।
वातश्लेष्मसमुत्थानि मेदःस्रावयुतानि च ॥ २०५ ॥
गण्डमालार्बुदग्रन्थिनाडीदुष्टभगन्दरान् ।
कासं श्वास प्रतिश्याय पाण्डुरोगं ज्वर क्षयम् ॥ २०६ ॥
विषमज्वरहृद्रोगलिङ्गदोषविषक्रिमीन् ।
प्रमेहासृग्दरोन्मादशुक्रदोषगदान् जयेत् ॥ २०७ ॥

भेड-वर्णित गुग्गुलुतिक्तक घृत—नीम, गुडूची, पटोलपत्र, भटकटैया, अडूसा, दश २ पल लेकर एक द्रोण जल में पकावे। चतुर्थांश शेष क्वाथ में घृत एक प्रस्थ मिलाकर, त्रिकटु ( सोंठ, पीपर, मरिच, ), त्रिफला ( हर्रे, बहेडा, आँवला ), मोथा, आमाहल्दी, दारुहल्दी, कोरैया, सोंठ, दारुहल्दी, पिपरामूल, चित्रक, शु० भल्लातक, यवाखार, कुटकी, अतीस, वच, वायविडंग, सज्जीखार, सौंफ, अजमोदा—समभाग ( एक २ अक्ष )—इन द्रव्यों के कल्क तथा शु. गुग्गुलु पांच पल के साथ घृत सिद्ध करे। यह गुग्गुलुतिक्तक नामक घृत पान करने से विद्रधि, भयंकर चर्मरोग, सुन्न, संकोच, विस्फार वाला, स्थिर वातश्लेष्मजन्य मेदोस्राव से युक्त कुष्ठ को शीघ्र ही नष्ट करता है, और गण्डमाला, अर्बुद, ग्रन्थि, नाडीव्रण ( नासूर ), बिगड़ा हुआ भगन्दर रोग, कास, श्वास, प्रतिश्याय, पाण्डुरोग, ज्वर, क्षयरोग, विषमज्वर ( मलेरिया ), हृदयरोग, लिङ्गदोष ( नेत्रदृष्टिगत रोग ), विषजन्य उपद्रव, कृमिरोग, प्रमेह, रक्तप्रदर, उन्माद तथा शुक्र ( वीर्य ) दोषसम्बन्धी रोगों को नाश करता है ॥ २००–२०७ ॥

हारीताच्छोषे द्राक्षाद्यं घृतम्—

द्राक्षायाः शोधितं प्रस्थं मधुकस्य पलाष्टकम् ।
पचेत्तोयार्मणे शुद्धे पादशेषेण तेन च ॥ २०८ ॥
पालिके मधुकद्राक्षे पिष्ट्वा कृष्णापलद्वयम् ।
प्रदाप्य सर्पिषः प्रस्थं पचेत् क्षीरचतुर्गुणम् ॥ २०९ ॥
सिद्धे शीते पलान्यष्टौ शर्करायाः प्रदापयेत् ।
एतद् द्राक्षाघृतं नाम क्षीणक्षुत्तृट्सुखावहम् ॥ २१० ॥

वातपित्तज्वरश्वासविस्फोटकहलीमकान् ।
प्रदरं रक्तपित्तं च हन्यान्मांसबलप्रदम् ॥ २११ ॥

हारीत-वर्णित शोष ( सूखा ) रोग में द्राक्षाद्य घृत—स्वच्छ द्राक्षा एक प्रस्थ, मुलेठी आठ पल लेकर एक द्रोण जल में पकावे । परिस्रावित चतुर्थांश शेष क्वाथ के साथ मुलेठी एक पल, मुनक्का एक पल, पीपर दो पल—इन द्रव्यों का कल्क मिलाकर एक प्रस्थ, घृत तथा चौगुना ( चार प्रस्थ ) दूध छोड़कर घृत सिद्ध करें । सिद्ध-शीत होने पर शर्करा आठ पल मिला दे । यह द्राक्षाघृत नष्ट भूख तथा नष्ट प्यास वालों को आरोग्य देनेवाला ( भूख-प्यास बढ़ाने वाला) है । वातपित्त ज्वर, श्वास, विस्फोटक (फफोला), हलीमक, प्रदर तथा रक्तपित्त को नाश करता है और मांस, बल को बढाने वाला है ॥ २०८–२११ ॥

विदेहात्सर्वनेत्ररोगे त्रिफलाद्यं घृतम्—

त्रिफलाया रसप्रस्थ प्रस्थ भृङ्गरसस्य च ।
पीडयित्वा वृषं बालं रसप्रस्थं प्रदापयेत् ॥ २१२ ॥
अजाक्षीरस्य च प्रस्थं कार्षिकैः श्लक्ष्णपेषितैः ।
पिप्पलीशर्कराद्राक्षात्रिफलानीलपद्मकैः ॥ २१३ ॥
मधुकक्षीरकाकोलीमधुपर्णीनिदिग्धिका— ।
मञ्जिष्ठापद्मकोशीरसारिवादारुचन्दनैः[1] ॥ २१४ ॥
घृतं प्रस्थं पचेत् प्राज्ञः कल्कैरेभिः समन्वितम् ।
ऊर्ध्वपानमधः पानं मध्ये पानं विशिष्यते ॥ २१५ ॥
अतिप्रदुष्टरक्ते च रक्ते चातिस्रुते तथा ।
नक्तान्ध्ये तिमिरे काचे सर्वनेत्ररुजासु च ॥ २१६ ॥
अर्कविद्योतिते[2] भ्रान्ते सूर्यतेजोद्विषे तथा ।
गृध्रदृष्टिकरं धन्यं बलवर्णाग्निवर्धनम् ॥
त्रिफलाया घृतं सिद्धं सर्वनेत्ररुजान्तकृत् ॥ २१७ ॥

विदेह-वर्णित सभी नेत्र रोग में त्रिफलाद्य घृत—त्रिफला का रस ( या क्वाथ ) एक प्रस्थ, भृङ्गराज का स्वरस एक प्रस्थ, मुलायम अडूसे को कूट कर निकाला स्वरस एक प्रस्थ, बकरी का दूध एक प्रस्थ, लेकर, पीपर, शर्करा, मुनक्का, त्रिफला, नीलकमल, मुलेठी, क्षीरकाकोली, मधुपर्णी ( गम्भारी ), निदिग्धिका ( भटकटैया ), मंजीठ, पद्मकाठ, खस, सारिवा,

---

१. 'दार्वीचन्दनैः' इति पा० । २. 'चन्द्रविद्योतिते' इति पा० ।

देवदारु, चन्दन—एक २ कर्ष—इन द्रव्यों के कल्क के साथ एक प्रस्थ घृत मिलाकर सिद्ध करे। यह घृत, भोजन के पहले, बाद तथा मध्य में पान करना चाहिए।

अत्यन्त दूषित रक्त, रक्तातिस्राव, रतौंधी, तिमिर-काच ( दृष्टिगत रोग ), सभी प्रकार के नेत्र रोगों में बकविद्योतित ( चन्द्रविद्योतित पाठान्तर ) बगुला या चन्द्रमा के सामने आँख का चमकना, भ्रान्त ( साफ न देखना ), सूर्यतेज-द्विप (सूर्य के तेज से न दिखाई देना) आदि नेत्र रोगों में लाभ करता है। यह सिद्ध त्रिफला घृत गृध्र के समान दृष्टि बनाने वाला, धन देने वाला, बल, वर्ण तथा अग्नि को बढ़ानेवाला तथा सभी नेत्र रोगों को नाश करने वाला है ॥ २१२–२१७ ॥

पटोलाद्यं घृतम्—

पटोलं मधुकं दार्वीं निम्बं वासां फलत्रिकम् ।
दुरालभां च त्रायन्ती पर्पटं च पलोन्मितम् ॥ २१८ ॥
प्रस्थमामलकानां च क्राथयेत्सलिलार्मणे ।
तेन पादावशेषेण घृतप्रस्थ विपाचयेत् ॥ २१९ ॥
कल्कैः कुटजभूनिम्बमुस्तयष्ट्याह्वचन्दनैः ।
पिप्पलीसहितैः सर्पिश्चक्षुष्यं श्रोत्रयोर्हितम् ॥ २२० ॥
घ्राणकर्णाक्षिवर्त्मत्वग्दन्तरोगव्रणापहम् ।
रक्तपित्तहरं स्वेदक्लेदपूयोपशोषणम् ॥ २२१ ॥
कामलाज्वरवीसर्पगण्डमालाहरं परम् ।

पटोलाद्य घृत—परवल का पत्ता, मुलेठी, ( पाठान्तर-कटुका ), दारुहल्दी, नीम, अडूसा, त्रिफला ( हर्रे, बहेडा, आंवला ), यवासा, त्रायमाणा, पित्त-पापड़ा—एक २ पल, आंवला एक प्रस्थ—इन द्रव्यों को एक द्रोण जल में पकावे। चतुर्थांश शेष क्वाथ से एक प्रस्थ घृत तथा कोरैया, चिरायता, मोथा, जेठी मधु, रक्तचन्दन, पीपर ( चतुर्थांश चार पल )—इन द्रव्यों को कल्क मिलाकर घृत सिद्ध करे। यह घृत नेत्र तथा कर्ण रोगों के लिये, हितकर है। यह घृत नाक, कान, नेत्र, वर्त्म ( पक्ष्म ), चर्म तथा दन्तगत रोग, व्रण को नाश करता है, रक्तपित्त को दूर करता है, स्वेद ( पसीना ), क्लेद ( चिपचिपाहट ), पूय को सुखाता है तथा कामला, ज्वर, वीसर्प-गण्डमाला को अच्छी तरह दूर करता है ॥

---

१. 'कटुकां' इति पा०।

कृष्णात्रेयाद् बिन्दुघृतम्—

त्रिवृतां त्रिफलां पाठां दन्ती कटुकरोहिणीम् ॥ २२२ ॥
चतुरङ्गुलमज्जानं तथा च कटुकत्रयम् ।
चित्रकं च बृहत्यौ च तथा च गजपिप्पलीम् ॥ २२३ ॥
स्नुहीक्षीरं पलं दद्याद् घृतस्याष्टौ प्रदापयेत् ।
यावतः स पिबेद्विन्दूँस्तावद्वारान् विरिच्यते ॥ २२४ ॥
एतद्विन्दुघृतं सिद्धमृषिभिः परिकीर्तितम् ।

कृष्णात्रेय-वर्णित, बिन्दु घृत—निशोथ, त्रिफला, ( हर्रे, बहेड़ा, आंवला ), पाठा, दन्तीमूल, कुटकी, अमलतास का गूदा, सोंठ, पीपर, मरिच, चित्रक, भटकटैया, वनभंटा, गजपीपर, सेंहुड़ का दूध—एक २ पल—इन द्रव्यों के कल्क के साथ, आठ पल घृत ( दो प्रस्थ जल मिलाकर ) सिद्ध करे। इस घृत को जितना बूँद पान करे उतना ही वार विरेचन ( दस्त ) होय। इस सिद्ध बिन्दु घृत को महर्षियों ने कहा है ॥

कृष्णात्रेयाद् गुल्मे महाबिन्दुघृतम्—

स्नुहीक्षीरपले द्वे च प्रस्थार्धं चैव सर्पिषः ॥ २२५ ॥
कम्पिल्लकपलं चैव शाणार्धं सैन्धवस्य च ।
त्रिवृतायाः पलं चैव कुडवं धात्रिजाद्रसात् ॥ २२६ ॥
तोयप्रस्थेन संयुक्तं शनैर्मृद्वग्निना पचेत् ।
कर्षमानं प्रदातव्यं जठरे प्लीहगुल्मयोः ॥ २२७ ॥
तथा कर्णोत्थरोगेषु युञ्जीत कुशलो भिषक् ।
गुल्मादिनिचयानेतत् समूलान् सपरिग्रहान् ॥ २२८ ॥
निहन्त्येष प्रयोगो हि वायुर्जलधरानिव ।
पञ्चगुल्मवधार्थाय सर्पिरेतत् प्रकीर्तितम् ॥ २२९ ॥
सर्वासुरवधार्थाय यथा वज्रं बिडौजसः ।
महाबिन्दुघृतं सिद्धं सर्वोदरहरं परम् ॥ २३० ॥

कृष्णात्रेय-वर्णित गुल्मरोग में महाबिन्दु घृत—सेंहुड़ का दूध दो पल, घृत आधा प्रस्थ ( आठ पल ), कबीला एक पल, सेन्धा नमक आधा शाण ( दो मासा ), निशोथ एक पल, आंवला का रस एक कुडव ( चार पल ), तथा जल एक प्रस्थ मिलाकर धीरे २ मन्द आंच से घृत को पकावे। इस घृत को एक कर्ष ( एक तोला ) की मात्रा में उदर रोग, प्लीह तथा गुल्म के रोगियों को देना चाहिए। और बुद्धिमान चिकित्सक, कर्ण के रोगों में प्रयोग करे। यह घृत उपद्रवों के सहित सभी प्रकार के गुल्म रोग समूहों को समूल नाश कर देता है। जैसे वायु मेघ को नाश कर देता है। पाचों गुल्मों को नाश

करने के लिये यह घृत बनाया गया है। जैसे सभी असुरों को मारने के लिये इन्द्र का वज्र है। यह सिद्ध महाबिन्दु घृत, सभी प्रकार के उदर रोगों को अच्छी तरह दूर करता है ॥ २२५–२३० ॥

गुल्मे बिन्दुघृतम्—

श्यामात्रिवृद्वह्निपलत्रयं हि हरीतकीनां तु शतार्धमन्यत् ।
तोयोर्मणोऽर्धेन विपाच्य तेन प्रस्थं पचेद्गव्यघृतस्य वैद्यः ॥ २३१ ॥
कम्पिल्लकस्यापि पलप्रमाणं[1] सनीलिनीबीजपलद्वयं च ।
चतुष्पलं स्नुक्पयसश्च दत्त्वा गुल्मापहं बिन्दुघृतं विरेकात् ॥ २३२ ॥

गुल्म रोग मे बिन्दु घृत—काला निशोथ, सफेद निशोथ, चित्रक तीन पल ( अलग २ एक २ पल ), हर्रे पचास पल, आधा द्रोण जल में क्वाथ कर ( चतुर्थांशावशिष्ट क्वाथ के साथ ) गाय का घृत एक प्रस्थ, कबीला एक पल ( एक प्रसृति ( प्रस्थ-पाठान्तर ), नीलिनी ( नील ) का बीज दो पल तथा सेहुंड़ का दूध चार पल मिलाकर, घृत को सिद्ध करे। यह बिन्दु घृत, विरेचक ( दस्तावर ) होने से गुल्म रोग को नाश करता है ॥ २३१–२३२ ॥

चिकित्साकलिकाया गुल्मे महाबिन्दुघृतम्—

त्रिवृत्पलं स्नुक्पयसः पलं च कम्पिल्लकस्यापि पलं तृतीयम् ।
चतुष्पलं चामलकीरसस्य पलार्धमन्यल्लवणस्य चैव ॥ २३३ ॥
प्रस्थार्धमेभिर्हविषो विपक्वं जले महाबिन्दुघृत प्रसिद्धम् ।
निहन्ति गुल्मं जठराणि चैव प्लीहामयानाशु विरेकयोगात् ॥२३४॥

चिकित्सा-कलिका नामक ग्रन्थ से गुल्म रोग में महाबिन्दुघृत—निशोथ एक पल, सेहुड़ का दूध एक पल, कबीला तीन पल, आँवला का रस चार पल, सेन्धानमक आधा पल—इन द्रव्यों के साथ घृत आधा प्रस्थ ( चौगुना दो प्रस्थ ) जल मे पकावे। यह प्रसिद्ध महाबिन्दुघृत, विरेचक ( दस्तावर ) होने से गुल्म, उदर रोग तथा प्लीहा रोग को शीघ्र ही नाश करता है ॥२३३–२३४॥

कुष्ठे बिन्दुघृतम्—

अर्कक्षीरपले द्वे तु स्नुहीक्षीरपलानि षट् ।
पथ्या कम्पिल्लकः श्यामा श्यामाको गिरिकर्णिका ॥ २३५ ॥
नीलिनी त्रिवृता दन्ती शङ्खिनी चित्रकस्तथा ।
एतेषां पलिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥ २३६ ॥
अथास्य मलिने कोष्ठे बिन्दुमात्रं प्रदापयेत् ।
यावतो ना पिबेद्बिन्दूंस्तावद्वारान्विरिच्यते ॥ २३७ ॥

---

१. 'कम्पिल्लकस्य प्रसृतिप्रमाणं' इति पा० ।

कुष्ठं गुल्ममुदावर्तं श्वयथुं सभगन्दरम् ।
शमयत्युदराण्यष्टौ वृक्षमिन्द्राशनिर्यथा ॥ २३८ ॥
एतद्बिन्दुघृतं नाम येनाभ्यक्तो विरिच्यते ।

कुष्ठ रोग में बिन्दुघृत—मदार का दूध दो पल, सेहुंड का दूध छः पल, हर्रे, कबीला, काला निशोथ, श्यामाक ( साँवा ), गिरिकर्णी ( अपराजिता ), नीलवृक्ष, सफेद निशोथ, दन्तीमूल, शंखिनी ( यवतिक्ता ), चित्रक—एक २ पल—इन द्रव्यों के कल्क के साथ घृत एक प्रस्थ ( चार प्रस्थ पानी में ) पकावे । मनुष्य इस घृत को जितना बिन्दु पान करेगा उतने ही बार दस्त होगा । यह घृत–कुष्ठ रोग, गुल्म, उदावर्त ( आमाशय या अन्त्रस्थ आनाह ), शोथ, भगन्दर तथा आठ प्रकार के उदर रोगों को शान्त करता है । जैसे इन्द्र का वज्र वृक्ष को गिरा देता है । यह बिन्दु नामक घृत है जिसको लगाने से भी विरेचन होता है ॥

कुष्ठे पञ्चतिक्तकं घृतम्—

निम्बं व्याघ्रीं पटोलं च गुडूची वासकं तथा ॥ २३९ ॥
कुर्यात्तुलां तु संचूर्ण्य क्वाथयेत्तज्जले शुभे ।
ततः पादावशेषेण घृतप्रस्थं विपाचयेत् ॥ २४० ॥
त्रिफलागर्भसंयुक्तं पञ्चतिक्तकमुच्यते ।
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ॥ २४१ ॥
विंशतिं श्लेष्मजांश्चैव पानादेवापकर्षति ।
( दुष्टव्रणांस्तथा नाडीमर्शांसि च भगन्दरम् ।
पञ्चकासान् सहृद्रोगान् सर्पिरेतन्नियच्छति ॥ )

कुष्ठ रोग में पञ्चतिक्तकघृत—नीम, भटकटैया, परोरा का पत्ता, गुडुच तथा अडूसा एक तुला लेकर यवकुट कर स्वच्छ जल ( एक द्रोण ) में पकावे । चतुर्थांश शेष क्वाथ के साथ घृत एक प्रस्थ और त्रिफला (हर्रे, बहेड़ा, आंवला) ( चार पल ) का कल्क मिलाकर पकावे । इसको पञ्चतिक्तक घृत कहते है । यह घृत, अस्सी प्रकार के वात रोग, चालिस प्रकार के पैत्तिक रोग और बीस प्रकार के कफज रोगों को पीने मात्र से ही दूर करता है । ( यह घृत दुष्टव्रण ( बिगड़ा हुआ व्रण ), दुष्ट नाडी व्रण ( नासूर ), अर्श, भगन्दर, पांच प्रकार के कास तथा हृदय रोगों का दूर करता है ) ॥

खरनादाच्छूले लशुनघृतम्—

प्रस्थं लशुनबीजानां कण्टकार्यास्तथैव च ॥ २४२ ॥
प्रस्थं तथा च वासाया जलद्रोणे विपाचयेत् ।
द्राक्षाया गोस्तनायाश्च कुडवं चात्र मिश्रयेत् ॥ २४३ ॥

तत्र दद्याद् घृतप्रस्थं गोक्षीरप्रस्थमेव च ।
लशुनस्य तु पिष्टस्य पलं[1] निष्पीड्य योजयेत् ॥ २४४ ॥
आटरूषकपत्राणां पेषयित्वा पलं[2] तथा ।
एतन्मृद्वग्निना सिद्धं शीतं पूतमथापि च ॥ २४५ ॥
द्विपलं शर्कराचूर्णं क्षीरार्धकुडवं तथा ।
त्वक्क्षीर्याश्च पलार्धं हि तत्सर्वं खजमूर्च्छितम् ॥ २४६ ॥
निदध्याद्भाजने शुद्धे काञ्चने राजतेऽपि वा ।
एतत्प्रायोगिकं[3] सर्पिरिमान् व्याधीन् व्यपोहति ॥ २४७ ॥
कासं श्वासं ज्वरं गुल्मं कार्श्यं छर्दिमरोचकम् ।
हृद्रोगं पार्श्वशूलं च क्षतक्षीणं प्लिहोदरम् ॥ २४८ ॥
जीवनं बृंहणं वृष्यं पाण्डुश्वयथुनाशनम् ।

खरनाद-वर्णित शूल रोग में लशुन घृत—लहशुन की गांठ एक प्रस्थ, भटकटैया एक प्रस्थ, तथा अडूसा एक प्रस्थ लेकर एक द्रोण जल में क्वाथ करे और उसमे मुनक्का एक कुडव ( चार पल ), खजूर एक कुड्व मिला दे । चतुर्थांश शेष क्वाथ में घृत एक प्रस्थ, गाय का दूध एक प्रस्थ, लहशुन का रस एक पल तथा अडूसा के पत्ते का रस एक पल मिलाकर मन्द आंच से घृत सिद्ध करे । सिद्ध घृत को छान कर ठंढा होने पर शर्करा दो पल, दूध आधा-कुडव ( दो पल ), वंशलोचन आधा पल—इन सभी द्रव्यों को खज-मूर्च्छित ( कर्छी से मिलाकर ) कर स्वच्छ सोना या चांदी के वर्तन में रक्खे । यह घृत बराबर सेवन करने से कास, श्वास, ज्वर, गुल्म, कृशता, छर्दि ( वमन ), अरोचक, हृद्रोग, पार्श्वशूल, क्षतक्षीण ( उरःक्षत ), प्लीहोदर—इन व्याधियों को नाश करता है । यह घृत जीवनीय, बलवर्द्धक, वीर्यवर्द्धक, पाण्डु तथा शोथ का नाश करता है ॥

तन्त्रान्तराद्दाडिमाद्यं घृतम्—

दाडिमात्कुडवो धान्यात्कुडवार्धं पलं पलम् ॥ २४९ ॥
चित्रकाच्छृङ्गवेराच्च पिप्पल्यष्टमिका च तैः ।
पलानि विंशति चैव घृतस्य सलिलाढके ॥ २५० ॥
सिद्धं हृत्पाण्डुगुल्मार्शःप्लीहवातार्तिशूलनुत् ।
दीपनं श्वासकासघ्नं मूढवातानुलोमनम् ॥ २५१ ॥
दुःखप्रसविनीनां च वन्ध्यानां चैव पुत्रदम् ।

---

१. 'मागधिकापलम्' इति पा० । २. 'पलं द्राक्षापलं तथा' इति पा० ।
३. प्रायोगिकमिति प्रयोगः स्वस्थस्य सततोपयोगः, तत्र साधु प्रायोगिकम् ।

अन्य तन्त्र में वर्णित दाडिमाद्य घृत—अनार एक कुडव ( चारपल ), धनिया आधा कुड्व ( दोपल ), चित्रक, सोंठ एक-एक पल, पीपर अष्टमिका ( आध पल )—इन द्रव्यों के कल्क के साथ वीस पल घृत एक आढ़क जल में पकावे। यह सिद्ध घृत हृदय रोग, पाण्डु रोग, गुल्म-रोग, अर्श रोग, प्लीहा-वृद्धि, वात रोग तथा शूल को दूर करता है, उदराग्नि-दीपक, श्वास-कास-नाशक तथा प्रतिलोम ( उलटा ) वात का अनुलोमन करता है। दुःख से प्रसव करने वाली स्त्रियों को सुख से प्रसव करने वाला बनाता है तथा बाँझ स्त्रियों को भी पुत्र देने वाला है॥

चित्रकाद्यं घृतम्—

चित्रकस्य तुलाक्वाथे घृतप्रस्थं विपाचयेत्॥ २५२॥
द्विगुणं ह्यारनालं च दधिमण्डं चतुर्गुणम्।
पञ्चकोलकतालीसक्षारैर्लवणसंयुतैः॥ २५३॥
द्विजीरकनिशायुग्मैर्मरिचं तत्र दापयेत्।
गुल्मप्लीहोदराध्मानपाण्डुरोगारुचिज्वरान्॥ २५४॥
बस्तिहृत्पार्श्वकट्यूरुशूलोदावर्तजान् गदान्।
निहन्यात् पीतमर्शोघ्नं पाचनं वह्निदीपनम्।
बलवर्णकरं चापि भस्मक च नियच्छति॥ २५५॥

चित्रकाद्य घृत—चित्रक एक तुला एक द्रोण जल मे क्वाथ करे ( चतुर्थांश शेष ) क्वाथ में घृत एक प्रस्थ, आरनाल ( कच्चे या पक्के निस्तुप गेहूं की दरिया को पानी में तीन दिन तक संधान करने के बाद सिद्ध द्रव )—दुगुना ( दो प्रस्थ ), मण्ड ( दही का तोड़ ) चौगुना ( चार प्रस्थ, ) तथा पंचकोल ( पीपर, पिपरामूल, चव्य, चित्रक, सोंठ ), तालीसपत्र, यवक्षार, सेन्धा-नमक, स्याह जीरा, सफेद जीरा, आमाहल्दी, दारुहल्दी, मरिच—समभाग ( चारपल )—इन द्रव्यों के कल्क को मिलाकर घृत सिद्ध करे। यह घृत, पान करने से गुल्म, प्लीहोदर, आध्मान, पाण्डु रोग, अरुचि, ज्वर, बस्तिशूल, हृदय-शूल, पार्श्वशूल, कटिशूल, ऊरुशूल तथा उदावर्त ( आमाशय या अन्त्रस्थ आनाह ) से उत्पन्न रोगों का नाश करता है। और अर्शनाशक, पाचक, अग्निप्रदीपक, बलवर्धक, कान्तिप्रद तथा भस्मक रोग को दूर करता है॥ २५२–२५५॥

शोफे चित्रकाद्यं घृतम्—

सचित्रकं धान्ययवान्यजाजीसौवर्चलत्र्यूषणवेतसाम्लम्।

---

१. 'शोथघ्नं' इति पा०।

बिल्वोत्पलं दाडिमयावशूकं सपिप्पलीमूलमथापि चव्यम् ॥ २५६ ॥
पिष्ट्वाऽक्षमात्राणि जलाढकेन पक्त्वा घृतप्रस्थमथापि युञ्ज्यात् ।
अर्शांसि गुल्मान्श्वयथु सकृच्छ्रं निहन्ति वह्निं च करोति दीप्तम् ॥२५७॥

शोथ रोग में चित्रकाद्य घृत—चित्रक, धनिया, अजवायन, स्याह जीरा, सौवर्चलनमक, त्र्यूपण ( सोंठ, पीपर, मरिच ), अम्लवेत, बेल का गूदा, नील कमल, अनार, यवक्षार, पिपरामूल, चव्य—एक २ अक्ष—इन द्रव्यों का कल्क, घृत एक प्रस्थ, एक आढ़क जल में मिलाकर पकावे और सिद्ध होने पर प्रयोग में ले। यह घृत अर्श रोग, गुल्म रोग, शोथ तथा मूत्रकृच्छ्र को नाश करता है और उदराग्नि को प्रदीप्त करता है ॥ २५६–२५७ ॥

प्लीह्नि तृतीयं रोहीतकघृतम्—

रोहीतकत्वचः श्रेष्ठात्पलानां पञ्चविंशतिम् ।
कोलद्विप्रस्थसंयुक्तां कषायमुपकल्पयेत् ॥ २५८ ॥
पालिकैः पञ्चकोलैश्च तैः सर्वैश्चापि तुल्यया ।
रोहीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥ २५९ ॥
शमयेत् प्लीहवृद्धिं च सर्पिराशु प्रयोजितम् ।
तथा गुल्मज्वरश्वासकृमिपाण्डुत्वकामलाः ॥ २६० ॥

प्लीहा वृद्धि में तृतीय रोहीतक घृत—उत्तम रोहीतक ( रोहेड़ा ) की छाल पच्चीस पल, बेर दो प्रस्थ मिलाकर चौगुने जल मे क्वाथ करे, चतुर्थांश शेष क्वाथ मे पंचकोल ( पीपर, पिपरामूल, चव्य, चित्रक, सोंठ ) सभी एक २ पल, रोहीतक की छाल एक पल—इन द्रव्यों के कल्क के साथ घृत एक प्रस्थ पकावे। यह घृत सेवन करने से प्लीहा वृद्धि को शीघ्र ही शान्त करता है तथा गुल्म रोग, ज्वर, श्वास, कृमिरोग, पाण्डु रोग कामला ( पीलिया ) रोग को भी शान्त करता है ॥ २५८–२६० ॥

कुष्ठे गुग्गुलुपञ्चतिक्तकं घृतम्—

निम्बामृतावृषपटोलनिदिग्धिकानां
भागान्निमान्दशपलान्विपचेद्घटेऽपाम् ।
अष्टांशशेषितशृतेन पुनश्च तेन
प्रस्थं घृतस्य विपचेत् पिचुभागकल्कैः ॥ २६१ ॥
पाठाविडङ्गसुरदारुगजोपकुल्या-
द्विक्षारनागरनिशामिशिचव्यकुष्ठैः ।

१. 'रसेन' इति पा० ।

तेजस्वतीमरिचवत्सकदीप्यकाग्नि-
रोहिण्यरुष्करवचाकणमूलयुक्तैः ॥ २६२ ॥
मञ्जिष्ठयाऽतिविषया विषया यवान्या
संशुद्धगुग्गुलुपलैरपि पञ्चसंख्यैः ।
तत्सेवितं विधुवति प्रबलं समीर
सन्ध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक् ॥ २६३ ॥
नाडीव्रणार्बुदभगन्दरगण्डमाला-
जत्रूर्ध्वसर्वगदगुल्मगुदोत्थमेहान् ।
यक्ष्मारुचिश्वसनपीनसशोफकास-
हृत्पाण्डुरोगमदविद्रधिवातरक्तम् ॥ २६४ ॥

कुष्ठ रोग में गुग्गुलु पञ्चतिक्त घृत—नीम, गुडूची, अडूसा, परवल का पत्ता, भटकटैया दश २ पल—इन द्रव्यों को यवकुट कर एक द्रोण जल में क्वाथ करे अष्टमांश शेष क्वाथ में फिर घृत एक प्रस्थ, पाठा, विडंग, देवदारु, गजपीपर, पीपर, सज्जीखार, यवक्षार, सोंठ, हल्दी, मिशि ( जटामांसी ), चव्य, कूठ, तेजबल, मरिच, कोरैया, अजमोदा, चित्रक, मांसरोहिणी, अरुष्क (शु० भल्लातक), वच, पिपरामूल, मंजीठ, अतीस (विषा), अजवायन—एक २ कर्ष—इन द्रव्यों के कल्क तथा शुद्ध गुग्गुलु पाँच पल के साथ पकावे । यह घृत सेवन करने से प्रबल वात रोग और सन्धिगत, अस्थिगत तथा मज्जागत भी कुष्ठ रोग का नाश करता है । इसी प्रकार नाडीव्रण ( नासूर ), अर्बुद, भगन्दर, गण्डमाला, जत्रूर्ध्व सर्वगद ( गले के ऊपर के सभी रोग, कर्ण, आँख, कान, नासिका, गला के रोग आदि), गुल्म रोग, अर्श रोग, प्रमेह, यक्ष्मा, अरुचि, श्वास, पीनस, शोथ, कास, हृदय रोग, पाण्डु रोग, मद ( मदजन्य रोग ), विद्रधि तथा वातरक्त को भी नाश करता है ॥ २६१–२६४ ॥

शीतकल्याणकं घृतम्—

कुमुदं पद्मकोशीरं गोधूमा रक्तशालयः ।
मुद्गपर्णी पयस्या च काश्मरी मधुयष्टिका ॥ २६५ ॥
बलातिबलयोर्मूलमुत्पलं तालमस्तकम् ।
विदारी शतपत्री च शालपर्णी स जीवकः ॥ २६६ ॥
फलं त्रपुसबीजानि प्रत्यग्रं कदलीफलम् ।
एषामर्धपलान् भागान् गव्यं क्षीरं चतुर्गुणम् ॥ २६७ ॥
पानीयं द्विगुणं दत्त्वा घृतप्रस्थं विपाचयेत् ।
प्रदरे रक्तगुल्मे च रक्तपित्ते हलीमके ॥ २६८ ॥
बहुरूपं च यत्पित्तं कामलां च सशोणितम् ।

अरोचके ज्वरे जीर्णे पाण्डुरोगे मदे भ्रमे ॥ २६९ ॥
तरुणाश्चानपत्या ये या च गर्भं न विन्दति ।
अहन्यहनि च स्त्रीणां भवति प्रीतिवर्धनम् ॥ २७० ॥
शीतकल्याणकं नाम परमुक्तं रसायनम् ।

शीत कल्याणक घृत—कुमुद, पद्मक ( कमल ) खश, गेहूँ, लाल चावल, मुद्गपर्णी, पयस्या ( क्षीरकोकाली ), गम्भारी, जेठी मधु, वरियार तथा कंघी का मूल, नीलकमल, ताडका मज्जा, विदारीकन्द, गुलाब का फूल, सरिवन, जीवक, फल ( मदन फल ), त्रपुस बीज ( खीरा का बीज ), केला का फूल—आधा २ पल—इन द्रव्यों का कल्क, गाय का दूध चार भाग ( चार प्रस्थ ), जल दो भाग ( दो प्रस्थ ), घृत एक प्रस्थ मिलाकर सिद्ध करे। यह शीत-कल्याणक नामक घृत प्रदर, रक्तगुल्म, रक्तपित्त, हलीमक, अनेक प्रकार के पित्त रोग, तथा रक्तपित्त, कामला रोग, अरोचक, ज्वर, पुराना पाण्डु रोग, मद ( मदजन्य रोग ), भ्रम ( मूर्च्छा )—इन रोगों में उत्तम रसायन है ( अर्थात् ) इन रोगों को दूर करने वाला है और जो सन्तानरहित तरुण और गर्भ न धारण करने वाली स्त्री है उनको आपस में प्रतिदिन प्रीति बढ़ाने वाला तथा सन्तानोत्पादक है ॥

हिक्काश्वासे शठ्याद्यं घृतम्—

शटिर्वचाऽभया कुष्ठं पिप्पली बिल्वशुण्ठिका ॥ २७१ ॥
पलांशं सैन्धवं चव्यं तेजस्वत्यथ पुष्करम् ।
सौवर्चलं च भूधात्री भूतीकं चाक्षसंमितम् ॥ २७२ ॥
हिङ्ग्वर्धकर्षकोपेतं घृतप्रस्थं विपाचयेत् ।
चतुर्गुणं जलं चात्र दत्त्वा मृद्वग्निना भिषक् ॥ २७३ ॥
ग्रहण्यर्शोहितं कासहिक्कोरःपार्श्वशूलनुत् ।
श्वासान् सन्धिगतांश्चान्यान् हन्याद्वातकफामयान् ॥ २७४ ॥

हिक्का-श्वास में शठ्याद्य घृत—शटी ( कपूरकचरी ), वच, हर्रे, कूठ, पीपर, बेल-सोंठ, परास का फूल, सेंधानमक, चव्य, जोतिष्मती, पुष्करमूल, सौवर्चल नमक, भुइं आंवला, भूतीक ( गन्धतृण )—एक २ अक्ष ( कर्ष )—इन द्रव्यों का कल्क, हिंगु आधा कर्ष, घृत एक प्रस्थ—इन सभी द्रव्यों को मिलाकर चौगुने ( चार प्रस्थ ) जल में मन्द आंच से पकावे। यह घृत, ग्रहणी दोष तथा अर्श रोग के लिये हितकारक है और कास, हिक्का, उरःशूल तथा पार्श्वशूल का नाश करता है। श्वास रोग, सन्धिगत तथा अन्य वात-कफ-जन्य रोगों का भी नाश करता है ॥ २७१–२७४ ॥

नारसिंहं घृतम्—

वह्निर्भल्लातकं चैव शिशपा खदिरस्तथा ।
हरीतकी विडङ्गानि जीवकश्च तथाऽक्षकः ॥ २७५ ॥
एषामाहृत्य भागांस्तु सम्यग्दशपलोन्मितान् ।
जलद्रोणयुतान् कृत्वा लोहभाण्डे निधापयेत् ॥ २७६ ॥
लोहभाण्डे पचेत्तावद्यावत्पादावशेषितम् ।
क्वाथं लोहस्थितं कृत्वा स्थापयेद्दिवसत्रयम् ॥ २७७ ॥
त्रिगुणं तु शतावर्या रस धात्र्याश्च निःक्षिपेत् ।
निःक्षिपेत्त्रिगुणं चात्र भृङ्गराजरसं शुभम् ॥ २७८ ॥
छागक्षीरं च तत्रैव त्रिगुणं च सुयोजयेत् ।
पक्त्वा घृताढक तेन मधुना सितयाऽथवा ॥ २७९ ॥
गुडेन वा पिबेत्सार्ध केवलं वा पलोन्मितम् ।
न किंचित्परिहार्यं स्याद्वातातपनिषेविणाम्[1] ॥ २८० ॥
अजीर्णे पिबतश्चापि वनितासेविनस्तथा ।
नान्धता नाग्निहानिश्च न वलीपलितं भवेत् ॥ २८१ ॥
अनेन च भवत्याशु नरः[2] सिंहपराक्रमः ।
भवत्यश्वजवश्चैव हेमवर्णश्च जायते ॥ २८२ ॥
कान्ताऽपि सेविता तेन गुणैरेतैश्च युज्यते ।
नारसिंहमिति ख्यातं घृतं बलविवर्धनम् ॥ २८३ ॥

नारसिंह घृत—चित्रक, शु० भल्लातक, शीशम, खदिर, हरें, विडंग, जीवक, बहेड़ा दश २ पल इन द्रव्यों को लेकर, एक द्रोण जल में मिलाकर लोहे के बर्तन में पकावे, चतुर्थांश शेष क्वाथ को लोहे के पात्र मे भर कर तीन दिन तक रक्खे, और उसमें शतावरी का रस तीन गुना ( तीन आढक ), आँवला का रस तीन गुना ( तीन आढ़क ), भृग राज का रस तीन गुना (तीन आढ़क) तथा बकरी का दूध तीन गुना ( तीन आढ़क ) मिला दे, इसके बाद इस द्रव द्रव्य में एक आढ़क घृत मिलाकर पकावे । इस सिद्ध घृत को मधु, शर्करा या गुड के साथ या केवल एक पल की मात्रा में पान करे । वायु तथा धूप सेवन करने वालों के लिये, इस घृत के प्रयोग काल मे कोई भी चीज अपथ्य नहीं है । अजीर्ण मे ( भोजन के अपरिपाक काल में ) पान करने वाले तथा स्त्री प्रसंग करने वालों को, अन्धता-उदराग्नि नाश, तथा वली-पलित ( मुख में झुर्री पड़ना, असमय में वालपकना ) नहीं होता है । इस घृत को सेवन

---

१. 'निषेवणम्' इति पा० ।  २ नरसिंहवपुर्नरः' इति पा० ।

करने से मनुष्य सिंह के समान पराक्रम वाला हो जाता है और घोड़े के समान वेग तथा स्वर्ण के समान कान्ति हो जाती है। घृत-सेवन काल में स्त्री-प्रसंग करने पर भी इन गुणों से युक्त होता है। यह प्रसिद्ध नारसिंह नामक घृत बल को अच्छी-तरह बढ़ाने वाला है ॥ २७५–२८३ ॥

विषेऽमृतं घृतम्—

शिरीषस्य त्वचा व्योषं त्रिफला चन्दनोत्पलम् ।
द्वे बले सारिवास्फोटासुरभीनिम्बपाटलाः ॥ २८४ ॥
बन्धुजीवातसीमूर्वावासासुरसवत्सकम् ।
पाठाङ्कोलाश्वगन्धार्कमूलं यष्ट्याह्वपद्मके ॥ २८५ ॥
विशाला बृहती द्राक्षा कोविदारः शतावरी ।
कटभीदन्त्यपामार्गपृश्निपर्णीरसाञ्जनम् ॥ २८६ ॥
शणाश्वखुरकौ श्वेतौ कुष्ठ दारु प्रियङ्गुका ।
विदारी मधुकात्सारः करञ्जस्य फलं वचा ॥ २८७ ॥
रजन्यौ लोध्रमक्षांशान्[1] पिष्ट्वा साध्यं घृताढकम् ।
तुल्याम्बुच्छागगोमूत्रे त्र्याढके तद्विपाचितम् ॥ २८८ ॥
अपस्मारक्षयोन्मादभूतग्रहगरोदरान् ।
पाण्डुरोगान् क्रिमीन् मेहान् सप्लीहोदरकामलान् ॥ २८९ ॥
हनुस्तम्भग्रहादींश्च पानाभ्यञ्जननावनैः ।
हन्यात्संजीवयेच्चापि विषोदधिमृतान्नरान् ॥
अभेद्यममृतं सर्वविषाणां स्याद् घृतोत्तमम् ॥ २९० ॥

विष में अमृत घृत—शिरीष की छाल, व्योष ( सोंठ, पीपर, मरिच ), त्रिफला, ( हर्रे, वहेड़ा, आंवला ), रक्त चन्दन, नील कमल, वरियार, कंघी, सारिवा, आस्फोट ( अपराजिता ), सुरभी ( रास्ना ), नीम, पाढ़ल, बन्धुजीव ( बन्धूक गुलदुपहरिया ), अलसी, मूर्वी ( मोरवेल ), अडूसा, सुरसा (तुलसी), कौरेया, पाठा, अंकोल ( ढेरा ), अश्वगन्धा, मदार की जड, यष्ट्याह्व (जेठीमधु), पद्मकाठ, इन्द्रायण, भटकटैया, वनभंटा, मुनक्का, कोविदार ( कचनार ), शतावरी, कटभी ( किडही ), दन्ती, अपामार्ग, पिठवन, रसाञ्जन, सन, अश्वखुरक श्वेत ( नख, गन्ध द्रव्य विशेष ), कूठ, देवदारु, मालकाँगनी, विदारीकन्द, मुलेठी का सार, करंज का फल, वच, आमाहल्दी, दारुहल्दी, लोध—एक २ अक्ष—इन द्रव्यों का कल्क बनाकर एक आढक घृत, जल, बकरी का मूत्र, गाय का मूत्र सम भाग ( तीन आढ़क )—इन द्रव द्रव्यों मे मिलाकर पकावे।

---

१. 'एषां' इत्यध्याहारः।

यह सिद्ध घृत अपस्मार, क्षय, उन्माद, भूतग्रह, गर ( संयोगजविष ), उदर रोग, पाण्डु रोग, कृमि, प्रमेह, प्लीहोदर ( पुराना प्लीहा वृद्धि ), कामला रोग ( पीलिया ), हनुस्तम्भ ( जवड़ा का जकड़ जाना ) तथा ग्रह दोष को पान, अभ्यञ्जन ( मालिश ), नावन-( नस्य ) करने से नाश करता है और विष से तथा उदधि ( जल ) में डूबकर मरे हुए व्यक्तियों को जीवित कर देता है। यह उत्तम घृत सभी विषजन्य दोषों का नाश करने के लिये, अभेद्य अमृत है। अर्थात् विष दोषों को निस्सन्देह नाश करता है ॥ २८४–२९० ॥

ग्रहण्यामग्निघृतम्—

चतुष्पलं चव्यकचित्रपाठातेजस्विनीपिप्पलीमूलमेदाः ।
दद्याच्च मुस्तात्रिफलं विशुद्धं मुष्टिं समग्रामथ पल्लवानाम् ॥ २९१ ॥
आस्फोटजातीपिचु[1]सप्तपर्णपटोलशाखोटकनक्तमालात् ।
एतानि दद्यादथ कुट्टितानि ह्यधिश्रयेत्ताम्रमये कटाहे ॥ २९२ ॥
सुक्वथितं द्रोणजले तु सम्यक् पादावशिष्टं पुनरुद्धरेत्तत् ।
पलार्धतुल्याऽतिविषा सुभद्रा कल्कीकृतानि द्विपलानि दद्यात् ॥२९३॥
सयावशूकं बिडसैन्धवं च पलानि चत्वारि च पिप्पलीनाम् ।
कल्कैः कषायेण च सिद्धमेतन्मृद्वग्निसिद्धं ह्यवतारयेच्च ॥ २९४ ॥
पिबेच्च जीर्णे तु घृतस्य कर्षं विष्टम्भदोषे द्विगुणं पिबेच्च ।
अनेन सर्वे ग्रहणीविकाराः शाम्यन्ति गुल्माश्च बहुप्रकाराः ॥ २९५ ॥
सर्वाः कृमीणामथ जातयश्च शाम्यन्ति सम्यग्विविधप्रयोगात् ।
पाण्ड्वामयप्लीहगरोद्भवाश्च रोगा न तं भाविन आपतेयुः ॥ २९६ ॥
सेवेत मद्यं पिशितानि चैव विवर्जकः स्यान्मधुतर्पणस्य ।
नाम्ना तदप्यग्निघृतं प्रसिद्धं वह्निं च संदीपयते प्रसह्य ॥ २९७ ॥

ग्रहणी दोष में अग्नि घृत—चव्य, चित्रक, पाठा, तेजबल, पिपरामूल, मेदा, मोथा, त्रिफला – चार २ पल, अपराजिता, चमेली, नीम, छतिवन, परोरा, शाखोटक ( सिहोर ), नक्तमाल ( करंज ) बत्तीस पल—इन द्रव्यों का पत्ता पल—इन द्रव्यों को कूट कर तामा के कड़ाह में रक्खे और एक द्रोण पानी मे पकावे चतुर्थांश शेष क्वाथ में अतीस आधा पल, सुभद्रा ( गम्भारी ), यवक्षार दो-दो पल, विड नमक दो पल, पीपर चार पल—इन द्रव्यों के कल्क के साथ ( एक प्रस्थ ) घृत मन्द आंच से सिद्ध करे और उतार ले। यह घृत एक कर्ष की मात्रा में भोजन के परिपाक हो जाने पर पान करे तथा विदन्ध में दो कर्ष पान करे। इस घृत के पान करने से सभी प्रकार के ग्रहणी दोष तथा सभी

---

1. नामैकदेशेनापि नामग्रहणात् पिचुशब्देनात्र पिचुमर्दो गृह्यते ।

प्रकार के गुल्म रोग शान्त होते है। अच्छी तरह अनेक पथ्य के साथ प्रयोग करने पर सभी प्रकार के कृमिरोग शान्त होते हैं। इस घृत को सेवन करने से पाण्डुरोग, प्लीहा वृद्धि तथा गरजन्य रोग ( संयोगज विषजन्य रोग ) नहीं होते हैं। इस घृत के सेवन काल में मद्य तथा मांस का सेवन करना चाहिए। मधुतर्पण—( मीठी चीजों ) का सेवन नही करना चाहिए। यह प्रसिद्ध अग्नि घृत नामक घृत अवश्य ही अग्नि को प्राप्त करता है ॥ २९१–२९७ ॥

ग्रहण्यां भल्लातकाद्यं घृतम्—

भल्लातकानां द्विपलं पलांशं विदारिगन्धादिकपञ्चमूलम् ।
जलाढके जर्जरितं विपाच्य विस्राव्य पूतं विपचेद्धि कल्कैः ॥ २९८ ॥
रास्ना बिडं सैन्धवयावशूकं विडङ्गकृष्णामधुकं वचा च ।
सविश्वकर्पूर[1]हुताशहिङ्गुरास्नादिभिः पाणितलप्रमाणैः ॥ २९९ ॥
प्रस्थं विपक्वं पयसा समांश घृतस्य योज्यं कफजे विकारे ।
प्लीहोदरे यक्ष्मणि वातरोगे श्वासे सकासे च हितं वदन्ति ॥ ३०० ॥
व्यापन्नवह्नौ कफगुल्मिनां च कण्डूविकारेषु च शस्तमेतत् ।
भल्लातकाख्यं नियमेन पीतं जयेच्च सर्वान् ग्रहणीविकारान् ॥ ३०१ ॥

ग्रहणीरोग में भल्लातकाद्य घृत—शु० भल्लातक दो पल, विदारिगन्धादि और पञ्चमूल ( शालपर्णी, पृश्निपर्णी, वनभंटा, भटकटैया, गोखरू ), एक २ पल इन द्रव्यों को कूट कर एक आढक जल मे क्वाथ करें और चतुर्थांशावशेष क्वाथ को छानकर, उस क्वाथ में, रास्ना, विडनमक, सेन्धा नमक, यवाखार, विडंग, पीपर, मुलेठी, वच, सोंठ, कपूर कचरी, चित्रक, हिंगु एक २ अक्ष—इन द्रव्यों के कल्क के साथ समभाग ( एक प्रस्थ ) दूध मिलाकर एक प्रस्थ घृत पकाये। इस घृत को कफजन्य विकारों मे प्रयोग करे। प्लीहोदर, यक्ष्मा, वातरोग, श्वास तथा कास में हितकर है ( ऐसा कहते है )। कफजन्य, गुल्म रोगियों के मन्दाग्नि मे तथा कण्डू विकार में लाभप्रद है। यह भल्लातक घृत नियमपूर्वक पान करने से सभी ग्रहणी विकारों ( रोगों ) को जीत लेता है ॥ २९८–३०१ ॥

जीर्णज्वरे पिप्पल्याद्यं घृतम्—

पिप्पल्यतिविषाद्राक्षासारिवाबिल्वचन्दनैः ।
कटुकेन्द्रयवोशीरशटीतामलकीघनैः ॥ ३०२ ॥
त्रायमाणास्थिराधात्रीविश्वभेषजचित्रकैः ।
कल्कैरेतैर्घृतं पक्वं विच्छिद्य विषमाग्निताम् ॥ ३०३ ॥

---

1. '० कर्चूर ०' इति पा०।

जीर्णज्वरशिरःशूलगुल्मोदरहलीमकम् ।
क्षयकासान् ससंतापान् पार्श्वशूलमपास्यति ॥ ३०४ ॥

जीर्ण ज्वर में पिप्पल्याद्य घृत—पीपर, अतीस, मुनक्का, सारिवा, बेल, रक्त-चन्दन, कुटकी, इन्द्रयव, खस, कपूरकचरी, तामलकी ( भुइ आंवला ), घन ( मोथा ), त्रायमाणा, स्थिरा ( शालपर्णी ), आंवला, सोंठ, चित्रक—समभाग ( घृत के चतुर्थांश )—इन द्रव्यों के कल्क के साथ ( घृत से चौगुने जल में ) घृत सिद्ध करे । यह विषमाग्नि ( मन्दाग्नि ) को दूर कर जीर्णज्वर, शिरःशूल, गुल्मरोग, उदर रोग, हलीमक, ज्वरसहित क्षयजन्य कास रोग तथा पार्श्व-शूल को दूर करता है ॥ ३०२-३०४ ॥

मायूरघृतम्—

हेमन्तकाले शिशिरे च सेव्य वसन्तकाले च मयूरसर्पिः ।
औष्ण्याद्धि बर्हीं विषभक्षणाच्च वर्षाशरद्ग्रीष्मदिनान्यपास्य ॥३०५॥
आहारजातं हि विहङ्गमस्य कीटाश्च सर्पाश्च सरीसृपाश्च ।
पिपीलिकामत्कुणमक्षिकाश्च तेनोष्णकालेष्वहितो मयूरः ॥ ३०६ ॥
तथैव काले जलदाभिरामे विसृज्य शुक्रं च मदं च बर्हीं ।
कृशत्वमायाति हि हीनतां च शरन्मुखे तेन विवर्जनीयः ॥ ३०७ ॥
अथाऽऽहरेत्स्वस्थमृत वयस्थं निस्तुण्डपत्रान्त्रनख मयूरम् ।
द्विद्रोणमात्रे पयसो निधाय विपाचयेद्भेषजसंप्रयुक्तम् ॥ ३०८ ॥
सश्रावणी ह्यंशुमती यवासः काकोलि (ली) मेदे ऋषभो वयस्था ।
सविश्वदेवा सहदेवसाह्वा सप्तच्छदान्मूलफले बला च ॥ ३०९ ॥
शतावरीजीवकसोमवल्कमेकैकशः स्युः पलसंमिताश्च ।
ततोऽर्धशिष्टे कथिते सुपूते घृताढकं तत्र पुनर्विपाच्यम् ॥ ३१० ॥
एभिस्तु कल्कैः खलु कर्षमानैर्द्रोणेन दुग्धस्य युतैः सुपिष्टैः ।
मुञ्जातकाक्षोडमथात्मगुप्ता वृद्धिस्तथा तामलकी सवीरा ॥ ३११ ॥
प्रियालमज्जा मधुकं तथैव सिद्धं प्रशान्त गतफेनशब्दम् ।
पानेषु भोज्येषु च देयमेतद्भक्ष्येषु नानाप्रभवेषु चैव ॥ ३१२ ॥
मन्दाग्निरेतोविषपीडिताश्च क्षीणक्षताश्चापि कृशातिवृद्धाः ।
कासार्दिताः शोणितपित्तिनश्च पिबेयुरेते शिखिसर्पिरग्र्यम् ॥ ३१३ ॥
वृष्यं च बल्यं च रसायन च सर्वेन्द्रियाणां बलवर्धनं च ।
ओजःस्वरं प्रीणयते च गात्रं विषघ्नमेतद् गरनाशन च ॥ ३१४ ॥
एतेन वृद्धाः कृशदुर्बलाश्च तथैव वागध्वसमाहताश्च ।
प्रक्षीणवीर्याश्च रतिप्रसक्ताः स्त्रियः समागम्य वृषीभवन्ति ॥ ३१५ ॥

१ 'भाराध्व०' इति पा० ।

हिमव्यपाये हिमदग्धपल्लवाः पुनः प्ररोहन्ति यथा महीरुहाः ।
पुनस्तथा यौवनपुष्टिमन्तो नरा भवन्तीह घृतप्रयोगात् ॥ ३१६ ॥

मायूर घृत—वर्षा, शरद् तथा ग्रीष्म ऋतुओं को छोड़ कर, मयूर के उष्ण होने से तथा विष खाने के कारण मायूर घृत को हेमन्तकाल, शिशिर तथा वसन्त काल मे सेवन करना चाहिए। मयूर पक्षी का आहार—कीडा, मकोडा, सांप, सरीसृप ( कुण्डली साप ), चींटी, खटमल तथा मक्खियाँ है अतः गर्मी के दिनों मे मयूर पक्षी अहितकर होता है। इसी प्रकार वर्षा ऋतु मे मयूर पक्षी, वीर्य तथा मद को छोडकर दुर्बल हो जाता है और शरद्ऋतु मे वीर्य-रहित हो जाता है अतः वर्षा ऋतु तथा शरद् ऋतु मे मायूर घृत का सेवन नहीं करना चाहिए।

इसके बाद मायूर घृत बनाने के लिये—तुण्ड ( ठोर ), पांख, अँतडी तथा नखरहित, स्वस्थ, प्रौढ़, मरे हुए मयूर को लेकर दो द्रोण जल मे रख कर, श्रावणी ( मुण्डी ), ज्योतिष्मती, यवासा, काकोली, मेदा, महामेदा, ऋषभ, ( काकडासिंघी ), गुडूची, विश्वेदेवा ( नागबला ), सहदेवसाह्व ( सह-देइया ), छतिवन का मूल तथा फल, वरियार, शतावरी, जीवक, सोमवल्क (कायफर)—एक २ पल—इन औषधियों को मिलाकर पकावे। आधा शेष क्वाथ को छानकर एक आढ़क घृत, एक द्रोण दूध तथा मुञ्जातक ( स्थूल दर्भ ), अखरोट, केवाछ का बीज, वृद्धि, मुइ आंवला, वीरा ( काकोली ), चिरौंजी का मज्जा, मुलेठी—एक २ कर्ष इन—द्रव्यों के कल्क के साथ पकावे। इस प्रकार फेन तथा शब्दरहित सिद्ध घृत को पान, भोज्य तथा अनेक प्रकार के भक्तों ( भोज्य पदार्थों ) में प्रयोग करे। इस घृत को मन्दाग्नि, वीर्य तथा विष से पीडित, क्षीणक्षत, अति कृश, अतिवृद्ध, कासपीडित, रक्तपित्ती, ये रोगी पान करें। यह घृत वीर्यवर्द्धक, बलवर्द्धक, रसायन, सभी इन्द्रियों का बल बढ़ाने-वाला, ओज. ( शक्ति ) तथा स्वर बढानेवाला, शरीर को कान्तिमान बनाने-वाला, विषनाशक तथा गर ( संयोगज विष ) को नाश करता है। इस घृत के सेवन करने से वृद्ध. दुर्बल तथा बलहीन, बोलना ( या भार ) तथा मार्ग श्रम से पीडित, और हीन वीर्यवाले, कामपीड़ित स्त्रियों को प्राप्त कर वृष के समान स्त्री-प्रसग मे समर्थ होते हैं। जिस तरह हेमन्तऋतु के समाप्त हो जाने-पर वर्फ से दग्ध पल्लववाले महीरुह ( वृक्ष ) पुनः बढने लगते है उसी प्रकार, इस घृत के प्रयोग करने से मनुष्य युवावस्था से युक्त हो जाते है ॥२०५–३१६॥

तिमिरे जीवन्त्याद्य घृतम्—

तुलां पचेद्धि जीवन्त्या द्रोणेऽपां पादशेषिते ।
दत्त्वा चतुर्गुणं क्षीरं घृतप्रस्थं विपाचयेत् ॥ ३१७ ॥

प्रपौण्डरीककाकोलीपिप्पलीरोध्रसैन्धवैः ।
शताह्वामधुकद्राक्षासितादारुफलत्रयैः ॥ ३१८ ॥
कार्षिकैर्निशि तत्पीतं तिमिरापहरं परम् ।

तिमिर रोग में जीवन्त्याद्य घृत—जीवन्ती एक तुला, जल एक द्रोण में पकावे, चतुर्थांश शेष क्वाथ में चौगुना ( चार प्रस्थ ) दूध मिलाकर एक प्रस्थ घृत, प्रपौण्डरीक, काकोली, पीपर, लोध्र, सेंधा नमक, सौंफ, मुलेठी, मुनक्का, शर्करा, देवदारु, फलत्रय ( हर्रे, बहेड़ा, आँवला )—एक २ कर्ष इन द्रव्यों के कल्क के साथ सिद्ध करें। यह घृत रात्रि में पान करने से तिमिर रोग को अच्छी तरह नाश करता है।

अपस्मारे पञ्चगव्यं घृतम्—

दशमूलेन्द्रवृक्षत्वङ्मूर्वाभार्गीफलत्रयैः ।
शम्याकश्रेयसीसप्तपर्णापामार्गफल्गुभिः ॥ ३१९ ॥
शृतैः कल्कैश्च भूनिम्बत्रिफलाव्योपचित्रकैः ।
त्रिवृत्पाठानिशायुग्मसारिवाद्वयपौष्करैः ॥ ३२० ॥
कटुकायासदन्त्युग्रानीलिनीक्रिमिशत्रुभिः ।
सर्पिरेभिश्च गोक्षीरदधिमूत्रशकृद्रसैः ॥ ३२१ ॥
साधितं पञ्चगव्याख्यं सर्वापस्मारभूतनुत् ।
चतुर्थकक्षयश्वासानुन्मादांश्च नियच्छति ॥ ३२२ ॥

अपस्मार में पंचगव्य घृत—दशमूल ( बेल की छाल, गम्भारी, पाटला, अरलु, अरणी, शालपर्णी, पृश्निपर्णी, वनभंटा, भटकटैया, गोखरू,), इन्द्रायण की छाल, मूर्वा ( मोरवेल ), भारंगी, त्रिफला ( हर्रे, बहेड़ा, आँवला ), शम्पाक ( अमलतास ), गजपीपर, छतिवन, अपामार्ग, फल्गु ( काष्ठोदुम्बरिकाकठ-डूमर)—समभाग—इन द्रव्यों के क्वाथ तथा चिरायता, त्रिफला, व्योष ( सोंठ, पीपर, मरिच ), चित्रक, निशोथ, पाठा, आमाहल्दी, दारुहल्दी, कृष्णसारिवा, रक्तसारिवा, पुष्करमूल, कुटकी, यास ( धमासा ), दन्ती, वच, नीलवृक्ष, विडंग—इन द्रव्यों के कल्क के साथ गाय का दूध, दही, मूत्र, गोबर का रस मिलाकर गाय का घृत पकावे। यह सिद्ध पञ्चगव्य नामक घृत सभी अपस्मार तथा भूतदोषों को दूर करता है और चातुर्थक, क्षय, श्वास तथा उन्माद को नाश करता है।

विमर्श—इस योग में किसी द्रव्य का परिमाण नहीं दिया है। अतः घृत के चौगुना क्वाथ्य द्रव्य लेकर चतुर्थांश अवशिष्ट क्वाथ, चतुर्थांश कल्क द्रव्य तथा दूध, दही, मूत्र, गोबर का रस—समभाग लेना चाहिये ॥ ३१९–३२२ ॥

ज्वरे महापञ्चगव्यं घृतम्—

दशमूलमपामार्गं त्रिफलां कुटजत्वचम् ।
सप्तपर्णं हरिद्रे द्वे नीलिनीं कटुरोहिणीम् ॥ ३२३ ॥
मुष्ककारग्वधे चैव फल्गुमूलं दुरालभाम् ।
पलांशकान्यपां द्रोणे साधयेत्पादशेषिते ॥ ३२४ ॥
त्रिवृतानिचुले भार्गी श्रेयसी मदयन्तिका ।
पूतिको रोहिषः पाठा दन्ती वह्निस्तथाऽऽढको ॥ ३२५ ॥
किराततिक्तको मूर्वा व्योपं द्वे चापि सारिवे ।
सकषायं घृतप्रस्थमेभिः पिष्ट्वा विपाचयेत् ॥ ३२६ ॥
गव्यं शकृद्रसं क्षीरं तक्रं मूत्रं तथा दधि ।
तदैकध्यं पचेत्सर्पिः सिद्धं चैवावतारयेत् ॥ ३२७ ॥
पञ्चगव्यं महच्चैतद्विख्यातममृतं यथा ।
चातुर्थिकं ज्वरं हन्ति मन्त्रसिद्धो मुनिर्यथा ॥ ३२८ ॥
श्वयथुं पाण्डुरोगं च प्लीहार्शांसि भगन्दरम् ।
उदराणि तथा गुल्मं कामलां चापकर्षति ॥ ३२९ ॥
तस्माद्भिषक् प्रयुञ्जीत विधियुक्तं प्रयोगवित् ।

ज्वर में महापञ्चगव्य घृत—दशमूल (बेल, गम्भारी, पाटला, अरलु, अरणी, शालपर्णी, पृश्निपर्णी, बडी कटेरी, छोटी कटेरी, गोखरू), अपामार्ग, त्रिफला (हर्रे, बहेडा, आँवला), कोरैया की छाल, छतिवन, आमाहल्दी, दारुहल्दी, नीलवृक्ष, कुटकी, मुष्कक (नागरमोथा या मोक्षक वृक्ष), अमलतास, फल्गुमूल (कठूमर की जड), धमासा—एक २ पल—इन द्रव्यों को लेकर एक द्रोण जल में क्वाथ करे। चतुर्थांश शेष क्वाथ में, निशोथ, निचुल (समुद्रफल), भांगरा, गजपीपर, मेंहदी, पूतिकरंज, दूर्वा, पाढ़ी, दन्ती, चित्रक, अरहर, चिरायता, मूर्वा, व्योष (सोंठ, पीपर, मरिच), कृष्णसारिवा, रक्तसारिवा—इन द्रव्यों को (घृत के चौथाई) कल्क के साथ गाय का दही, दूध, मट्ठा, मूत्र तथा गोबर का रस (घृत के बराबर अलग-अलग) मिलाकर गाय का घृत एक प्रस्थ पकावे और सिद्ध होने पर उतार ले। यह महापञ्चगव्य नामक प्रसिद्ध घृत, अमृत के समान है। यह घृत, मन्त्रसिद्धमुनि के समान, चातुर्थिक ज्वर को नाश करता है। शोथ, पाण्डुरोग, प्लीहावृद्धि, अर्शरोग, भगन्दर, उदररोग, गुल्मरोग तथा कामला (पीलिया) रोग को दूर करता है अतः प्रयोग को जाननेवाला वैद्य इस घृत का विधिपूर्वक प्रयोग करे ॥ ३२३-३२९ ॥

बिन्दुसारं घृतम्—

शतावरीबलारास्नादशमूलत्रिकण्टकान् ।
अश्वगन्धासमायुक्तान् कुशकाशसमन्वितान् ॥ ३३० ॥
दर्भेक्षुमूलसंयुक्तान् शरमूलविमिश्रितान् ।
मण्डूक्या च समायुक्तान् द्विपञ्चपलिकाम् भिषक् ॥ ३३१ ॥
पुनर्नवायाः श्वेतायाः शिफां पलशतोन्मिताम् ।
जलद्रोणे प्रयत्नेन पचेत्सम्यक् चतुर्गुणे ॥ ३३२ ॥
निःस्राव्य पादशेषे तु क्वाथमग्नावधिश्रयेत् ।
यवानीपिप्पलीद्राक्षाशुण्ठायष्ट्याह्वसैन्धवान् ॥ ३३३ ॥
द्विपालिकान् विनिःक्षिप्य श्लक्ष्ण पिष्ट्वा विधानतः ।
घृतप्रस्थं पचेत्सम्यक् क्षीरप्रस्थद्वयान्वितम् ॥ ३३४ ॥
प्रस्थेनैरण्डतैलेन गुडत्रिंशत्पलैर्युतम् ।
एतदीश्वरपुत्राणां राज्ञां चैव विशेषतः ॥ ३३५ ॥
स्त्रीसंभोगरतानां च प्राग्भोजनमनिन्दितम् ।
ऊरुशूले कटिस्तम्भे योनिशूले च दारुणे ॥ ३३६ ॥
बस्तिवाते प्रवृद्धे च वातरोगे सुदुःसहे ।
घृतमेतत्प्रशंसन्ति सुकुमारे रसायनम् ॥ ३३७ ॥

बिन्दुसार घृत—शतावरी, बारयार, रास्ना, दशमूली ( बेल, गम्भारी, पाढल, अरलू, अरणी, सरिवन, पिठवन, वनभंटा, भटकटैया, गोखरू ), गोखरू, अश्वगन्धा, कुश, कास, दर्भ ( कुशा का भेद ), गन्ने की जड, शर ( काश की जड ), मण्डूकपर्णी—दश २ पल, श्वेत पुनर्नवा की जड़ एक सौ पल—इन द्रव्यों को चौगुने द्रोण जल ( दो द्रोण पांच प्रस्थ ) में अच्छी तरह पकावे । चौथाई शेष क्वाथ को छानकर पुनः आग पर चढ़ावे । और अजवायन, पीपर, मुनक्का, सोंठ, जेठी मधु, सेन्धा नमक-- इन द्रव्यों को दो २ पल लेकर अच्छी तरह पीसकर कल्क बनाकर छोड दे तथा दो प्रस्थ दूध मिलाकर एक प्रस्थ घृत, एरण्ड तैल एक प्रस्थ तथा गुड तीस पल के साथ अच्छी तरह सिद्ध करे । यह घृत धनी वर्ग तथा विशेष कर स्त्रीसंभोग में आसक्त राजाओं के लिये भोजन के पहले प्रशस्त है । वह घृत ऊरुशूल, कटिस्तम्भ, भयंकर योनिशूल, बढ़े हुए बस्तिवात तथा दुःसहवात रोग में लाभकारक है और सुकुमारों के लिये रसायन है ॥ ३३०—३३७ ॥

कासे दशमूलाद्यं घृतम्—

दशमूल्याढके प्रस्थं घृतस्याक्षसमैः पचेत् ।
पुष्कराह्वशटीबिल्वसुरसाव्योषहिङ्गुभिः ॥ ३३८ ॥

पेयं पयोनुपानं[1] तत्कासे वातकफात्मके ।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च ॥ ३३९ ॥

कासरोग में दशमूलाद्य घृत—दशमूल ( बेल, गम्भारी, पाटला, अरलू, अरणी, शालपर्णी, पृश्निपर्णी, वनभंटा, भटकटैया, गोखरू ) एक आढक ( चार प्रस्थ ), चौगुने ( चार आढक ) जल में क्वाथ कर चतुर्थांशावशिष्ट क्वाथ में घृत एक प्रस्थ, पुष्करमूल, कपूरकचरी, बेल, तुलसी, व्योष ( सोंठ, पीपर, मरिच), हिंगु—एक २ अक्ष—इन द्रव्यों के कल्क के साथ सिद्ध करे । इस घृत को दूध के साथ वात-कफजन्य कास तथा कफ-वातजन्य सभी श्वास रोग में पान करे । ( अर्थात् यह कफवातजन्य कास तथा सभी प्रकार के कफवात-जन्य श्वास रोगों को दूर करता है ) ॥ ३३८–३३९ ॥

रक्तपित्ते कटुकाद्यं घृतम्—

कटुरोहिणिका मुस्ता हरिद्रा वत्सको बला ।
पटोलं चन्दनं मूर्वा त्रायमाणा दुरालभा ॥ ३४० ॥
पिप्पली पर्पटश्चैव भूनिम्बो देवदारुकम् ।
एतैरक्षमितैः सर्पिःप्रस्थं क्षीराढके पचेत् ॥ ३४१ ॥
रक्तपित्तं ज्वरं दाहं श्वयथुं सभगन्दरम् ।
अर्शांस्यसृग्दरं चैव हन्याद्विस्फोटकांस्तथा ॥ ३४२ ॥

रक्तपित्त मे कटुकाद्य घृत—कुटकी, मोथा, हरिद्रा, कोरैया की छाल, वरियार, परोरा का पत्ता, रक्तचन्दन, मूर्वा ( मोरवेल ), त्रायमाणा, धमासा, पीपर, पित्तपापड़ा, चिरायता, देवदारु—एक २ अक्ष—इन द्रव्यों के कल्क के साथ, एक आढक ( चार प्रस्थ ) घृत में एक प्रस्थ घृत सिद्ध करे । यह घृत रक्तपित्त, ज्वर, दाह, शोथ, भगन्दर, अर्शरोग, रक्तप्रदर तथा विस्फोटकों ( झलकई भवानी ) को नाश करता है ॥ ३४०–३४२ ॥

गुल्मे दाधिकं घृतम्—

सुषवी पञ्चमूल्यौ द्वे साश्वगन्धा पुनर्नवा ।
काला छिन्नरुहा चैव रास्ना गोक्षुरको बला ॥ ३४३ ॥
शटी पुष्करमूलं च देवदारुस्तथैव च ।
एषां द्विपलिकान् भागाञ्जलद्रोणे विपाचयेत् ॥ ३४४ ॥
कोलकानां कुलत्थानां माषाणां च यवैः सह ।
प्रस्थं प्रस्थं ततः कृत्वा तस्मिन्नेव समावपेत् ॥ ३४५ ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
दद्यादेभिः समं शुक्तमारनालं तुषोदकम् ॥ ३४६ ॥

---

1. 'पेयानुपानं' इति पा० ।

दाडिमाम्रातकद्रावं मातुलुङ्गरसं तथा ।
दधि देयं चतुर्भागं गर्भमेषां समावपेत् ॥ ३४७ ॥
पुनर्नवोषणं दन्ती त्रीण्येव लवणानि च ।
हिस्रा रास्ना बला चैव यवानी चाम्लवेतसम् ॥ ३४८ ॥
विडङ्गं दाडिमं हिङ्गु ग्रन्थिकं त्रिवृता तथा ।
द्वौ क्षारावजमोदा च पाठा पाषाणभेदकम् ॥ ३४९ ॥
ऊषको वृषको भार्गी श्वदंष्ट्रा हपुषा तथा ।
त्रपुषैर्वारुबीजानि शतावर्युपकुञ्चिका ॥ ३५० ॥
अजाजी चित्रको मूर्वा तुम्बरुर्गजपिप्पली ।
धान्यकं सुरसं चैतान् दद्यादक्षसमान् भिषक् ॥ ३५१ ॥
गर्भेणानेन तत्सिद्धं पाययेत्सर्पिरुत्तमम् ।
पित्तगुल्मं तथा सर्वान् गुल्मानन्यान्व्यपोहति ॥ ३५२ ॥
एकाङ्गसंश्रये पक्षवधे दुष्टे च रेतसि ।
हृद्रोगे ग्रहणीरोगे सर्पिरेतद्यथाऽमृतम् ॥ ३५३ ॥
यक्ष्माणं नाशयत्येतदपस्मारं च नाशयेत् ।
दाधिकं नाम विख्यातमात्रेयानुमतं स्मृतम् ॥ ३५४ ॥

गुल्मरोग में दाधिक घृत—सुषवी ( मंगरैल ), दोनों पञ्चमूल ( बेल, गम्भारी, पाटला, अरलु, अरणी, शालपर्णी, पृश्निपर्णी, बड़ी कटेरी, छोटी कटेरी, गोखरू ), अश्वगन्धा, पुनर्नवा, काला ( मगरैल ), गुडूची, रास्ना, गोखरू, वरियार, कपूरकचरी, पुष्करमूल, देवदारु—दो २ पल—इन द्रव्यों को एक द्रोण जल में पकावे और उसमें वैर, कुल्थी, माष तथा यव एक २ प्रस्थ ( मोटा चूर्ण बनाकर ) मिला दे । चतुर्थांश शेष क्वाथ से घृत एक प्रस्थ तथा शुक्त, आरनाल ( छिलकारहित कच्चे गेहूँ को पकाकर या तीन दिन तक अनुसंधान के द्वारा सिद्ध द्रव ), तुषोदक ( छिलकासहित कच्चे यव के टुकड़ों को जल में तीन दिन तक अनुसन्धान विधि से सिद्ध किया हुआ द्रव भाग ), अनार का रस, आमड़ा का रस, विजौरा नीबू का रस—समभाग तथा दधि घृत के चौगुना मिलाकर, पुनर्नवा, ऊषण ( मरिच ), दन्ती ( वाकुची ), सेन्धा, सौवर्चल तथा विडनमक, हिस्रा ( हैस ), रास्ना, वरियार, अजवायन, अम्लवेंत, विडग, अनार, हींग, पिपरामूल, निशोथ, सज्जीखार, यवाखार, अजमोदा, पाठा, पाषाणभेद, ऊषक (क्षारमृत्तिका—रेह), अडूसा, भांगरा, श्वदंष्ट्रा (गोखरू), हाऊवेर, त्रपुष बीज ( खीरा का बीज ), एर्वारु बीज ( ककड़ी का बीज ), शतावरी, मगरैल, स्याह जीरा, चित्रक, मूर्वा ( मोरवेल ), तुम्बरु, गजपीपर, धनिया, तुलसी एक २ अक्ष-इन द्रव्यों के कल्क के साथ घृत सिद्ध करे और

इस उत्तम घृत को पान कराये। यह घृत पित्त गुल्म तथा अन्य सभी गुल्मों को नाश करता है और एकांग-आश्रित, पक्षाघात, दुष्ट वीर्य दोष, हृदय रोग-तथा ग्रहणी रोग में अमृत के समान है। यक्ष्मा तथा अपस्मार को नाश करता है। यह प्रसिद्ध दाधिक नामक घृत आत्रेय महर्षि का निर्मित कहा गया है॥ ३४३–३५४॥

गुल्मे लशुनघृतम्—

तुलां लशुनकन्दानां पृथक् पञ्चपलांशकान्।
त्र्यूषणत्रिफलाहिङ्गुयवानीचव्यचित्रकान्॥ ३५५॥
साम्लवेतससिन्धूत्थदेवदारून् पचेज्जले।
तेन पक्वं घृतप्रस्थं गुल्मवातविकारनुत्॥ ३५६॥

गुल्म रोग में लशुन घृत—लहशुन का कन्द एक तुला, त्र्यूषण (सोंठ, पीपर, मरिच), त्रिफला (हर्रे, बहेडा, आंवला), हिंगु, अजवायन, चव्य, चित्रक, अम्लवेत, सैन्धानमक तथा देवदारु पांच २ पल लेकर (चौगुने) जल में पकावें चतुर्थांश शेष क्वाथ के साथ एक प्रस्थ घृत सिद्ध करे। यह घृत गुल्म रोग तथा वात विकारों को नाश करता है॥ ३५५–३५६॥

गुल्मे महाषट्पलं घृतम्—

नागरस्य तुलार्धं तु जलद्रोणे विपाचयेत्।
चतुर्भागावशेषं तु कषायमवतारयेत्॥ ३५७॥
शुक्तेन मस्तुना चैव दाडिमैर्बदरोदकैः।
चतुर्गुणैर्द्रवैरेतैर्घृतप्रस्थं विपाचयेत्॥ ३५८॥
सौवर्चलं विडं चैव पौतिकं चोषकस्तथा।
अजाजी पिप्पली चैव ह्यजगन्धा यवाग्रजः॥ ३५९॥
सैन्धवं पञ्चकोलं च हिङ्गु चौद्भिदमेव च।
एतैः पलार्धकैर्द्रव्यैः शनैर्मृद्वग्निना पचेत्॥ ३६०॥
कृमिप्लीहोदराजीर्णज्वरगुल्मप्रमेहकान्।
वातरोगानशेषांश्च हिक्कां शूलमरोचकम्॥ ३६१॥
पाण्डुरोगं प्रतिश्यायं दौर्बल्यं वह्निसंक्षयम्।
महाषट्पलसातङ्कान् भिनत्त्यशनिवद् गिरिम्॥ ३६२॥

गुल्म रोग में महाषट्पल घृत—सोंठ आधा तुला (पचास पल) एक द्रोण जल में पकावे, और चतुर्थांश शेष क्वाथ छान कर इस कषाय में शुक्त, मस्तु (दही का तोड), अनार का रस, बैर का रस इन द्रव्यों के चौगुने रस को मिलाकर एक प्रस्थ घृत, सौवर्चल नमक, विडनमक, पौतिक (पूतिकरंज), ऊषक (क्षार मृत्तिका—रेह,), स्याह जीरा, पीपर, अजगधा (अजमोदा)

यवाखार, सेन्धानमक, पञ्चकोल ( पीपर, पिपरामूल, चव्य, चित्रक, सोंठ ), हिंगु, औद्भिदनमक—आधा २ पल—इन द्रव्यों के कल्क के साथ मन्द आंच से सिद्ध करे। यह महापट्पल नामक घृत, कृमि रोग, प्लीहोदर, अजीर्ण, ज्वर, गुल्म रोग, प्रमेह, सभी प्रकार के वात रोग, हिक्का ( हिचकी ), शूल, अरोचक, पाण्डु रोग, प्रतिश्याय, दौर्बल्य, मन्दाग्नि तथा अनेक रोगों के उपद्रवों को नष्ट करता है जैसे इन्द्र का वज्र पर्वतको नष्ट कर देता है ॥ ३५७–३६२ ॥

उन्मादे कल्याणकं घृतम्—

विशाला त्रिफला कौन्ती देवदार्वेलवालुकम् ।<br>
स्थिराऽनन्ता हरिद्रे द्वे सारिवे द्वे प्रियङ्गवः ॥ ३६३ ॥<br>
नीलोत्पलं च मञ्जिष्ठा दन्ती दाडिमवल्कलम् ।<br>
तालीसपत्रं बृहती मालत्याः कुसुमं त्रुटिः ॥ ३६४ ॥<br>
विडङ्गं पृश्निपर्णी च कुष्ठं चन्दनपद्मके ।<br>
अष्टाविंशतिभिः कल्कैरेतैरक्षप्रमाणकैः ॥ ३६५ ॥<br>
चतुर्गुणं जलं दत्त्वा घृतप्रस्थं विपाचयेत् ।<br>
अपस्मारे ज्वरे कासे शोषे मन्देऽनले क्षये ॥ ३६६ ॥<br>
वातरक्ते प्रतिश्याये तृतीयकचतुर्थके ।<br>
वम्यर्शोमूत्रकृच्छ्रे च विसर्पोपहतेषु च ॥ ३६७ ॥<br>
कण्डूपाण्ड्वामयोन्मादविषेष्वसृग्दरेषु च ।<br>
भूतोपहतचित्तानां गद्गदानामचेतसाम् ॥ ३६८ ॥<br>
शस्तं स्त्रीणां च वन्ध्यानां धन्यमायुर्बलप्रदम् ।<br>
अलक्ष्मीपापरोगघ्नं सर्वग्रहनिवारणम् ॥ ३६९ ॥<br>
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ।

उन्माद में कल्याणक घृत—विशाला ( इन्द्रायण ), त्रिफला ( हरें, बहेडा, आंवला ), कौन्ती ( रेणुका बीज ), देवदारु, एलवालु, शालपर्णी, अनन्तमूल, दोनों हल्दी ( आमाहल्दी, दारुहल्दी ), कृष्ण सारिवा, रक्त सारिवा, प्रियंगु ( मालकांगनी ), नीलकमल, मजीठ, दन्ती ( वाकुची ), अनार का छिलका ( अनार के फल का छिलका ), तालीसपत्र, बडी कटेरी, मालती का फूल, त्रुटि (छोटी इलायची), विडंग, पिठवन, कूठ, चन्दन, पद्मकाठ—एक २ अक्ष—इन अट्ठाइस द्रव्यों के साथ चौगुना ( चार प्रस्थ ) जल मिलाकर एक प्रस्थ घृत सिद्ध करे। यह कल्याणक नामक घृत, अपस्मार ( मूर्च्छा ), ज्वर, कास, सूखा रोग, मन्दाग्नि, क्षय, वातरक्त, प्रतिश्याय, तृतीयक ज्वर, चातुर्थिक ज्वर, वमन, अर्शरोग, मूत्रकृच्छ्र, विसर्प रोग ( सारे शरीर में फैलनेवाला क्षुद्र कुष्ठ ), कण्डु, पाण्डु रोग, उन्माद, विषजन्य उपद्रव तथा रक्त-प्रदर मे और भूत दोष

से विक्षिप्त चित्तवाले, हकलाकर बोलनेवाले तथा चेतनाहीन व्यक्ति के लिये प्रशस्त है (अर्थात् उक्त इन रोगों को नाश करता है), वाझ स्त्रियों को सन्तान-प्रद, धन, आयु तथा बल देनेवाला है। दरिद्रता तथा पापजन्य रोगों को नाश करता है। सभी ग्रह-दोषों को दूर करता है और पुंसवन ( पुत्रोत्पादन-शक्ति देने ) में श्रेष्ठ है ॥

उन्मादे द्वितीयं कल्याणकं घृतम्—

सारिवाद्वितयं पर्ण्यौ नतं कुष्ठं निशाद्वयम् ॥ ३७० ॥
दाडिमं चन्दनं व्याघ्री निकुम्भा त्रिफलेन्द्रिका ।
तालीसं पद्मकं चैला मञ्जिष्ठोत्पलदारुकम् ॥ ३७१ ॥
इभोषणा विडङ्गानि प्रियङ्गुश्चाश्मभेदकः ।
यवानी मुकुलं जात्या मुस्तकं कर्षसंमितम् ॥ ३७२ ॥
कल्कैरेषां घृतप्रस्थं सिद्धं कल्याणकं स्मृतम् ।
रक्तपित्तज्वरोन्मादकासकण्डूविनाशनम् ॥ ३७३ ॥

उन्माद में द्वितीय कल्याणक घृत—कृष्ण सारिवा, रक्त सारिवा, शालपर्णी, पृश्निपर्णी, तगर, कूठ, आमाहल्दी, दारुहल्दी, अनार, रक्त चन्दन, भटकटैया, निकुम्भा ( दन्ती ), त्रिफला ( हर्रे, बहेडा, आवला ), इन्द्रिका (इन्द्रवारुणी), तालीसपत्र, पद्मकाठ, इलायची, मजीठ, नील कमल, देवदारु, गजपीपर, पीपर, विडग, फूल प्रियंगु, पाषाणभेद, अजवायन, चमेली का फूल, मोथा—एक २ कर्ष—इन द्रव्यों के कल्क के साथ ( चौगुने जल में ) एक प्रस्थ घृत सिद्ध करे। इस सिद्ध घृत को कल्याणक घृत कहते हैं। यह घृत रक्तपित्त-ज्वर, उन्माद, कास तथा कण्डू को नाश करता है ॥ ३७०–३७३ ॥

उन्मादे तृतीय कल्याणक घृतम्—

विशालैलाधरापद्मदेवदार्वेलवालुकैः ।
द्विसारिवानिशाद्वन्द्वद्विस्थिराफलिनीनतैः ॥ ३७४ ॥
बृहतीकुष्ठमञ्जिष्ठानागकेशरदाडिमैः ।
वेल्लतालीसपत्रैलामालतीकुसुमोत्पलैः ॥ ३७५ ॥
दन्तिपद्मकचन्द्रैश्च कर्षांशैः सर्पिषः पचेत् ।
प्रस्थं भूतग्रहोन्मादकासापस्मारपापनुत् ॥ ३७६ ॥
पाण्डुकण्डूविषे शोषे मेहे मोहे ज्वरे गरे ।
अरेतस्यनपत्ये च देवोपहतचेतसि ॥ ३७७ ॥
अमेधसि स्खलद्वाचि स्मृतिकामेऽल्पपावके ।
बल्यं मङ्गल्यमायुष्यं कान्तिसौभाग्यपुष्टिदम् ॥ ३७८ ॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ।

उन्माद रोग में तृतीय कल्याणक घृत—इन्द्रायण, इलायची, अधरा, पद्म (कमल), देवदारु, एलवालु, कृष्णसारिवा, रक्त सारिवा, आमाहल्दी, दारु-हल्दी, द्विस्थिरा (शालपर्णी, पृश्निपर्णी), फलिनी (प्रियंगु) तगर, बड़ी कटेरी, कूठ, मंजीठ, नागकेशर, अनार, विडंग, तालीसपत्र, बडी इलायची, मालती का फूल, नीलकमल का फूल, दन्ती, पद्मकाठ, चन्द्र (गुडूची)—एक २ कर्ष—इन द्रव्यों के कल्क के साथ (चौगुने—चार प्रस्थ, जल में) घृत एक प्रस्थ सिद्ध करे। यह घृत भूतदोष, ग्रहदोष, उन्माद, कास, अपस्मार तथा पापजन्य रोग को दूर करता है। यह कल्याणक घृत, पाण्डुरोग, कण्डू, विषजन्य रोग, सूखा रोग, प्रमेह, मोह, ज्वर, गर (संयोगज विष) जन्य रोग, वीर्यहीन, सन्तानहीन, देवाक्रान्तचित्त, धारणाशक्तिहीन—एक-एक कर बोलना, स्मरण शक्ति चाहने वाले तथा मन्दाग्नि वाले रोगियों के लिये श्रेष्ठ है (अर्थात्-उक्त रोगों को नाश कर अभीष्ट लाभ देने वाला है)। और बल, कल्याण (रोगनाशक) आयुवर्द्धक, कान्ति—सौभाग्य तथा पुष्टि को देने वाला है तथा पुंसवन (पुंस्त्वाधान) कर्म में श्रेष्ठ है ॥ ३७४–३७८ ॥

उन्मादे महाकल्याणकं घृतम्—

एभ्यो द्विसारिवादीनि जले पक्त्वैकविंशतिम् ॥ ३७९ ॥
रसे तस्मिन्पचेत्सर्पिर्गृष्टिक्षीरं चतुर्गुणम् ।
द्विकाकोलीवरीमेदाकपिकच्छुविषाणिभिः ॥ ३८० ॥
शूर्पपर्णीयुतैरेभिर्महाकल्याणकं परम् ।
बृहणं सन्निपातघ्नं पूर्वस्मादधिकं गुणैः ॥ ३८१ ॥

उन्माद रोग मे महाकल्याणक घृत—ऊपर कहे गये रोगों को दूर करने के लिये—द्विसारिवा आदिक एक्कीस औषधियों को जल में पका कर चतुर्थांश क्वाथ में, चौगुना नवप्रसूता, नयी व्यायी) गाय का दूध मिला कर, काकोली, क्षीर काकोली, शतावरी, मेदा, केवाछबीज, विषाण (मेढ़ासिंघी), शूर्पपर्णी (मुद्गपर्णी)—इन द्रव्यों के कल्क के साथ घृत सिद्ध करे। यह महाकल्याणक घृत अत्यन्त बृंहण (बल-मांसादिवर्द्धक), सन्निपातनाशक तथा पहले के योग से भी गुणों में अधिक लाभप्रद है। (इस योग में किसी भी वस्तु का परिमाण निर्देश नहीं है अतः स्नेहपाक विधि के अनुसार घृत से चौगुना क्वाथ्य द्रव्य, क्वाथ्य द्रव्य से चौगुना जल, चतुर्थांश शेष क्वाथ तथा घृत के चतुर्थांश कल्क द्रव्य लेना चाहिए। नयी व्यायी गाय का दूध घृत के समभाग लेना चाहिए) ॥ ३७९–३८१ ॥

विसर्पे महागौरं घृतम्—

क्षीरवृक्षप्रवालानि कुमुदान्युत्पलानि च ।

सौगन्धिकानि पद्मानि शालूकानि बिसानि च ॥ ३८२ ॥
मृणालकुशकासेक्षुदर्भगुन्द्रेक्षुवालिकाः ।
नलवेतसकुम्भीकनालीसर्जार्जुनस्वनाः ॥ ३८३ ॥
कदलीपत्रशेवालकसेरुघोटकानि च ।
परूषकमधूकानि श्रीपर्ण्यामलकानि च ॥ ३८४ ॥
लामज्जकं विदारी च चन्दनं च शतावरी ।
समङ्गा धातकी रोध्र जीवनीयानि यानि च ॥ ३८५ ॥
शीतवीर्यास्तु ये केचिज्जलजानूपसंश्रिताः ।
एतत्संभृत्य संभारं क्षीरद्रोणेषु सप्तसु ॥ ३८६ ॥
पचेन्निस्राव्य तच्छीतं मन्थानेन विमन्थयेत् ।
यत्ततो जायते सर्पिस्तत्पचेत्पुनरेव तु ॥ ३८७ ॥
द्रव्यैस्तैरेव पूर्वोक्तैः शनैर्मृद्वग्निना भिषक् ।
हन्यादेतद्विसर्पास्तु सर्वधातुश्रितान् व्रणान् ॥ ३८८ ॥
तोयमग्नि यथा दीप्तं नाम्ना गौरं घृतं महत् ।

विसर्प रोग में महागौर घृत—क्षीर वृक्ष ( गूलर ) के मुलायम पत्ता, कुमुद (श्वेत कुइयां), नीलकमल, सौगन्धिक (गन्धपाषाण), पद्म, ( ईषत्, श्वेत कमल ), शालूक ( कमलकन्द ), बिस ( कमल-नाल-तन्तु ), मृणाल, कुश, कास, इक्षु ( गन्ना ), दर्भ ( कुश विशेष ), गुन्द्रा ( गोंद पटेल की जड़ मृदु दर्भ ), इक्षुवालिका ( मृदु गन्ना ), नल ( पोटगल, "नरकट" ), वेंत, जलकुम्भी, नाली ( नालीशाक ), सर्ज ( चीड़ ), अर्जुन, स्वन, केला का पत्ता, सेवार, कसेरू, ( मोथा ), घोटक ( साखू ), फालसा, महुआ, श्रीपर्णी ( गम्भारी ), आंवला, लामज्जक ( दीर्घमूल कमलभेद ), विदारीकन्द, रक्तचन्दन, शतावरी, मंजीठ, धाय का फूल, लोध, जीवनीयगण ( जीवक, ऋषभक, मेदा, महामेदा, काकोली, क्षीरकाकोली, माषपर्णी, मुद्गपर्णी, जीवन्ती, मुलेठी ), शीतवीर्य द्रव्य ( इक्षु, आमला आदि ) जल मे उत्पन्न द्रव्य, निम्न प्रदेश मे उत्पन्न द्रव्य, इन सभी द्रव्यों को ( अधिक से अधिक उपलब्ध द्रव्यों को ), एकत्र कर सात द्रोण दूध से पकावे और उस दूध को छान कर मथनी से मथ कर घृत निकाले। इस घृत को पूर्वोक्त द्रव्यों के कल्क ( घृत के चौगुना पानी मिला कर ) के साथ पुनः धीरे २ मन्द आंच से सिद्ध करे। यह महागौर नामक घृत सर्व धातुगतविसर्प तथा व्रणों को नाश करता है। जैसे जल प्रदीप्त अग्नि को शान्त कर देता है।

सप्ताङ्ग घृतम्—

शङ्खपुष्पीगुडूच्युग्राशतावर्यर्कवल्लिकाः ॥ ३८९ ॥

मलपूं ब्रह्मसोमां च कल्कीकृत्य घृतं पचेत् ।
दुग्ध चतुर्गुणं दत्त्वा वातश्लेष्महरं च तत् ।
मेधाकरं तथाऽऽयुष्यं सप्ताङ्गमिति कीर्तितम् ॥ ३९० ॥

सप्ताङ्ग घृत—शंखपुष्पी, गिलोय, वच, शतावरी, अर्कवल्लिका ( अर्कलता ), मलपू ( काष्ठोदुम्बर ), ब्रह्मसोमा ( ब्राह्मी )—इन द्रव्यों को कल्क बनाकर चौगुने दूध में घृत सिद्ध करे। यह सप्ताङ्ग घृत वातश्लेष्मनाशक तथा मेधा ( धारणाशक्ति ) और आयु को देनेवाला है। ( इस योग मे परिमाण का संकेत नही है। अतः घृत के चतुर्थांश कल्क द्रव्य लेना चाहिए। शेष पूर्ववत् स्नेह पाकविधि के अनुसार घृत सिद्ध करे ) ॥ ३८९-३९० ॥

अष्टाङ्गं घृतम्—

मण्डूकी सवचां सशङ्खकुसुमां ब्राह्मीं गुडूचीं तथा
श्वेतां वाकुचिकां वरीपरियुतां सब्रह्मसौवर्चलाम् ।
कृत्वांऽशैः पलिकैरिमानि विधिवद् द्रव्याणि तैः कल्कितैः
सर्पिःप्रस्थमथाढकेन पयसा युक्त्या पचेद् बुद्धिमान् ॥३९१॥
नाम्नाऽष्टाङ्गमिदं विदेहविहितं ख्यातं घृत यः पिबेत्
स श्लोकस्य सहस्रमेकदिवसे श्रुत्वाऽखिलं धारयेत् ।
अक्षीणप्रतिभः सुचारुवदनः स्पष्टाभिभाषी भवे-
ल्लोके शुक्रबृहस्पतिप्रतिसमः पूज्यश्च राज्ञो भवेत् ॥ ३९२ ॥

अष्टाङ्ग घृत—मण्डूकी ( मण्डूकपर्णी ), वच, शखपुष्पी, ब्राह्मी, गिलोय, श्वेतवाकुची, शतावरी, ब्रह्म सौवर्चला ( हुलहुल )—एक २ पल—इन द्रव्यों को विधिपूर्वक कल्क बनाकर, इस कल्क के साथ घृत एक प्रस्थ, दूध चार—आढक मिलाकर, बुद्धिमान् वैद्य पकावे। इस अष्टाङ्ग नामक विदेह-कथित प्रसिद्ध घृत को जो व्यक्ति पान करता है वह व्यक्ति एक दिन मे एक हजार श्लोक सुनकर सभी श्लोकों को धारण ( याद ) कर लेता है। सुन्दर मुख, क्षीण प्रतिभावाला ( अस्पष्टभाषी ) व्यक्ति साफ २ बोलने लगता है और लोक मे शुक्राचार्य तथा बृहस्पति ( गुरु ) के समान विद्वान् और राजावों का पूज्य हो जाता है ॥ ३९१-३९२ ॥

बालग्रहे फलघृतम्—

बर्हिष्ठकुष्ठमञ्जिष्ठाकटुकैलानिशाद्वयैः ।
तोयदत्रिफलाकौन्तीवाजिगन्धामरुद्रुमैः ॥ ३९३ ॥
वचामेदाजमोदाह्वाकाकोलीयष्टिपद्मकैः ।
सशर्करैर्हितं सर्पिः पक्वं क्षीरचतुर्गुणम् ॥ ३९४ ॥

---

१. 'पलसंमितानि' इति पा० ।

बालानां ग्रहजुष्टानां पुंसां दुष्टाल्परेतसाम् ।
ख्यात फलघृतं स्त्रीणां वन्ध्यानां चापि गर्भदम् ॥ ३९५ ॥

बाल ग्रह से फल घृत—बर्हिष्ट ( दर्भ ), कूठ, मंजीठ, कुटकी, इलायची, आमाहल्दी, दारुहल्दी, तोयद ( मोथा ), त्रिफला ( हर्रे, बहेड़ा, आंवला ), कौन्ती ( रेणुकाबीज ), अश्वगन्धा, मरुद्रुम ( विट्खदिर ), वच, अजमोदा, काकोली, यष्टी ( मुलेठी ), पद्मकाठ, शर्करा—(समभाग)—इन द्रव्यों के कल्क के साथ, चौगुना दूध मिलाकर घृत सिद्ध करें। यह घृत ग्रहपीडित बालकों के तथा दुष्टवीर्य, अल्पवीर्य वाले पुरुषों के लिये हितकर है। यह प्रसिद्ध फल घृत बांझ स्त्रियों को भी गर्भ ( पुत्र ) देनेवाला है ॥ ३९३-३९५ ॥

चतुर्थकज्वरे महापैशाचकं घृतम्—

त्रायमाणा जया वीरा नाकुली गन्धनाकुली ।
कायस्था च वयस्था च चोरकश्च पलङ्कषा ॥ ३९६ ॥
सूकरी जटिला छत्रा सातिच्छत्रा सुमर्कटी ।
मोरटा पूतना केशी स्थिरा कटुकरोहिणी ॥ ३९७ ॥
महापुरुषदन्ता च वृश्चिकाली कुटन्नटा ।
सिद्धमेभिर्घृत पेय चातुर्थकविनाशनम ॥ ३९८ ॥
महापैशाचक नाम सर्पिरेतज्ज्वरापहम् ।
भूतग्रहमपस्मारमुन्मादं च नियच्छति ॥ ३९९ ॥

चातुर्थक ज्वर में महापैशाचक घृत—त्रायमाणा, जयन्ती, वीरा ( क्षीर-काकोली ), नाकुली ( सर्पगन्धा ), कायस्था ( छोटी इलायची ), वयस्था ( गुडूची ), चोरक ( चोरा ), गुग्गुलु, सूकरी ( वाराहीकन्द ), जटिला ( जटामांसी ), छत्रा ( सौंफ ), अतिछत्रा ( सोवा ), सुमर्कटी ( अजमोदा ), पूतना ( हर्रे ), केशी ( गन्धमासी ), शालपर्णी, कुटकी, महापुरुषदन्ता ( शतावरी ), वृश्चिकाली ( मेढासिंघी ), कुटन्नटा ( केवटीमोथा )—इन द्रव्यों के कल्क के साथ ( घृत के चौगुना जल से ) सिद्ध घृत पान करने से चातुर्थिक ज्वर को नाश करता है यह पैशाचिक नामक घृत ज्वर को नाश करता है और भूतबाधा, ग्रहबाधा, अपस्मार तथा उन्माद को दूर करता है। इस योग मे परिमाण-निर्देश नहीं है अत स्नेहपाक-विधिवत् परिमाण-कल्पना करनी चाहिए ॥ ३९६-३९९ ॥

शोषे जीवन्त्याद्यं घृतम्—

जीवन्ती मधुक द्राक्षां फलानि कुटजस्य च ।
शटीं पुष्करमूलं च व्याघ्रीं गोक्षुरकं बलाम् ॥ ४०० ॥
त्रायमाणां च भूधात्रीं नीलोत्पलदुरालभे ।

पिप्पलीं च समं पिष्ट्वा घृतमेभिर्विपाचयेत् ॥ ४०१ ॥
एतद्व्याधिसमूहस्य रोगराजस्य चोच्छ्रितम् ।
एकादशविधं रूपं सर्पिरग्र्यं व्यपोहति ॥ ४०२ ॥

शोथ रोग में जीवन्त्याद्य घृत—जीवन्ती, मुलेठी, मुनक्का, इन्द्रयव, कपूरकचरी, पुष्करमूल, भटकटैया, गोखरू, वरियार, त्रायमाणा, शुद्ध आंवला, नीलकमल, धमासा, पीपर—समभाग—इन द्रव्यों के कल्क के साथ ( घृत के चौगुना जल में ) घृत पकावे । यह घृत ग्यारह प्रकार के उग्र रोग-समूह राजयक्ष्मा को शीघ्र ही दूर करता है । (परिमाण-निर्देश न होने के कारण स्नेहपाकविधिवत् परिमाण-कल्पना करनी चाहिए ) ॥ ४००-४०२ ॥

महातिक्तक घृतम्—

निम्बः सप्तच्छदः पाठा गुडूची सशतावरी ।
कृतमालः करञ्जौ द्वौ खदिरो वत्सको धवः ॥ ४०३ ॥
पर्पटश्च पटोलश्च विशाला चित्रकस्तथा ।
एतानि समभागानि कषायमुपकल्पयेत् ॥ ४०४ ॥
भेषजानि प्रपेष्याणि तत्रेमानि प्रदापयेत् ।
भूनिम्बः कटुका मुस्ता दन्ती पर्पटको वचा ॥ ४०५ ॥
विशालातिविषे मूर्वा यष्ट्याह्वं सारिवाद्वयम् ।
अवल्गुजा हरिद्रे द्वे दुःस्पर्शा रक्तचन्दनम् ॥ ४०६ ॥
कृमिघ्नः पिप्पली पाठा चित्रको देवदारु च ।
भल्लातकान्युशीरं च शम्पाकः सकलिङ्गकः ॥ ४०७ ॥
एतैरक्षसमप्रमाणैस्तु घृतस्यार्धाढकं पचेत् ।
द्विगुणस्तु रसो धात्र्या घृतात्क्वाथश्चतुर्गुणः ॥ ४०८ ॥
सर्पिरेतन्नरः पीत्वा सर्वकुष्ठैर्विमुच्यते ।
वातरक्तं सवीसर्पं रक्तस्रावं च दारुणम् ॥ ४०९ ॥
पित्तासृक्कामलाकण्डूगरान् योगशतैरपि ।
असाधितान् महारोगान् महातिक्तं प्रसाधयेत् ॥ ४१० ॥

महातिक्तक घृत—नीम, छतिवन, पाठा, गिलोय, शतावरी, कृतमाल, ( अमलतास ), करज, पूतिकरंज, खदिर, विटखदिर, कोरैया, धाय का फूल, पित्तपापड़ा, परोरा, इन्द्रायण, चित्रक—समभाग—इन द्रव्यों को लेकर (चौगुने जल में ) कषाय सिद्ध करे । और ( उसमें चतुर्थांश शेष क्वाथ में ) चिरायता, कुटकी, मोथा, दन्ती, पित्तपापड़ा वच, इन्द्रायण, अतीस, मूर्वा ( मोरवेल ), जेठीमधु, कृष्णसारिवा, रक्तसारिवा, वाकुची, आमाहल्दी, यवासा, रक्तचन्दन, विडंग, पीपर, पाठा, चित्रक, देवदारु, शु० भल्लातक, खस, शम्पाक (अमलतास),

इन्द्रयव—एक २ अक्ष—इन द्रव्यों के कल्क के साथ, एक आढक घृत और घृत से दुगुना ( दो आढक ) आवला का रस ( चौगुना क्वाथ चार आढक ) मिला कर पकावे । मनुष्य इस घृत को पीकर सभी प्रकार के कुष्ठों से मुक्त हो जाता है । यह महातिक्तक घृत वातरक्त, वीसर्प ( छलकई माई ), भयंकर रक्तस्राव, रक्तपित्त, कामला, कण्डरोग तथा सैकड़ों ओषधियों से असाध्य महारोगों को भी साधता ( दूर करता ) है ॥ ४०३–४१० ॥

वातव्याधौ दशमूलाद्यं घृतम्—

द्रोणेऽम्भसः पचेद्भागान् दशमूल्याश्चतुष्पलान् ।
यवकोलकुलत्थानां भागैः प्रस्थोन्मितैः सह ॥ ४११ ॥
पादशेषे रसे पिष्टैर्जीवनीयैः सशर्करैः ।
तथा खर्जूरकाश्मर्यद्राक्षाबदरफल्गुभिः ॥ ४१२ ॥
सक्षीरैः सर्पिषः प्रस्थं सिद्धं केवलवातनुत् ।
निरत्ययं प्रयोक्तव्यं पानाभ्यञ्जनबस्तिषु ॥ ४१३ ॥

वात व्याधि मे दशमूलाद्य घृत—दशमूल ( बेल, गम्भारी, पाटला, अरलु, अरणी, शालपर्णी, पृश्निपर्णी, बड़ी कटेरी, छोटी कटेरी, गोखरू )—चार पल, यव, कोल ( बैर ), कुलत्थ—एक २ प्रस्थ—इन द्रव्यों को एक द्रोण जल मे पकावे । चतुर्थांश शेष क्वाथ में जीवनीयगण—जीवक, ऋषभक, मेदा, महा- मेदा, काकोली, क्षीर काकोली, मापपर्णी, मुद्गपर्णी, जीवन्ती, मुलेठी, शर्करा, खजूर, गम्भारी, मुनक्का, बैर, फल्गु ( काष्ठोदुम्बरिका )—इन द्रव्यों के ( घृत से चौथाई ) कल्क तथा घृत के समभाग दूध के साथ एक प्रस्थ घृत सिद्ध करे । यह घृत केवल वात रोग को नाश करता है । इस घृत को प्रतिदिन पान, अभ्यञ्जन (मर्दन) तथा वस्तिकर्म से प्रयोग करना चाहिए ॥४११–४१३॥

कासे बृहत्कण्टकारीघृतम्—

समूलपत्रशाखायाः कण्टकार्या रसाढके ।
घृतप्रस्थं बलाव्योषविडङ्गशटिचित्रकैः ॥ ४१४ ॥
सौवर्चलयवक्षारबिल्वामलकपौष्करैः ।
सैन्धवग्रन्थिपर्णोग्रादेवदारुपयोधरैः ॥ ४१५ ॥
वृश्चीवबृहतीपथ्यायवानीदाडिमर्धिभिः ।
द्राक्षापुनर्नवाचव्यदुरालम्भाम्लवेतसैः ॥ ४१६ ॥
शृङ्गीतामलकीभार्गीरास्नागोक्षुरकैः पचेत् ।
कल्कैश्च सर्वकासेषु हिक्काश्वासेषु शस्यते ।
कण्टकारीघृतं सिद्धं कफव्याधिविनाशनम् ॥ ४१७ ॥

कासरोग में बृहत्कण्टकारी घृत—कण्टकारी (भटकटैया) के मूल, पत्र, शाखा के एक आढक रस में बला, व्योष (सोंठ, पीपर, मरिच), विडंग, कपूरकचरी, चित्रक, सौवर्चलनमक, यवक्षार, बेल, आंवला, पुष्करमूल, सेन्धानमक, ग्रन्थिपर्णी (दूर्वा), वच, देवदारु, मोथा, वृश्चीव (श्वेतपुनर्नवा), वनभंटा, हर्रे, अजवायन, अनार, ऋद्धि, मुनक्का, रक्तपुनर्नवा, चव्य, धमासा, अम्लवेत, काकडा सिंघी, भुइ आंवला, भांगरा, रास्ना, गोखरू—इन द्रव्यों के कल्क (घृत से चतुर्थांश) के साथ एक प्रस्थ घृत सिद्ध करे। यह घृत सभी प्रकार के कास, हिक्का तथा श्वास रोगों में प्रशस्त (लाभप्रद) है। यह सिद्ध कण्टकारी घृत कफ रोगों को नाश करनेवाला है ॥ ४१४–४१७ ॥

व्रणे जात्याद्यं घृतम्—

जातीनिम्बपटोलपत्रकटुकादार्वीनिशासारिवा-
मञ्जिष्ठाभयसिक्थतुत्थमधुकैर्नक्ताह्वबीजैः समैः।
सर्पिः सिद्धमनेन सूक्ष्मवदना मर्माश्रिताः स्राविणो
गम्भीराः सरुजो व्रणाः सगतिकाः शुद्ध्यन्ति रोहन्ति च ॥ ४१८ ॥

व्रण रोग में जात्याद्य घृत—चमेली का पत्ता, नीम का पत्ता, परोरा का पत्ता, कटुकी, दारुहल्दी, आमाहल्दी, सारिवा, मंजीठ, हर्रे, मोम, तूतिया, मुलेठी, नक्ताह्वबीज (करंज का बीज)—समभाग—इन द्रव्यों के कल्क के साथ (चौगुने जल में) घृत सिद्ध करे। इस घृत के प्रयोग करने से छोटे मुख, मर्मगत, स्राव युक्त, गहरा, पीडा युक्त तथा एक स्थान से दूसरे शरीर के हिस्से में बढ़ने वाले व्रणों को शुद्ध करता है तथा रोहण (भरने मे) क्रिया में सहायक होता है। (स्नेहपाक विधि के अनुसार अनुक्त मान की कल्पना कर लेनी चाहिए) ॥ ४१८ ॥

प्रवाहिकायां त्र्यूषणाद्यं घृतम्—

त्र्यूषणं त्रिफलां निम्बं चित्रको गजपिप्पली।
बिल्वं कर्कोटिका हिस्रा विडङ्गानि निदिग्धिका ॥ ४१९ ॥
घृतप्रस्थं पचेदेभिर्गवां मूत्रे चतुर्गुणे।
पीतं प्रयोगतः काले हन्यादेतत्प्रवाहिकाम् ॥ ४२० ॥

प्रवाहिका मे त्र्यूषणाद्य घृत—त्र्यूषण, (सोठ, पीपर, मरिच), त्रिफला (हर्रे, वहेड़ा, आंवला), नीम, चित्रक, गजपीपर, बेल, काकडासिंघी, हिस्रा (हैंस), विडंग, भटकटैया—समभाग—इन द्रव्यों के कल्क (घृत से चौथाई) के साथ घृत से चौगुने गोमूत्र में एक प्रस्थ घृत सिद्ध करे। यह घृत नियमपूर्वक समय पर पान करने से प्रवाहिका को नाश करता है ॥ ४१९–४२० ॥

रक्तपित्ते कसेरुकं घृतम्—

द्राक्षेक्षुकाश्मर्यशतावरीणां तथा विदार्याः स्वरसस्य चैव ।
कसेरुकाणां तु तथा कषायं प्रस्थं पृथक् क्षीरचतुर्गुणं च ॥ ४२१ ॥
घृतं तु वर्या अथ सिन्दुवारात्त्रायन्तिकाया अपि कल्कसिद्धम् ।
प्रायोगिकं सर्पिरुदाहरन्ति कसेरुकं मारुतपित्तघाति ।
विसर्पदाहज्वररक्तपित्ते क्षीणक्षतानां च रसायनं वै ॥ ४२२ ॥

रक्तपित्त में कसेरुक घृत—द्राक्षा, गन्ना, गम्भारी, शतावरी, विदारीकन्द—इन द्रव्यों का स्वरस तथा कसेरुक का कषाय एक २ प्रस्थ (स्वरस न प्राप्त होने पर कषाय बना लेना चाहिए), गायका दूध घृत से चौगुना (चार प्रस्थ), शतावरी, सिन्दुवार, त्रायमाणा का कल्क (घृत मे चतुर्थांश) तथा घृत (दो प्रस्थ) मिलाकर पकावे। यह प्रयोगसिद्ध कसेरुक घृत, वात-पित्तनाशक कहा जाता है और विसर्प, दाह, ज्वर, रक्तपित्त में, तथा उरःक्षत के रोगियों के लिये रसायन है ॥ ४२१–४२२ ॥

नेत्ररोगे द्राक्षाद्यं घृतम्—

द्राक्षा प्रधाना सितशर्करा च राजादनं स्यान्मधुयष्टिका च ।
नीलोत्पलं योजनवल्लिका च काकोलिके पद्मकजीवकौ च ॥ ४२३ ॥
द्व्यक्षप्रमाणैर्विपचेद् घृतस्य प्रस्थं समग्रं पयसा च तुल्यम् ।
नेत्रास्रराजीपटलानि काचमश्रुप्रसेकं तिमिरं च हन्ति ।
दृष्टिप्रसादं च परं करोति शिरोर्धरोगे च हितं नराणाम् ॥ ४२४ ॥

नेत्र रोग में द्राक्षाद्य घृत—बडा मुनक्का, शर्करा, चिरौंजी, मुलहठी, नील-कमल, योजन वल्लिका (मजिष्ठा), काकोली, क्षीरकाकोली, पद्म काठ, जीवक दो २ अक्ष इन द्रव्यों के कल्क के साथ एक प्रस्थ घृत, घृत के बराबर दूध मिला-कर पकावे। यह घृत नेत्रस्राव, राजी पटल (पलक के अन्दर मोती के तरह दाना होना), काच (नेत्र दृष्टिभागगत रोग), अश्रु प्रसेक (अश्रु स्राव) तथा तिमिर (दृष्टिमान्द्य) को नाश करता है दृष्टि साफ करता है और मनुष्यों के शिरोर्ध रोग (आधा शीशी) में हितकर होता है। (दूध घृत के बराबर है अतः घृत से तीन गुना पानी मिला लेना चाहिए) ॥ ४२३–४२४ ॥

रक्तपित्ते दाडिमाद्यं घृतम्—

दाडिमं तिन्तिडीकं च नागपुष्पं शतावरी ।
काकोली क्षीरकाकोली विदारी यक्षहस्तकः ॥ ४२५ ॥
बीजपूरकमूलं च राजवृक्षात्मगुप्तयोः ।
कुष्ठं चेति समैरेतैर्घृतप्रस्थं विपाचयेत् ॥ ४२६ ॥

चतुर्गुणे दुग्धेन जलेनाष्टगुणेन च ।
तत्सर्पिः पिबतः सिद्धं कासश्वासापतानकाः ॥ ४२७ ॥
हृद्रोगो रक्तपित्तं च ह्यचिराद्यान्ति संक्षयम् ।

रक्तपित्त मे दाडिमाद्य घृत—अनार, तिन्तिडीक, नागकेशर, शतावरी, काकोली, चीरकाकोली, विदारीकन्द, एरण्ड मूल, बिजौरा नीबू की जड़, अमलतास, केवाछ बीज, कूठ—समभाग—इन द्रव्यों के कल्क के साथ चौगुना दूध तथा आठ गुना जल मिलाकर, एक प्रस्थ घृत सिद्ध करे। इस घृत का पान करने से कास, श्वास, अपतानक, हृदय रोग तथा रक्तपित्त शीघ्र ही नाश हो जाते है। ( इस योग मे कल्क द्रव्य घृत के चतुर्थांश लेना चाहिए ) ॥

योनिरोगे बृहत्पञ्चमूलाद्यं घृतम्—

पञ्चमूलं बृहद्व्याघ्री त्रिवृदेरण्डकः पलम् ।
प्रत्येकं, तिल्वकस्याथ प्रस्थार्धं प्रस्थमुत्तमा ॥ ४२८ ॥
जलद्रोणे विपाच्यैतद्ग्राह्यं पादावशेषितम् ।
पादशेषे घृतप्रस्थं दध्याढकयुतं न्यसेत् ॥ ४२९ ॥
पलत्रयं यवक्षारकल्कं युक्त्या विपाचयेत् ।
योनिरोगेऽथ गुल्मेषु वर्ध्मेष्वप्युदरेषु च ॥ ४३० ॥

योनिरोग में बृहत्पञ्चमूलाद्य घृत—बृहत्पञ्च मूल ( बेल, गम्भारी, पाटला, अरलु, अरणी ), भटकटैया, निशोथ, एरण्ड—एक २ पल, तिल्वक आधा प्रस्थ, उत्तमा ( दुग्धिका ) एक प्रस्थ—इन द्रव्यों को एक द्रोण जल में पकावे। चतुर्थांश शेष क्वाथ में एक आढ़क ( चार प्रस्थ ) दही, तीन पल यवक्षार मिलाकर घृत एक प्रस्थ सिद्ध करे। यह घृत योनिरोग, गुल्मरोग, वर्ध्म तथा उदर रोगों में हितकर है ॥ ४२८–४३० ॥

अर्शसि पिप्पल्याद्यं घृतम्—

पिप्पलीमरिचहिङ्गुनागर मातुलुङ्गमथ बिल्वशुण्ठिका ।
कुष्ठधान्यकमथाम्लवेतसं क्षारवन्ति लवणानि पञ्च च ॥ ४३१ ॥
तिन्तिडीकमथ कारवी वचा दाडिमं च चविका तथैव च ।
चित्रकं च सपुनर्नवं भवेद्धस्तिपिप्पलियुता ह्यजाजिका ॥ ४३२ ॥
शुक्तिका बदरमूलपौष्कर पत्रकेण सह तुम्बरुः स्मृतः ।
कर्षभागसहितं तथा हरेच्छ्लक्ष्णपिष्टमथ संनयेत्ततः ॥ ४३३ ॥
प्रस्थमत्र तु घृतस्य दापयेद्दध्न एव च भवेत्तथाढकम् ।
सर्वमेतदभिमृश्य शास्त्रतः पाचयेत मृदुनाऽग्निना सुखम ॥ ४३४ ॥
मारुतोपहतगात्रचेतसां पार्श्वपृष्ठहनुजत्रुरोगिणाम् ।

क्षयगरविषदूषितान् मनुष्यान् गतवयसो बलवर्णविप्रयुक्तान् ।
घृतमिदमगदान् करोति सद्यः पवनकृतान् शमयेच्च सर्वरोगान् ॥४३५॥

अर्शरोग में पिप्पल्याद्य घृत—पीपर, मरिच, हिंगु, सोंठ, बिजौरा नीबू, बेल का सोंठ ( बेल का सूखा फल ), कूठ, धनिया, अम्लवेत, सज्जीखार, यवाखार, टंकण क्षार, सेन्धा-सौवर्चल-विड-साभर-सामुद्र नमक, तिन्तिडीक, मंगरैल, वच, अनार, चव्य, चित्रक, पुनर्नवा, गजपीपर, स्याह जीरा, शुक्तिका ( अम्लिका ), बेर, पुष्करमूल, तेजपत्र, तुम्बरु—एक २ कर्ष—इन द्रव्यों को लेकर महीन कल्क बनावे और घृत एक प्रस्थ, दही एक आढक ( चार प्रस्थ )—इन सभी द्रव्यों को एक जगह मिलाकर शास्त्रविधिपूर्वक मन्द-आंच से पकावे । यह घृत वात से उपहत शरीर तथा चित्तवाले, पार्श्व-पृष्ठ-हनु-जत्रु के रोगियों के रोग को, क्षयरोग, गर ( संयोगज विष ) विष से दूषित, वृद्धावस्था वाले, बल तथा वर्ण ( कान्ति ) से रहित मनुष्यों को निरोग करता है और शीघ्र ही वातजन्य सभी रोगों को शान्त करता है ॥४३१–४३५॥

शिरोरोगे मायूरं घृतम्—

दशमूलीबलारास्नात्रिफलामधुकैः सह ।
मायूर पक्षपादान्त्रशकृत्पित्तास्यवर्जितम् ॥ ४३६ ॥
जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत् ।
मधुरैः कार्षिकैर्द्रव्यैः शिरोरोगार्दितापहम् ॥ ४३७ ॥
कर्णनासाक्षिजिह्वास्यगलरोगविनाशनम् ।
मायूरमिति विख्यातमूर्ध्वजत्रुगदापहम् ॥ ४३८ ॥

शिरोरोग में मायूर घृत—दशमूल ( बेल, गम्भारी, पाटला, अरलु, अरणी, शालपर्णी, पृश्निपर्णी, बडी कटेरी, छोटी कटेरी, गोखरू ), बरियार, रास्ना, त्रिफला ( हर्रे, बहेडा, आंवला ), मुलेठी—इन द्रव्यों के साथ पक्ष-पाद-आंत-विड्-पित्त तथा ठोररहित मयूर ( मोर ) के मांस को ( चौगुने ) जल में पकाकर ( चतुर्थांश अवशिष्ट रस में ) घृत के बराबर दूध मिलाकर एक कर्ष मधुर द्रव्यों के साथ घृत सिद्ध करे। यह शिरोरोग तथा अर्दित ( आधे अंग का टेढ़ा होना ) रोग को नाश करता है । कान नाक आँख-जिह्वा-मुख तथा गले के रोगों को नाश करने वाला है । यह प्रसिद्ध मायूर घृत जत्रु के ऊपर ( गले के ऊपर ) के रोगों का नाश करता है ॥ ४३६–४३८ ॥

महामायूर घृतम्—

एतेनैव कषायेण घृतप्रस्थं विपाचयेत् ।
चतुर्गुणेन तोयेन कल्कैरेभिश्च कार्षिकैः ॥ ४३९ ॥

जीवन्तीत्रिफलामेदामृद्वीकर्धिपरूषकैः ।
समङ्गाचविकाभार्गीकाश्मरीसुरदारुभिः ॥ ४४० ॥
आत्मगुप्तामहामेदातालखर्जूरमस्तकैः ।
मधुरापिण्डखर्जूरशृङ्गीजीवकपद्मकैः ॥ ४४१ ॥
शतावरीविदारीक्षुबृहतीसारिवायुतैः ।
पुनर्नवातुगाक्षीरीकाकोलीधन्वयासकैः ॥ ४४२ ॥
मधूकाक्षोटवातामसुञ्जाताभिषुकैरपि ।
द्रव्यैरेभिर्यथालाभं घृतं सम्यग्विपाचयेत् ॥ ४४३ ॥
तत्पक्वं नावनेऽभ्यङ्गे पाने बस्तौ च योजयेत् ।
शिरोरोगेषु सर्वेषु कासे श्वासे च दारुणे ॥ ४४४ ॥
मन्यापृष्ठग्रहे शोषे स्वरभेदे तथाऽर्दिते ।
योनिशुक्रप्रदोषेषु शस्तं बन्ध्यासुतप्रदम् ॥ ४४५ ॥
ऋतुस्नाता तथा नारी पीत्वा पुत्रं प्रसूयते ।
महामायूरमित्येतद् घृतमात्रेयपूजितम् ॥ ४४६ ॥

महामायूर घृत—इन्हीं पूर्वोक्त ( दशमूल, बरियार, रास्ना, त्रिफला, मुलेठी, पक्षादि रहित मयूर-मांस इन द्रव्यों के कषाय से ) द्रव्यों के चौगुनावशिष्ट कषाय तथा जीवन्ती, त्रिफला, मेदा, मुनक्का, ऋद्धि, फालसा, मंजीठ, चव्य, भांगरा, गम्भारी, देवदारु, केवाछ बीज, महामेदा, तालमज्जा, खजूरमज्जा, बेर, पिण्ड खजूर ( छुहाडा ), काकडासिंगी, जीवक, पद्मकाठ, शतावरी, विदारीकन्द, गन्ना, बडी कटेरी, सारिवा, पुनर्नवा, वंशलोचन, काकोली, धमासा, महुआ, अखरोट, बादाम, सुञ्जात ( कन्द विशेष ), अभिषुक ( पिस्ताफल )—एक २ कर्ष—यथाप्राप्त इन द्रव्यों के कल्क के साथ एक प्रस्थ घृत अच्छी तरह सिद्ध करे। इस घृत को नावन ( नस्य ), आंजन, पान तथा वस्ति कर्म में प्रयोग करे। यह घृत सभी प्रकार के शिरोरोग, उग्र श्वास, कास, मन्याग्रह, पृष्ठग्रह, सूखा रोग, स्वर-विकृति, अर्दित ( आधे अंग का टेढ़ होना ), योनिदोष, शुक्रदोष तथा स्वरभेद में प्रशस्त ( इन रोगों को दूर करने वाला ) है और वांझ स्त्री को पुत्र देने वाला है तथा ऋतुमती स्त्री इस घृत को पीकर पुत्र पैदा करती है। यह महामायूर घृत आत्रेय महर्षि द्वारा पूजित है ॥ ४३९–४४६ ॥

अर्शोरोगेऽवाक्पुष्प्याद्यं घृतम्—

अवाक्पुष्पी बला दार्वी पृश्निपर्णी त्रिकण्टकः ।
न्यग्रोधोदुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः ॥ ४४७ ॥
चतुष्प्रस्थे शृतं प्रस्थ कषायमवतारयेत् ।

कल्कार्थं तत्र देया तु जीवन्ती कटुरोहिणी ।
पिप्पली पिप्पलीमूलं मरिचं देवदारु च ॥ ४४८ ॥
कलिङ्गाः शाल्मलीपुष्पं वीरा चन्दनमञ्जनम् ।
कट्फलं चित्रको मुस्ता प्रियङ्ग्वतिविषे स्थिरा ॥ ४४९ ॥
कमलोत्पलकिञ्जल्कः समङ्गा सनिदिग्धिका ।
बिल्वं मोचरसः पाठा ग्राह्यं कर्षसमं पृथक् ॥ ४५० ॥
सुनिषण्णकचाङ्गेर्योः प्रस्थौ द्वौ स्वरसस्य च ।
सर्वैरेभिर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत् ॥ ४५१ ॥
एतदर्शःस्वतीसारे त्रिदोषे रुधिरस्रुतौ ।
प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च ॥ ४५२ ॥
उन्मादे बहुशश्चापि शोफे शूले गुदाश्रये ।
मूत्रग्रहे च मन्देऽग्नौ मूढवातेऽरुचौ तथा ॥ ४५३ ॥
प्रयोज्यं विधिवत्सर्पिर्बलवर्णाग्निवर्धनम् ।
विविधेष्वन्नपानेषु केवलं वा निरत्ययम् ॥ ४५४ ॥

अर्शरोग में अवाक्पुष्प्याद्य घृत—सौंफ, बरियार, दारुहल्दी, पृष्ठिपर्णी, ( पिठवन ), गोखरू, वट, गूलर तथा पीपर का टूसा—दो २ पल, चार प्रस्थ जल में क्वाथ कर अवशिष्ट एक प्रस्थ क्वाथ में, जीवन्ती, भटकटैया, पीपर, पिपरामूल, मरिच, देवदारु, इन्द्रयव, सेमर का फूल, वीरा ( भुइ आंवला ), रक्तचन्दन, अञ्जन, कायफर, चित्रक, मोथा, प्रियंगु, अतीस, शालपर्णी, कमल, नीलकमल का पराग, मंजीठ, भटकटैया, बेल, सेमर का गोंद, पाठा—एक २ कर्ष—इन द्रव्यों के कल्क के साथ, सुनिषण्णक ( गिरआरी "चौपतिया" ) तथा चांगेरी ( अम्लिका "अम्ललोनी–नोना" इति भाषा ) का स्वरस दो प्रस्थ मिला कर घृत एक प्रस्थ पकावे । इस घृत को अर्शरोग, अतिसार, त्रिदोष, रक्तस्राव, प्रवाहिका, गुदभ्रंश, अनेक प्रकार के पिच्छारोग, अनेक प्रकार के उन्माद, शोथ, गुदशूल, मूत्राघात, मन्दाग्नि, मूढवात ( प्रतिलोमवात ) तथा अरुचि में विधिवत् प्रयोग करना चाहिए । यह घृत बल ( मांसादि ), वर्ण ( कान्ति ) तथा उदराग्नि को बढ़ानेवाला है । इसको अनेक प्रकार भोजन तथा पान में प्रयोग करना चाहिए या केवल निर्विघ्न सेवन करना चाहिए ॥ ४४७–४५४ ॥

अपतन्त्रके शुकनासाद्यं घृतम्—

बृहत्यौ शुकनासा च नागवल्ली महौषधम् ।
निचुलश्चैव भार्गी च काकादन्युपचेलिका ॥ ४५५ ॥
वर्षाभूश्चेति तैस्तुल्यैरक्षमात्रैः पचेद्भिषक् ।

तोयाढके घृतप्रस्थं सिद्धं तच्चापि पाययेत् ॥ ४५६ ॥
कासं श्वासं महाहिक्कां हृद्रोगं सापतन्त्रकम् ।
नातिक्रामेदिदं सर्पिर्वेलामिव महोदधिः ॥ ४५७ ॥

अपतन्त्रक रोग में शुकनासाद्य घृत—बड़ी कटेरी, छोटी कटेरी, शुकनासा ( अरलु ), नागवल्ली ( पान का पत्ता ), सोंठ, समुद्रफेन, भांगरा, काकादनी ( कोआठोठी ), उपचेलिका ( या 'पापचेलिका' पाठ ), पुनर्नवा—सम भाग—एक २ अक्ष—इन द्रव्यों के कल्क के साथ एक आढ़क जल में एक प्रस्थ घृत पकावे। तथा इस सिद्ध घृत को पान कराये। इस घृत को कास, श्वास, महाहिक्का ( हिचकी ), हृद्रोग तथा अपतन्त्रक रोग अनिक्रमण नहीं कर सकते ( अर्थात् इस घृत का सेवन करने से ऊपर के रोग रह नहीं सकते ) जैसे समुद्र किनारा को अतिक्रमण नहीं करता है ॥ ४५५–४५७ ॥

उन्मादे चैतसं घृतम्—

श्यामा मधुरसा रास्ना दशमूलं शतावरी ।
श्वदंष्ट्रा शणमूलं च तैर्युक्त्या क्वाथकल्कितैः ॥ ४५८ ॥
साधितं चैतसं नाम घृतं चेतोविकारनुत् ।
उन्मादमदमूर्च्छायज्वरापस्मारभेषजम् ॥ ४५९ ॥

उन्माद रोग में चैतस घृत—काला निशोथ, मुलेठी, रास्ना, दशमूल ( बेल, गम्भारी, पाढल, अरलु, अरणी, शालपर्णी, पृश्निपर्णी, बडी कटेरी, छोटी कटेरी, गोखरू ), शतावरी, गोखरू, शणमूल (सन का जड)—समभाग—इन द्रव्यों के क्वाथ ( घृत से चौगुना क्वाथ्य द्रव्य को चौगुने जल मे पकाकर चतुर्थांश शेष क्वाथ ) तथा ( घृत के चतुर्थांश ) के साथ युक्तिपूर्वक घृत सिद्ध करे। यह घृत चित्तविकार को दूर करता है और उन्माद, मदजन्य उपद्रव, मूर्च्छा, ज्वर तथा अपस्मार का औषध है। ( इस योग में परिमाण का निर्देश नहीं है अतः स्नेहपाक-विधि के अनुसार परिमाण की कल्पना करनी चाहिए ) ॥ ४५८–४५९ ॥

क्षीणक्षते समदुग्धकं घृतम्—

षोडशभिर्जलपात्रैर्मृद्वीकायाः पलानि दश षट् च ।
अष्टौ मधुकपलानि छागान्मांसात्तुलार्धं च ॥ ४६० ॥
अवशिष्टपादतोयं पूतं शीतं कषायमवतार्य ।
दत्त्वा कषायतुल्यं पयोऽथ नवसर्पिषः प्रस्थम् ॥ ४६१ ॥
ऋषभकजीवकमेदाविदारिवीरात्मगुप्तानाम् ।
भव्याक्षोटनिकोचकशृङ्गाटकपद्मबीजानाम् ॥ ४६२ ॥

भागानक्षसमानथ संसाधयेत्तु मृद्वग्नौ ।
सम्यक् सिद्धे तस्मिन् सितशर्करापलान्यष्टौ ॥ ४६३ ॥
मधुनश्च पलान्यष्टौ चत्वारि पलानि पिप्पलीचूर्णात् ।
समदुग्धकघृतमेतज्जनकेश्वरपूजितं समुद्दिष्टम् ॥ ४६४ ॥
क्षीणक्षतेऽल्पशुक्रे तद्रक्तपैत्तिकेषु रोगेषु ।
स्त्रीकामेषु च देयं बल्यं वृष्यं च घृतमेतत् ॥ ४६५ ॥

क्षीणक्षत ( उरःक्षत ) रोग मे समदुग्धक घृत—मुनक्का सोलह पल, मुलेठी आठ पल, बकरी का मांस आधा तुला ( पचास पल ), सोलह पात्र ( सोलह सेर ) जल के साथ पकावे और चतुर्थांश शेष क्वाथ को उतार-छान कर ठंढा होने पर कषाय के बराबर दूध तथा एक प्रस्थ नवीन ( ताजा ) घृत, ऋषभक, जीवक, मेदा, विदारीकन्द, भुइ आंवला, केवाछ का बीज, भव्य ( कर्मरंग वृक्ष "चालता" इति गो० भा० ), अखरोट, निकोचक ( अंकोट "ढेरा" ), सिंघाडा, कमलगट्टा—समभाग—एक २ अक्ष—इन द्रव्यों के कल्क के साथ मन्द आंच से पकावे, अच्छी तरह सिद्ध हो जाने पर सितशर्करा आठ पल, मधु आठ पल, पीपर का चूर्ण चार पल मिला दे। यह समदुग्धक घृत जनक जी के द्वारा पूजित है। यह घृत उरःक्षत, अल्पवीर्य, रक्तपित्त रोग तथा स्त्री को चाहने वाले पुरुषों को देना चाहिए। यह बल्य ( मांसादिवर्द्धक ) तथा वृष्य ( वीर्यादिवर्द्धक ) है ॥ ४६०–४६५ ॥

वातगुल्मे हिङ्ग्वाद्यं घृतम्—

हिङ्गुसौवर्चलव्योषबिडदाडिमदीप्यकैः ।
पुष्कराजाजिधान्याम्लवेतसक्षारचित्रकैः ॥ ४६६ ॥
शटीवचाजगन्धैलासुरसैर्दधिसयुतैः ।
शूलानाहहरं सर्पिः साधयेद्वातगुल्मिनाम् ॥ ४६७ ॥

इति श्रीशोढलग्रथिते गदनिग्रहे प्रयोगखण्डे प्रथमो घृताधिकारः समाप्तः ।

वात गुल्म में हिङ्ग्वादि घृत—हिंगु, सौवर्चल नमक, व्योष ( सोंठ. पीपर, मरिच ), विड नमक, अनार, अजवायन, पुष्करमूल, स्याह जीरा, धनिया, अम्लवेंत, यवाखार, चित्रक, कपूरकचरी वच, अजगंधा ( अजमोदा ), इलायची, तुलसी—समभाग—इन द्रव्यों के कल्क के साथ ( चौगुना ) दही मिलाकर घृत सिद्ध करे। यह घृत वातगुल्म के रोगियों के शूल तथा आनाह को नाश करता है। ( परिमाण कल्पना स्नेहपाक-विधि के अनुसार करनी चहिए ) ॥ ४६६–४६७ ॥

इति शोढल का बनाया हुआ गदनिग्रह नामक ग्रन्थ के
प्रयोग खण्ड में प्रथम घृताधिकार समाप्त ॥

---

## अथातो द्वितीयस्तैलाधिकारः प्रारभ्यते ।

कुष्ठे कटुकालावुतैलम्—

कटुकालावूबीजं द्वे तुत्थे रोचना हरिद्रे द्वे ।
बृहतीफलमेरण्डः सविशालश्छिन्नको मूर्वा ॥ १ ॥
कासीसहिङ्गुव्योपसुरदारुतुम्बरुविडङ्गं च ।
लाङ्गलकी कुटजत्वक् कटुकाख्या रोहिणी चैव ॥ २ ॥
सर्पपतैलं कल्कैर्मूत्रे च चतुर्गुणे गवां साध्यम् ।
कण्डूकुष्ठविनाशनमभ्यङ्गाद्वातकफहन्तृ ॥ ३ ॥

तैल निर्माणप्रकार—तैल के सिद्ध करने के पहले दुर्गन्ध और अन्य दोषों को दूर करने के लिये उसे मूर्च्छित करे । इसके बाद तैल का पाक भी घृत के पाक के समान ही करे । तैल की मूर्च्छा विधि में अन्तर है । तैल सिद्ध करने के लिये, तिल तैल, सरसो तैल तथा अरंडी का तैल लेते हैं । तीनों की मूर्च्छनविधि अलग २ है । तिल के तैल के लिये, मंजीठ, हल्दी, लोध, नागरमोथा, दालचीनी, आंवला, बहेडा, हर्रे, केवडे का फूल तथा वट की जटा का कल्क लेते हैं । मजीठ तथा हल्दी का अलग कल्क बना लेना चाहिए । सरसों के तैल में मंजीठ, हल्दी, आंवला, नागरमोथा, वेल की छाल, अनार की छाल, नागकेशर, काला जीरा, सुगन्धवाला, दालचीनी तथा बहेडा का कल्क मिलावे । एवं एरण्ड तैल की मूर्च्छा के लिये मंजीठ, नागरमोथा, धनिया, त्रिफला, चमेली के पत्ते, सुगन्धवाला, खजूर, वट की जटा, हल्दी, दारुहल्दी, दालचीनी, केवडे का फूल, दही, और कांजी ले ।

मूर्च्छा के लिये तैल चार सेर हो तो मंजीठ चार छटांक ले तथा अन्य द्रव्य एक २ छटांक लेना चाहिए । मंजीठ तथा हल्दी का कल्क अलग बनाना चाहिए और अन्य द्रव्य का कल्क एक साथ बनावे । तैल मूर्च्छित करने के लिये पीतल की कलई की हुई कडाही लेनी चाहिए । मूत्र एवं क्षारीय द्रव्यों से तैल सिद्ध करना हो तो कडाही बड़ी ( अठगुनी ) लेनी चाहिए क्योंकि मूत्र के साथ पाक करने पर उफान अधिक आता है। शेष मूर्च्छन विधि घृत के समान समझना चाहिए ।

तिल तैल, सरसों तैल तथा एरण्ड का तैल ताजा, रोगी की प्रकृति, देश, ऋतु और रोग का विचार कर लेना चाहिए । तैल सिद्ध होने पर, चिकनापन, मूल की वास, और तैल का मूलदोष तीनों दूर हो जाते है और गुण की वृद्धि होती है । तैल स्निग्ध तथा उष्णवीर्य है । सिद्ध तैलों में भी वही गुण रहता है । तैल का प्रयोग वातजन्य रोगों पर ही मुख्यरूप से होता है । सिद्ध तैल, शरीर के वाह्य भाग में मर्दन करने तथा पीने के लिये उपयोग में आता है ।

तैल सिद्ध करने के लिये कल्क, क्वाथ, दूध आदि द्रव्यों को ग्रहण करने का नियम स्नेह परिभाषा में स्पष्ट निरूपण किया जा चुका है। सिद्ध तैल की परीक्षा स्नेह-परिभाषा-प्रकरण निर्दिष्ट नियम के अनुसार करे।

घृत प्रकरण के बाद द्वितीय तैलाधिकार प्रारम्भ करते हैं।

कुष्ठरोग मे कटुकालाबू तैल—कडवी लौकी ( कद्दू ) का बीज, दोनों तूतिया, गोरोचन, आमाहल्दी, दारुहल्दी, बनभंटा का फल, एरण्ड, इन्द्रायण, चित्रक, मूर्वा ( मोरवेल ), कासीस, हिंगु, व्योष ( सोंठ, पीपर, मरिच ), देवदारु, तुम्बरु, विडंग, कलिहारी, कोरैया की छाल, कुटकी—समभाग—इन द्रव्यों के कल्क के साथ सरसों का तैल चौगुने गाय के मूत्र मे पकावे। यह तैल अभ्यङ्ग ( मर्दन ) करने से कण्डू तथा कुष्ठ को नाश करता है और वातकफ-जन्य कुष्ठ विकारों को दूर करता है। इस तैल में मात्रा का निर्देश नहीं किया गया है अतः तैल के चौथाई कल्क द्रव्य लेना चाहिए॥ १–३॥

कुष्ठे मरीचाद्यं तैलम्—

मरीचदारुभद्रश्रीद्विहरिद्रात्रिवृद्घनैः।
पलिकैर्मूत्रपिष्टैस्तु विषस्यार्धपलेन च॥ ४॥
ब्राह्मीरसार्कजक्षीरगोशकृद्रससंयुतम्।
प्रस्थं सर्षपतैलस्य सिद्धमाशु व्यपोहति॥ ५॥
पानाद्यैः शीलितं कुष्ठदुष्टनाडीव्रणापचीः।

कुष्ठरोग में मरीचाद्य तैल—मरीच, देवदारु, भद्रश्री (रक्तचन्दन), आमाहल्दी दारुहल्दी, निशोथ, मोथा—एक २ पल, विष आधा पल—इन द्रव्यों को गाय के मूत्र में पीसकर कल्क बनावे। उसके साथ सरसों का तैल एक प्रस्थ, ब्राह्मी का रस, मदार का दूध, गोबर का रस ( तैल के चौगुना ) मिलाकर पकावे। यह तैल पान, अभ्यङ्ग आदि में प्रयोग करने से कुष्ठ, दुष्टनाडी व्रण ( नासूर ) तथा अपची को नाश करता है॥

वातव्याधौ बलातैलम्—

बलाया जातसारायास्तुलां कुर्यात्सुकुट्टिताम्॥ ६॥
पचेत्तोयचतुर्द्रोणे चतुर्भागावशेषिते।
पलानि दश पिष्टानि बलायास्तत्र दापयेत्॥ ७॥
लुञ्चितानां तिलानां च दद्यात्तैलाढकद्वयम्।
चतुर्गुणेन तोयेन पाचयेन्मृदुनाऽग्निना॥ ८॥
वातव्याधिषु सर्वेषु रक्तपित्ताश्रयेषु च।
व्यापन्नासु च योनिषु शस्तं नष्टे च रेतसि॥ ९॥
तालुशोषं तृषां दाहं पार्श्वशूलमसृग्दरम्।

हन्ति शोपमपस्मारं विसर्पं सशिरोग्रहम् ॥ १० ॥
आयुर्वर्णकरं चैव बलातैलं प्रजाकरम् ।

वातव्याधि में बला तैल—परिपक्व बला ( बरियार ) एक तुला यवकूट कर चार द्रोण जल से क्वाथ करे, चौथाई भाग शेष क्वाथ में दश पल बला का कल्क बनाकर छोड दे, और लुञ्चित ( धोई ) तिल का तैल दो आढक मिलाकर चौगुने जल के साथ मन्द आँच से पकावे । यह बलातैल सभी प्रकार के वात व्याधि, रक्तपित्त, विकृत योनिरोग तथा नामर्दी में प्रशस्त है और तालु का सूखना, ध्यान, दाह, पार्श्वशूल, रक्तप्रदर, सूखारोग, अपस्मार, विसर्प ( झलकई भाई ) तथा शिरोग्रह ( शिर का जकडन ) को नाश करता है । आयु तथा कान्ति को देनेवाला तथा सन्तानोत्पादक है ॥

वातव्याधौ बृहद्बलातैलम्—

तुलां बृहद्बलायास्तु चतुर्द्रोणेऽम्भसः पचेत् ॥ ११ ॥
समुत्तार्य ततः सम्यग्दशभागस्थिते रसे ।
दधिमण्डेक्षुनिर्यासयुक्तैस्तैलाढकं समैः ॥ १२ ॥
पचेत्साजपयोर्धांशैः कल्कैरेभिः पलोन्मितैः ।
शटीसरलदार्वेलामञ्जिष्ठागुरुचन्दनैः ॥ १३ ॥
पद्मकातिबलामुस्ताशूर्पपर्णीहरेणुभिः ।
यष्ट्याह्वसुरसव्याघ्रनखर्षभकजीवकैः ॥ १४ ॥
पलाशरसकस्तूरीनलिकाजातिकोशकैः ।
स्पृक्काकुङ्कुमशैलेयमालतीकट्फलाम्बुभिः ॥ १५ ॥
त्वचाकुन्दुरुकर्पूरतुरुष्कश्रीनिवासकैः ।
लवङ्गनखकङ्कोलकुष्ठमांसीप्रियङ्गुभिः ॥ १६ ॥
स्थौणेयतगरध्यामवचादमनचोरकैः ।
सनागकेशरैः, सिद्धं विधिना च प्रयोजयेत् ॥ १७ ॥
कासं श्वासं ज्वरं छर्दिं शूलं हिक्कां क्षतक्षयम् ॥ १८ ॥
प्लीहं शोपमपस्मारमलक्ष्मीं च प्रणाशयेत् ।
बलातैलमिदं श्रेष्ठं वातव्याधिहरं परम् ॥ १९ ॥

वातव्याधि में बृहद् बला तैल—बृहद् बला ( महाबला "सहदेइया" ) एक तुला, जल चार द्रोण में पकावे । दशमांश शेष क्वाथ में दही, मण्ड, गन्ने का रस, समभाग अलग २ ( तैल के बराबर ), तैल एक आढक, बकरी का दूध आधा आढक ( दो प्रस्थ ) मिलाकर, कल्कार्थ—कपूरकचरी, चीड़, देवदारु, इलायची, मंजीठ, अगर, रक्तचन्दन, पद्मकाठ, अतिबला ( कंघी ), मोथा, सूर्यपर्णी ( मुद्गपर्णी ), रेणुका ( सम्भालू का बीज ), यष्टयाह्व, ( मुलेठी ),

तुलसी, व्याघ्रनख, ऋषभक, जीवक, पलाश-रस, कस्तूरी, नलिका ( प्रवाली ), जातिकोश ( जावित्री ), स्पृक्का ( असवरग ), केशर, शैलेय. ( छड़ीला ), मालती, कायफर, सुगन्धवाला, दालचीनी, कुन्दरु, कपूर, तुरुष्क ( शिलारस ), श्रीवेष्टक ( गन्धाविरोजा ), लवग, नख, कबावचीनी, कूठ, जटामांसी, प्रियंगु, स्थौणेयक ( थुनेर ), तगर, ध्याम ( कत्तृण ), वच, दमन ( दोना ), चोरक ( चोरा ), नागकेशर—एक २ पल—इन द्रव्यों को लेकर इसके कल्क के साथ तैल विधिपूर्वक ( धीरे २ मन्द आंच से ) सिद्ध कर प्रयोग में ले। यह उत्तम बृहद् बला तैल—कास, श्वास, ज्वर, छर्दि ( वमन ), शूल, हिक्का ( हिचकी ), उरःक्षत, प्लीहावृद्धि, सूखारोग, अपस्मार तथा अलक्ष्मी ( दरिद्रता ) को नाश करता है और वातव्याधि को अच्छी तरह शान्त करता है ॥ ११–१९ ॥

वातव्याधौ तृतीयं बलातैलम्—

बलाशतकषाये तु तैलस्यार्धाढकं पचेत् ।
कल्कैर्मधुकमञ्जिष्ठाचन्दनोत्पलपद्मकैः ॥ २० ॥
सूक्ष्मैलापिप्पलीकुष्ठत्वगेलागरुकेशरैः ।
गन्धैश्च जीवनीयैश्च क्षीराढकसमायुतम् ॥ २१ ॥
एतन्मृद्वग्निना पक्वं स्थापयेद्भाजने शुभे ।
सर्ववातविकारांस्तु सर्वधात्वन्तराश्रयान् ॥ २२ ॥
शमयेत्तैलमेतत्तु छिन्नाभ्रमिव मारुतः ।
बलातैलं नरेन्द्रार्हमेतद्वातविकारनुत् ॥ २३ ॥

वातव्याधि में तृतीय बला तैल—बला ( बरियार ) एक सौ पल के कषाय ( सौ पल बला, एक द्रोण जल में क्वाथ करे चतुर्थांश शेष कषाय को ग्रहण करे ) में आधा आढक तैल, कल्कार्थ—मुलेठी, मंजीठ, रक्तचन्दन, नील-कमल, पद्मकाठ, छोटी इलायची, पीपर, कूट, दालचीनी, बडी इलायची, अगर, नागकेशर, गन्धद्रव्य, जीवनीय वर्ग ( जीवक, ऋषभक, मेदा, महामेदा, काकोली, क्षीरकाकोली, माषपर्णी, मुद्गपर्णी, जीवन्ती, मुलेठी )—इन द्रव्यों ( तैल के चतुर्थांश ) को लेकर, इसके कल्क के साथ एक आढ़क ( चार प्रस्थ ), दूध मिलाकर मंद आंच से पकावे और छानकर स्वच्छ वर्तन ( शीशी ) में रख ले। यह बला तैल सभी धातुओं के अन्तर्गत (सभी धातुओं रक्तादि में प्रविष्ट) सभी प्रकार के वातविकारों को शान्त करता है। जैसे वायु मेघ को शान्त कर देता है। यह तैल राजाओं के योग्य है और वातविकारों को नाश करता है ॥ २०–२३ ॥

मूढगर्भे चतुर्थं बलातैलम्—

बलामूलकषायस्य दशमूलीकृतस्य च ।

यवकोलकुलत्थानां क्वाथस्य पयसस्तथा ॥ २४ ॥
अष्टावष्टौ शुभान् भागाँस्तैलादेक तदेकतः ।
मधुरं गणमावाप्य पचेत् सैन्धवसंयुतम् ॥ २५ ॥
अगुरुं सर्जनिर्यासं सरलं देवदारु च ।
मञ्जिष्ठा चन्दनं कुष्ठमेलां कालानुसारिवाम् ॥ २६ ॥
मांसीं शैलेयकं पत्रं तगरं सारिवां वचाम्
शतावरीं चाश्वगन्धां शतपुष्पां पुनर्नवाम् ।
सौवर्णे साधु सिद्धं तद्राजते मृन्मयेऽपि वा ॥ २७ ॥
प्रक्षिप्य कलशे सम्यक् स्वनुगुप्तं निधापयेत् ।
बलातैलमिदं ख्यातं सर्ववातविकारनुत् ॥ २८ ॥
यथाबलमतो मात्रां सूतिकायै प्रदापयेत् ।
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान् ॥ २९ ॥
मथितेऽभिहते धातुक्षीणे मर्महते तथा ।
भग्ने श्रमाभिपन्ने च सर्वथैव प्रयुज्यते ॥ ३० ॥
एतदाक्षेपकादींश्च वातव्याधीनपोहति ।
नरः प्रत्यग्रधातुस्तु भवेत्सुस्थिरयौवनः ॥ ३१ ॥
हिक्कां कासमधीमन्थं गुल्मश्वासं च दुस्तरम् ।
षण्मासान् सम्प्रयुज्यैतदन्त्रवृद्धिं व्यपोहति ॥
राज्ञामेतत्प्रकर्तव्यं राजमात्राश्च ये नराः ।
सुखिनः सुकुमाराश्च धनिनश्चापि ये नराः ॥ ३२ ॥

मृढगर्भ में चतुर्थ बला तैल—खरियार की जड का क्वाथ, दशमूल ( बेल, गम्भारी, पाटला, अरलु, अरणी, शालपर्णी, पृश्निपर्णी, बडी कटेरी, छोटी कटेरी, गोखरू ) का क्वाथ, यव, कोल तथा कुलथी का क्वाथ, दूध—आठ २ भाग ( क्वाथविधि के अनुसार चौगुने जल में क्वथित करने के बाद चतुर्थांश अवशिष्ट क्वाथ ), तैल एक भाग ( छः भाग ), मधुरगण के द्रव्य, सेन्धा नमक, अगर, राल, चीड, देवदारु, मजीठ, चन्दन, कूठ, इलायची, कालानुसारिवा ( तगरमूल ), जटामांसी, शैलेय ( छडीला ), तेजपत्र, तगर, सारिवा, वच, शतावरी, अश्वगन्धा, सौंफ, पुनर्नवा—इन द्रव्यों को मिलाकर तैल सिद्ध करें। और इस तैल को सोने-चाँदी या मिट्टी के घडे में अच्छी तरह भरकर गुप्त ( छिपाकर ) रक्खे। यह प्रसिद्ध बला तैल सभी प्रकार के वातरोगों को नाश करता है। इस तैल को बल के अनुसार मात्रा बनाकर प्रसूता को देना चाहिए। गर्भ को चाहनेवाली स्त्री तथा क्षीणवीर्य पुरुष को भी यह तैल देना चाहिए। मथित, अभिहत, क्षीणवीर्य, मर्महत भग्न ( टूटना ) तथा श्रमाभि-

पन्न ( थकावट से ) को सर्वथा सेवन करना चाहिए, यह तैल आक्षेपक ( शरीर के अधिकांश पेशियों का अकस्मात् तथा प्रबल सिकुड़न ) आदि वात-रोगों को दूर करता है। और मनुष्य रस-रक्तादि अनुलोम धातुओं को प्राप्त कर स्थिर कर यौवन वाला होता है। यह तैल हिक्का ( हिचकी ), कास, अधीमन्थ ( अभिष्यन्दजन्य नेत्र रोग ), गुल्म रोग, असाध्य श्वास रोग तथा छः मास तक प्रयोग करने से अन्त्रवृद्धि को भी दूर करता है। इस तैल का प्रयोग राजा, राजा के समान व्यक्ति, सुखी, सुकुमार तथा धनी व्यक्तियों के लिये करना चाहिए ॥ २४-३२ ॥

वातव्याधौ प्रसारणीतैलम्—

उत्पाट्य मूलपत्राभ्यां जातसारां प्रसारणीम् ।
शतं पलानि संकुट्य कटाहे समधिश्रयेत् ॥ ३३ ॥
वारिद्रोणसमायुक्तं चतुर्भागावशेषितम् ।
कषायसममात्रं तु तैलमत्र प्रदापयेत् ॥ ३४ ॥
शुण्ठीपलानि पञ्चैव रास्नायाश्च पलद्वयम् ।
दध्नस्तथाऽऽढकं दत्त्वा द्विगुणं चाम्लकाञ्जिकम् ।
यवक्षारपले द्वे च सैन्धवस्य पलद्वयम् ॥ ३५ ॥
द्वे पले पिप्पलीमूलाच्चित्रकस्य पलद्वयम् ।
प्रसारणीपले द्वे च द्वे पले मधुकस्य च ॥
एतत्सर्वं समालोड्य शनैर्मृद्वग्निना पचेत् ॥ ३६ ॥
एतदभ्यञ्जनं श्रेष्ठं नस्यकर्मणि शस्यते ।
पाने बस्तौ च दातव्यं न क्वचित्प्रतिहन्यते ॥ ३७ ॥
अशीतिं वातरोगाणां तैलमेतद् व्यपोहति ।
गृध्रसीं सास्थिभङ्गां च मन्दाग्नित्वं च नाशयेत् ॥ ३८ ॥
अपस्मारमथोन्मादं विद्रधिं मन्दगामिताम् ।
त्वग्गताश्चापि ये वाताः सिरासन्धिगताश्च ये ॥ ३९ ॥
जानुगुल्फगताश्चैव पादपृष्ठगताश्च तान् ।
अश्वं वा वातसभग्नं नरं वा जर्जरीकृतम् ॥ ४० ॥
सर्वान् प्रशमयत्येतत्तैलमात्रेयपूजितम् ।
प्रजाकरं च वन्ध्यानामिन्द्रियैश्वर्यकारकम् ॥ ४१ ॥
एतेनान्धकवृष्णीनां बहुपुत्रं कुलं कृतम् ।
तैलं चेदं प्रसारण्या बलमांसविवर्धनम् ॥ ४२ ॥
धन्यं प्रजाकरं श्रेष्ठं वार्धक्ये चापि सेवितम् ।
पङ्गुर्यः पीठसर्पी वा पीत्वैतत्संप्रधावति ॥ ४३ ॥

ग्रहपीडा तथा दूषित रक्त से उत्पन्न रोगों को शान्त करता है, ( यहां क्वाथ्य द्रव्य का परिमाण नहीं दिया है अतः तैल के चौगुना या एक तुला क्वाथ्य द्रव्य लेना चाहिए ) ॥

ज्वरे लघुलाक्षादितैलम्—

लाक्षारसं समादाय तैलप्रस्थाच्चतुर्गुणम् ॥ २६५ ॥
मस्तुनश्चाढकं दद्याद् द्रव्यैरेभिश्च कार्षिकैः ।
मधुकेन हरिद्राभ्यां मुस्तेन सह मूर्वया ॥२६६ ॥
रास्नया कटुरोहिण्या चन्दनेनाश्वगन्धया ।
शताह्वया च कुष्ठेन हरेण्वा देवदारुणा ॥ २६७ ॥
मञ्जिष्ठापद्मकोशीरबलामासीभिरेव च ।
तत्सिद्धमथ पूतं च स्थापयेद् भाजने शुभे ॥ २६८ ॥
जीर्णज्वरपरीतानां श्वासकासार्तिनां तथा ।
गर्भिणीनां च नारीणां बालानां शुष्यतामपि ॥ २६९ ॥
क्षीणानां शोषिणां चाथ तैलं लाक्षादिकं हितम् ।
विषमज्वरमोक्षार्थं सर्वज्वरग्रहापहम् ॥ २७० ॥

ज्वर में लघु लाक्षादि तैल—तैल एक प्रस्थ, तैल के चौगुना लाक्षारस ( चारप्रस्थ ), मस्तु ( दही का तोड ) एक आढ़क ( चार प्रस्थ ), मिलाकर मुलेठी, आमाहल्दी, दारुहल्दी, मोथा, मूर्वा ( मोरवेल ), रास्ना, कुटकी, रक्तचन्दन, अश्वगन्धा, सौंफ, कूठ, सम्भालू का बीज, देवदारु, मंजीठ, पद्मकाठ, खस, खरियार, जटामांसी—एक २ कर्ष—इन द्रव्यों के कल्क के साथ तैल सिद्ध करे और छानकर स्वच्छ शीशी में भर दे। यह लाक्षादिक तैल, जीर्ण ज्वर के रोगी, श्वास-कास से पीडित, गर्भिणी स्त्री, सूखारोग से पीड़ित बालक, क्षीणवीर्य तथा राजयक्ष्मा के रोगियों के लिये हितकर है और विषम-ज्वर को नाश करने वाला तथा सभी प्रकार के ज्वर को दूर करनेवाला है ॥ २६५–२७० ॥

सन्निपातज्वरे जात्यादितैलम्—

नवपत्राङ्कुरा जाती द्वे हरिद्रे शतावरी ।
जीवकर्षभकौ रास्ना सरलो देवदारु च ॥ २७१ ॥
मुस्तातालीशमञ्जिष्ठापाठावरुणचित्रकाः ।
कुब्जं सर्पसुगन्धा च मधुकं द्वे च सारिवे ॥ २७२ ॥
अनन्ताऽऽमलकं मूर्वा मधूकं करवीरकः ।
देवपुष्पं शिरीषस्य मूलं स्योनाक एव च ॥ २७३ ॥
चव्यं लाक्षा पयस्या च कल्कीकृत्याक्षसंमितान् ।

पक्त्वा चाथ कषायेण तैलप्रस्थं विपाचयेत् ॥ २७४ ॥
एतदभ्यञ्जनाद्धन्यात्सन्निपातात्मकं ज्वरम् ।
तैलं जात्यादिकं नाम वातपित्तकफापहम् ॥ २७५ ॥

सन्निपातज्वर में जात्यादि तैल—चमेली का नवीन पत्रांकुर, आमाहल्दी, दारुहल्दी, शतावरी, जीवक, ऋषभक, रास्ना, चीड, देवदारु, मोथा, तालीस-पत्र, मंजीठ, पाठा, वरुण की छाल, चित्रकमूल, कुब्ज ( मदा गुलाब ), सर्प-गन्धा, मुलेठी, कालासारिवा, रक्तसारिवा, अनन्तमूल, आवला, मूर्वा ( मोर-वेल ), महुआ का फूल, कनेर, देवपुष्प ( लवंग ), शिरिस की जड, अरलु, चव्य, लाख, पयस्या ( चीर काकोली )—एक २ अन—इन द्रव्यों का कल्क बनाकर तथा इन्हीं औषधों को चार प्रस्थ लेकर चौगुने जल में क्वाथकर चतुर्थांश शेष कषाय तथा कल्क के साथ, एक प्रस्थ तैल पकावे। यह तैल अभ्यञ्जन ( मर्दन ) करने से सान्निपातिक ज्वर को नाश करता है। यह जात्यादि नामक तैल वात, पित्त तथा कफजन्य रोगों को नाश करता है ॥ २७१-२७५ ॥

ज्वरे षट्चरणं तैलम्—

लाक्षाविश्वानिशामूर्वामञ्जिष्ठास्वर्जिकामयैः ।
षड्गुणेन च तक्रेण सिद्धं तैलं ज्वरान्तकृत् ॥ २७६ ॥

ज्वर मे षट्चरण तैल—लाख, सोंठ, आमाहल्दी, मूर्वा ( मोरवेल ), मंजीठ, सज्जीखार—इन द्रव्यों ( तैल के चतुर्थांश भाग ) के कल्क तथा तैल के छः गुना मट्ठा के साथ तैल सिद्ध करे। यह तैल ज्वर को नाश करता है ॥२७६॥

शोषे शिरीषाद्यं तैलम्—

मूलं त्वचं च पत्रं च प्रवालं स्कन्धमेव च ।
शिरीषाद् द्वे तुले दद्याद् गर्भस्त्वेष प्रकीर्तितः ॥ २७७ ॥
वरुणः पारिभद्रश्च ककुभश्चतुरङ्गुलः ।
बिल्वोऽग्निमन्थकुटजङ्करघाटकवञ्जुलाः ॥ २७८ ॥
गन्धर्वहस्तकाकोल्यौ काश्मरी पाटली तथा ।
निदिग्धिकाऽथ वार्ताकी शालिपर्णी मयूरकः ॥ २७९ ॥
तुरगो श्रेयसी चैव शतावर्युदकं तथा ।
सुषव्यतिबला चैव दन्ती सिंहमुखी तथा ॥ २८० ॥
पञ्चाशत्पलिकान् भागान्मूलं पुष्पं च रोहिषात् ।
निष्क्वाथस्त्रिफलायाश्च प्रस्थत्रयमिता भवेत् ॥ २८१ ॥
कोलकानां कुलत्थानां यवानां तत्समस्तथा ।
द्राक्षायाः शतपुष्पायाः कुर्याच्चाढकमेव च ॥ २८२ ॥

छागलस्य तु मांसस्य द्वे तुले तत्र दापयेत्।
एतत्सर्वं समालोड्य तोयद्रोणेषु पञ्चसु ॥ २८३ ॥
द्विद्रोणशेषपूतं च तैलद्रोणेषु संसृजेत्।
पाठा मगधजा, रास्ना सुपवी गोक्षुरं बला ॥ २८४ ॥
प्रियङ्गुर्द्वे हरिद्रे च मांसी चैला कुटन्नटम्।
देवदारु वचा लोध्रं कुष्ठ व्याघ्रनखं शटी ॥ २८५ ॥
मञ्जिष्ठा मधुकं मुस्तं रोध्र द्वे चापि सारिवे।
चन्दनं श्रीप्रियं चैव रक्तक तैलपर्णिकम् ॥ २८६ ॥
समृणालत्वच पत्रं पतङ्गं नीलमुत्पलम्।
एषा द्विपालिकान भागान् कृत्वा कल्कं समावपेत् ॥ २८७ ॥
त्रीन्द्रोणान् दधितो दद्यात्ततः सिद्ध निधापयेत्।
शैरीषमिति विख्यातमेतत्तैल क्षयापहम् ॥ २८८ ॥
प्रशस्तं तु सुधातुल्यं पानाभ्यंजनबस्तिषु।
अपस्मारं तथान्मादं शोषान् सोपद्रवानपि ॥ २८९ ॥
अङ्गमर्दमथो दाह पाण्डुत्व स्वरवैकृतम्।
अर्दितं गृध्रसीं गुल्मान् कम्पं पक्षवध तथा ॥ २९० ॥
हनुग्रहं खुडावातमाढ्यवातापतानकौ।
मूकत्व गद्गदत्व च बाधिर्य कर्णवेदनाम् ॥ २९१ ॥
ऊरौ जानुनि कुक्षौ च विसर्प वातशोणितम्।
हन्याद्वर्णबलोपेतो जीवेच्च शरदां शतम् ॥ २९२ ॥
प्रयोगादस्य तैलस्य न चाक्रामन्ति त गदाः।
विषपीताश्च दुष्टाश्च भूतोपहतचेतसः ॥ २९३ ॥
ये पिबन्ति शिरीषाद्य नीरुजस्ते भवन्ति हि।
मूलकर्मविकाराणा भूतानां दंष्ट्रिणामपि ॥ २९४ ॥
अधृष्यं तद्गृहं यत्र तैलमेतद्विधीयते।

शोष ( सूखा ) रोग में शिरीषाद्य तैल—शिरीष ( शिरिस ) का मूल-छाल-पत्र-प्रवाल तथा शाखा दो तुला, वरुण की छाल, फरहद की छाल, अर्जुन की छाल, अमलतास, बेल की छाल, अरणी, कायफर, करघाटक ( मैनफल—खरहार ), वञ्जुल ( बेंत ), गन्धर्वहस्त ( एरण्डमूल ), काकोली, क्षीर-काकोली, गम्भारी, पाटला, भटकटैया, वनभंटा, सरिवन, मयूरक ( अपामार्ग ), तुरगी ( अश्वगन्धा ), गजपीपर, शतावरी, उदक ( सुगन्धवाला ), सुपवी ( मंगरैल ), कंघी, दन्तीमूल, सिंहमुखी ( अडूसा ), रोहिष, ( दूर्वा ) का पुष्प तथा जड ये द्रव्य पचास पल, त्रिफला ( हर्रे, बहेडा, आँवला ) का

क्वाथ तीन प्रस्थ, वैर, कुलथी तथा यव तीन प्रस्थ, मुनक्का तथा सौफ एक आढक, बकरी का मांस दो तुला—इन सभी द्रव्यों को मिलाकर पांच द्रोण जल से पकावे, दो द्रोण शेष क्वाथ को छान कर एक द्रोण तैल के साथ मिला दे, और पाठा, पीपर, रास्ना, संगरैल, गोखरू, बरियार, प्रियंगु. आमाहल्दी, दारुहल्दी, जटामांसी, इलायची, कुटन्नट ( केवटी मोथा ), देवदारु. वच, लोध, कूठ, व्याघ्रनख, कपूरकचरी, मंजीठ, मुलेठी, मोथा, रोध्र, कालासारिवा, रक्तसारिवा, हरिचन्दन, श्रीप्रिय ( रक्तचन्दन ), रक्तक (बन्धूक, दुपहरिया नामक पुष्प) तैलपर्णिक (सफेद चन्दन), कमल की नाल, दालचीनी, तेजपत्र, पतंग, नीलकमल का फूल—दो २ पल—इन द्रव्यों का कल्क, दही तीन द्रोण छोड कर तेल पकावे और छान कर वर्तन मे रख ले। यह प्रसिद्ध शिरीष तैल क्षय रोग को नाश करने वाला है और पान, अभ्यंजन तथा वस्तिकर्म में अमृत के समान उत्तम है। यह तैल, अपस्मार, उन्माद, उपद्रव युक्त राजयक्ष्मा रोग, अगमर्द ( शरीर का दर्द ), दाह, पाण्डुरोग, स्वरविकृति, अर्दित ( मुह का टेढा होना ), गृध्रसी ( लगड़ी का दर्द ), गुल्म रोग, कम्पवात, पक्षाघात, हनुग्रह, खुडावात (वातरक्त), आढयवात ( कमर के नीचे के धड का वात ), अपतानक ( चांदनी "टेटनस" ), मूकत्व, हकलाना, वहरापन, कान का दर्द, जघा-घुटना तथा पेट मे विसर्प रोग, तथा वातरक्त को नाश करता है। और बल तथा कान्ति से युक्त होकर सौ वर्ष तक जीता भी है। इस तैल के प्रयोग करने से प्रयोग करनेवाले व्यक्ति को उपर्युक्त रोग आक्रमण नहीं करते है। विष पान करनेवाले, दुष्ट रोगों से आक्रान्त, भूत दोष से उपहतचित्तवाले जो भी इस घृत को पान करते है वे रोगों से छुटकारा पा जाते है। व्यभिचार कर्म से उत्पन्न रोग भूतदोष तथा सर्पः उस घर में नहीं प्रवेश करते जिस घर मे इस तैल का प्रयोग होता है।

शोषे सुकुमारतैलम्—

मधुकस्य शत दद्यात्काश्मर्याश्च तथाऽऽढकम् ॥ २९५ ॥
द्राक्षापरूपकाणा च बलाखर्जूरयोस्तथा।
तथा मधूकपुष्पाणां तथा मौञ्जातमाढकम् ॥ २९६ ॥
द्विद्रोणेऽपा विपक्तव्यं चतुर्भागावशेषितम्।
पूते तस्मिन् कषाये च पुनरग्नावधिश्रयेत् ॥ २९७ ॥
आर्द्रामलककाश्मर्यविदारीक्षुरसाढकम्।
तैलाढक च संयोज्य पचेत्क्षीरे चतुर्गुणे ॥ २९८ ॥
पच्यमाने तथा तस्मिन् कल्कांश्चैषां समावपेत्।
पिप्पली शृङ्गवेरं च कदली च शतावरी ॥ २९९ ॥

बला तालं कदम्बश्च सूक्ष्मैला पद्मबीजकम् ।
शृङ्गाटकं कसेरुश्च जीवनीयानि यानि च ॥ ३०० ॥
द्वे द्वे पलं पृथग् दत्त्वा विपचेन्मृदुनाग्निना ।
तत्सिद्धं स्रावयित्वाशु शीतं क्षौद्रेण संसृजेत् ॥ ३०१ ॥
नस्ये चाभ्यञ्जने पाने प्रशस्तं बस्तिकर्मणि ।
वातव्याधिषु सर्वेषु क्षतक्षीणे शिरोग्रहे ॥ ३०२ ॥
पार्श्वशूले प्रमेहे च गुल्मे चार्शोभगन्दरे ।
वातभग्नाङ्गहीनानां कासे श्वासे च हृद्ग्रहे ॥ ३०३ ॥
ज्वरेऽरुचावतीसारे कर्णनादे स्वरक्षये ।
सुकुमारमिदं तैल बालवृद्धसुखावहम् ॥ ३०४ ॥
एतद्धि वृष्यं बल्यं च रक्तमांसविवर्द्धनम् ।
स्वरवर्णकरं चैव शोषिणाममृतोपमम् ॥ ३०५ ॥
प्रपक्वस्यास्य तैलस्य सम्यक् सिद्धस्य यो भवेत् ।
उदश्विति विमथ्यार्थे सोऽपि कृत्यकरो भवेत् ॥ ३०६ ॥
एकादश च षट् चैव शोषिणां य उपद्रवाः ।
शमयेत् सुकुमारं तान् मेघोऽग्निमिव वृष्टिमान् ॥ ३०७ ॥

शोष रोग में सुकुमार तैल—मुलेठी एक सौ पल, गम्भारी की छाल एक आढक, मुनक्का, फालसा, बरियार, खजूर, महुआ का फूल तथा मुञ्जातक ( मुञ्जात कन्द विशेष ) एक आढक, दो द्रोण जल मे पकावे, चौथाई शेष क्वाथ को छान कर पुनः आग पर चढायें और उसमे, अद्रक, आंवला, गम्भारी-फल, विदारीकन्द तथा गन्ना का रस एक आढक, तैल एक आढक ( चार प्रस्थ ), दूध तैल के चौगुना चार आढ़क मिला कर, पीपर, सोंठ, केला का कन्द, शतावरी, बरियार, ताल का मज्जा, कदम्ब, छोटी इलायची, कमल-गट्टा, सिंघाड़ा, कसेरू, जीवनीय द्रव्य ( जीवक, ऋषभक, मेदा, महामेदा, काकोली, क्षीरकाकोली, मापपर्णी, मुद्गपर्णी, जीवन्ती, मुलेठी )—दो २ पल—इन द्रव्यों का कल्क डाल दे और धीरे २ मन्द आंच से पकावे। सिद्ध होने पर छान, ठंढा कर मधु मिला दे। यह तैल नस्य कर्म, अभ्यजन, पान तथा वस्तिकर्म मे उत्तम है और सभी वातव्याधि, उरःक्षत, शिरोग्रह, पार्श्वशूल, प्रमेह, गुल्म, अर्श, भगन्दर, वायु से भग्न तथा हीन अग वालों के कास, श्वास, हृदय का अकड़न, ज्वर, अरुचि, अति-सार, कान का शब्द तथा स्वरनाश—इन रोगों मे प्रशस्त है अर्थात् इन रोगों को नाश करता है। यह सुकुमार तैल बालक तथा वृद्धों को ( बाल रोग तथा वृद्धों का वातादि रोग में ) सुख देनेवाला यानी नाश करने वाला है। यह

तैल वीर्यवर्द्धक, वलवर्द्धक, रक्तवर्द्धक, मांसवर्द्धक, स्वरशोधक, कान्तिप्रद तथा राजयक्ष्मा के रोगियों के लिये अमृत के समान है। इस परिपक्व तैल को उदश्वित् ( दुगुना पानी मिले हुए दही के तोड़ ) में मिलाकर पकाने के वाद अच्छी तरह सिद्ध तैल लाभप्रद होता है। राजयक्ष्मा रोगियों के सत्तरह प्रकार के उपद्रवों को यह सुकुमार तैल शान्त करता है जैसे पानीवाला मेघ अग्नि को शान्त कर देता है ॥ २९५–३०७ ॥

अर्शसि लघुकाशीसाद्यं तैलम्—

काशीसलाङ्गलीदन्तीकरवीरामलैः पचेत् ।
तैलमर्कपयोसिश्रमभ्यङ्गात् पायुकीलजित् ॥ ३०८ ॥

अर्शरोग में लघुकासीसाद्य तैल—शु० कासीस, कलिहारी, दन्तीमूल, कनेर, आंवला—इन द्रव्यों के ( तैल के चतुर्थांश ) कल्क के साथ मदार के दूध ( तैल के चौगुना ) में मिलाकर पकाया तैल, अभ्यंग करने से अर्श के गुदकीलों को नाश करता है ॥ ३०८ ॥

अर्शसि पृथुकाशीसाद्यं तैलम्—

काशीसं सैन्धवं कृष्णा शुण्ठा कुष्ठं च लाङ्गली ।
शिला द्रेक्काऽश्वमारश्च जन्तुहृद् दन्तिचित्रकौ ॥ ३०९ ॥
हरितालं तथा स्वर्णक्षीरी चैतैः पचेत् समैः ।
तैलं सुधार्कदुग्धेन गवां मूत्रे चतुर्गुणे ॥ ३१० ॥
एतदभ्यङ्गतोऽर्शांसि क्षारवत् पातयेद् भुवि ।
क्षारकर्मकरं ह्येतन्न च दूषयते वलिम् ॥ ३११ ॥

अर्शरोग में पृथु काशीसाद्य तैल—शु० कासीस, सेन्धानमक, पीपर, सोंठ, कूठ, कलिहारी, शिला ( शु० मनःशिला ), द्रेक्का ( वकायन ), कनेर, विडंग, दन्तीमूल, चित्रकमूल, शु० हरिताल, सत्यानासी—समभाग—इन द्रव्यों ( तैल के चतुर्थांश ) के कल्क के साथ सेहुंड़ तथा मदार का दूध ( तैल के वरावर ) और गाय का मूत्र चौगुना मिलाकर तैल सिद्ध करे। यह तैल अभ्यंग करने ( लगाने ) से, अर्शांकुरों को क्षार के तरह निश्चय ही गिरा देता है। यह तैल क्षार के तरह काम करता है किन्तु वलियों को दूषित नहीं करता है ॥ ३०९–३११ ॥

अर्शसि चित्रकाद्यं तैलम्—

चित्रकं मदनं पीलुं शृङ्गवेरं शुकाननाम् ।
स्रोतोजं सैन्धव दन्तीं हरितालं मनःशिलाम् ॥ ३१२ ॥
तालीस करवीरस्य मूल लागलिका वचाम् ।
भद्रकं क्षीरिकां चैव स्वर्णक्षीरी च पेषयेत् ॥ ३१३ ॥

कुडवौ पच्यमाने तु स्नुगर्कपयसोः क्षिपेत् ।
मूत्रे चतुर्गुणं तैलं पक्वमर्शोहरं भवेत् ।
क्षारकर्मकरं ह्येतदभ्यङ्गात्तैलमुत्तमम् ॥ ३१४ ॥

अर्शरोग में चित्रकाद्य तैल—चित्रक, मदनफल, पीलु वृक्ष, सोंठ, शुकानना ( शुकतुण्डी-तूतिया ), स्रोतोंजन, सेन्धानमक, दन्तीमूल, शु० हरिताल, शु० मैनशिल, तालीसपत्र, कनेर की जड, कलिहारी, वच, भद्रक ( नागरमोथा ), क्षीरिका ( क्षीरीवृक्ष ), सत्यानाशी—समभाग—इन द्रव्यों को कल्क बनावे, सेहुंड का दूध तथा मदार का दूध दो कुडव, गाय का मूत्र चौगुना मिला कर तैल पकावे। यह तैल अर्शरोग को दूर करता है। यह उत्तम तैल लेप करने से क्षार कर्म के तरह अर्शांकुरों को नाश करता है। ( यहाँ द्रव्यों का मान नहीं दिया गया है अतः पाकविधि के अनुसार द्रव्यों का परिमाण ग्रहण करे ) ॥ ३१२-३१४ ॥

कुष्ठे शिशपासारतैलम्—

देवद्रुदार्वीप्रपुनाटवाकुची-
तुम्बीफलोन्मत्तहयारिदारुभिः ।
तुङ्गाफलत्वग्घरिमन्थवह्निजैः
प्रस्थोन्मितैः सामलसारषड्गुणैः ॥ ३१५ ॥
तैलाढकार्धेन परिप्लुतैस्तै-
स्तैलं विदध्याद् बलिबन्धयन्त्रे ।
तत्तैलमभ्यङ्गविधौ प्रदिष्टं
पथ्याशिनां कुष्ठविघातकृत् स्यात् ॥ ३१६ ॥

कुष्ठरोग में शिशपासार तैल—देवद्रु (मदार), दारुहल्दी, प्रपुनाट (चकवड़), बाकुची, तुम्बीफल ( कड़वी लौकी ), धत्तूर, कनेर, देवदारु, तुङ्गाफल ( पुन्नाग का फल ), दालचीनी, हरिमन्थ ( अरणी ), चित्रक—समभाग एक प्रस्थ—इन द्रव्यों के कल्क के साथ आँवला का रस ( तैल के ) छः गुना ( तीन आढ़क ), तैल आधा आढक ( दो प्रस्थ ) मिलाकर, बलिबन्धयन्त्र में सिद्ध करे। यह तैल अभ्यंग करने से पथ्यपूर्वक रहनेवाले तथा खानेवाले व्यक्तियों के कुष्ठ को नाश करता है ॥ ३१५-३१६ ॥

कुष्ठे वज्रकं तैलम्—

मूलं शाताह्वा त्वक् शिरीषाश्वमारा-
दर्कान्मालत्याश्चित्रकास्फोतनिम्बात् ।
बीजं कारञ्जं सार्षपं प्रापुनाटं
श्रेष्ठा जन्तुघ्नं त्र्यूषणं द्वे हरिद्रे ॥ ३१७ ॥

तैलं तैलं साधितं तैः समूत्रैस्त्वग्दोषाणां दुष्टनाडीव्रणानाम् ।
अभ्यङ्गेन श्लेष्मवातोद्भवानां नाशायालं वज्रकं वज्रतुल्यम् ॥ २१८ ॥

कुष्ठरोग में वज्रक तैल—पिपरामूल, शतावरी, शिरीष, कनेर, मदार, मालती, चित्रक, सारिवा तथा नीम की छाल, करंज, सरसों तथा चकवड़ का बीज, त्रिफला ( हर्रे, आँवला, बहेडा ), विडंग, त्र्यूषण ( सोंठ, पीपर, मरिच ), आमाहल्दी, दारुहल्दी—समभाग—इन द्रव्यों का कल्क, तैल, गाय का मूत्र मिला कर तैल पकावे। यह वज्रतैल लगाने से कफ-वात-जन्य, चर्मरोग तथा नासूर को नाश करता है और वज्र के समान है। ( इस योग में कल्क तैल के चतुर्थांश तथा गोमूत्र चौगुना लेना चाहिए ) ॥ २१७–२१८ ॥

कुष्ठे महावज्रकं तैलम्—

एरण्डतार्क्ष्यघननीपकदम्बभार्गी-
कम्पिल्लवेल्लफलिनीसुरवारुणीभिः ।
निर्गुण्ड्यरुष्करसुराह्वसुवर्णदुग्धा-
श्रीवेष्टगुग्गुलुशिलापटुतालविश्वैः ॥ २१९ ॥
तुल्यं स्नुगर्कदुग्ध सिद्धं तैलं स्मृतं महावज्रम् ।
अतिशयति वज्रकगुणाञ्छ्वित्रार्शोग्रन्थिमालाघ्नम् ॥ २२० ॥

कुष्ठरोग में महावज्रक तैल—रेंड का मूल, रसाञ्जन, मोथा, महाकदम्ब, भांगरा, कबीला, विडंग, प्रियंगु, इन्द्रवारुणी, सम्भालू के बीज, शु० भल्लातक, देवदारु, सत्यानासी, श्रीवेष्ट ( वृक्षधूप ), गुग्गुलु, मनःशिला, सेन्धानमक, तालमस्तक, सोंठ—समभाग—इन द्रव्यों के कल्क के साथ सेहुंड़ तथा मदार के दूध में तैल सिद्ध करें। इस तैल को महावज्रक तैल कहते हैं। वज्रक तैल से इसका गुण अधिक है अर्थात् चर्मरोग तथा नासूर को नाश करता है और श्वित्र, अर्श तथा गण्डमाला को नाश करने वाला है। ( यहाँ परिमाण का निर्देश नहीं है अतः कल्क द्रव्य तैल के चतुर्थांश तथा द्रवद्रव्य तैल के चौगुना लेना चाहिए ) ॥ २१९–२२० ॥

कुष्ठे श्वेतकरवीराद्यं तैलम्—

श्वेतकरवीरपल्लवमूलत्वक्पुष्पचित्रकविडङ्गानि ।
कुष्ठार्कमूलसर्षपशिग्रुत्वग्रोहिणीकटुकाः ॥ २२१ ॥
एतैस्तैलं सिद्धं कल्कैः पादांशकैर्गवां मूत्रम् ।
दत्त्वा तैलचतुर्गुणमभ्यङ्गात्कुष्ठकण्डूघ्नम् ॥ २२२ ॥

कुष्ठरोग में श्वेत करवीराद्य तैल—सफेद कनेर का पल्लव-मूल-छाल तथा पुष्प, चित्रक, विडंग, कूठ, मदार की जड़, सरसों, सहिजन की छाल,

मांसरोहिणी, कुटकी—समभाग—इन द्रव्यों के तैल के चतुर्थांश कल्क के के साथ, तैल के चौगुना गोमूत्र मिला कर तैल सिद्ध करे। यह तैल अभ्यंग करने ( लेप करने ) से कुष्ठ तथा कण्डू को नाश करता है ॥ ३२१-३२२ ॥

कुष्ठे सिन्दूराद्यं सूर्यपाकं तैलम्—

सिन्दूरशङ्खचूर्णकहरितालमनःशिलायवक्षारैः ।
कासीसकच्छसंभवगन्धाह्वयसंयुतैस्तैलम् ॥ ३२३ ॥
दिनकरतप्तं पामाविचर्चिकादद्रुकुष्ठकिटभादीन् ।
नाशयति लेपमात्राद्भूयो भूयः कपालकुष्ठमपि ॥ ३२४ ॥

कुष्ठरोग मे सिन्दूराद्य सूर्यपाक तैल—सिन्दूर, शंखभस्म, चूर्णक ( अम्ल विशेप ), हरिताल, मनःशिला, यवचार, कासीस, कच्छसम्भव ( फिटकरी या वितुन्नक-वेलिया पीपर ), गन्धाह्व ( श्वेत चन्दन)—समभाग—इन द्रव्यों के ( तैल के चतुर्थांश ) चूर्ण के साथ तैल को सूर्य के धूप में सात दिन तक पकाये। यह तैल खुजली, विचर्चिका (पीड़ायुक्त खुजली), दाद, कुष्ठ, किटभकुष्ठ आदि चर्मरोग को नाश करता है और बार २ लेप करने से कपालकुष्ठ को भी नाश करता है ॥ ३२३-३२४ ॥

कुष्ठे कुष्ठकालानलं तैलम्—

क्षारत्रय कटुत्रीणि पञ्चैव लवणानि च ।
वचा कुष्ठं हरिद्रे द्वे विडङ्गं चित्रको विषम् ॥ ३२५ ॥
हरितालं शिला गन्धः सिन्दूरं तुत्थखर्परम् ।
रामठं च रसोनश्च मदनं च रसाञ्जनम् ॥ ३२६ ॥
एतत्सर्वं समांशं च स्नुह्यर्कपयसा प्लुतम् ।
षड्गुणं सार्षपं तैलं तैलान्मूत्र चतुर्गुणम् ॥ ३२७ ॥
सर्वं मन्दानले पक्वं ग्राह्यं तैलावशेषकम् ।
हन्त्यष्टादश कुष्ठानि मांसमेदोगतानि च ॥ ३२८ ॥
दुष्टव्रणानि शातानि जीर्णनाडीव्रणानि च ।
हन्ति श्वित्रमसाध्यं च दद्रुपामाविचर्चिकाः ॥ ३२९ ॥
एतत्तैलं सदाऽभ्यङ्गात्कुष्ठव्याधिहर नृणाम् ।

कुष्ठरोग में कुष्ठ कालानल तैल—सज्जीखार, यवचार, टंकणचार, कटुत्रय ( सोंठ, पीपर, मरिच ), पञ्चलवण ( सेन्धानमक, सौवर्चल, विड़, सांभर, सामुद्र नमक ), वच, कूठ, आमाहल्दी, दारुहल्दी, विडंग, चित्रक, विष (शु० वत्सनाभ), हरिताल, मनःशिला, श्वेतचन्दन, सिन्दूर, खपरिया, तूतिया, हींग, लहसुन, मदनफल, रसाञ्जन—समभाग—इन द्रव्यों का ( तैल के चतुर्थांश ) कल्क, तथा कल्क से छःगुना सेहुंड तथा मदार का दूध, तैल के

चौगुना गाय का मूत्र, सरसो का तैल—सबको मिला कर मन्द आंच से पकावे और छान कर रख ले। यह तैल मांस तथा मेदोगत अट्टारह प्रकार के कुष्ट रोग को नाश करता है। दुष्टव्रण ( ल्यूपिया ), शातव्रण, जीर्ण नाडीव्रण ( पुराना-नासूर ), असाध्य श्वित्र ( सफेद कुष्ठ ), दाद, खुजली तथा विचर्चिका ( पीडायुक्त खुजली ) को भी नाश करता है। यह तैल निरंतर लेप करने से मनुष्यों के कुष्ठ रोग को नाश करने वाला है ॥

कुष्ठे कनकक्षीर्याद्यं तैलम्—

कनकक्षीरी शैलं भार्गी दन्तीफलानि मूलं च ॥ ३३० ॥
जातीप्रवालसर्षपलशुनविडङ्गं करञ्जत्वक्।
सप्तच्छदार्कपल्लवमूलत्वङ्निम्बचित्रकास्फोताः ॥ ३३१ ॥
गुञ्जैरण्डो बृहतीमूलकसुरसार्जकफलानि।
कुष्ठं तुम्बरु पाठा मूर्वा मुस्तं निशा च षड्ग्रन्था ॥ ३३२ ॥
एडगजबीजशिग्रुत्र्यूषणभल्लातकक्षवकाः।
हरितालमवाक्पुष्पी तुत्थ कम्पिल्लकोऽमृतासङ्गः ॥ ३३३ ॥
सौराष्ट्री कासीस दार्वी त्वक् स्वर्जिका लवणम्।
कल्कैरेतैस्तैलं करवीरकमूलपल्लवकषाये ॥ ३३४ ॥
सार्षपमथवा तैलं गोमूत्रचतुर्गुणं साध्यम्।
कटुकालाब्वां स्थाप्यं तत्सिद्धं तेन मण्डलान्याशु ॥ ३३५ ॥
छिन्द्याद्भिषगभ्यङ्गात्कण्डूकोठांश्च विनिहन्यात्।

कुष्ठ रोग में कनकक्षीराद्य तैल—कनकक्षीरी ( भड़भांड ), शिलाजीत, भांगरा, बाकुची, दन्तीका जड, चमेली का पत्ता, सरसो, लहसुन, विडंग, करंज की छाल, छतिवन, मदार का-पल्लव-मूल तथा छाल, निम्ब, चित्रक, आस्फोता ( आफरमाली ), गुञ्जा, रेंड, बृहती ( वनभंटा ), मूली, सुरसा ( तुलसी ), अर्जक ( निर्गन्ध तुलसी ), मदनफल, कूठ, तुम्बरु, पाठा, मूर्वा ( मोरवेल ), मोथा, आमाहल्दी, पिपरामूल, एडगडबीज ( चकवड का बीज ), सहिजन, त्र्यूषण ( सोंठ, पीपर, मरिच ), भल्लातक, क्षवक ( अपामार्ग ), हरिताल, अवाक्पुष्पी ( सौंफ ), तूतिया, कवीला, अमृतासंग ( खपरिया तुत्थ ) सौराष्ट्री ( गोपीचन्दन ), कासीस, दारुहल्दी, दालचीनी, सज्जीखार, सेन्धा-नमक—इन द्रव्यों के कल्क के साथ कनेर के मूल तथा पल्लव के कषाय में तिल्ली का तैल या सरसो का तैल, तैल के चौगुना गोमूत्र मिलाकर पकावे और कडुवी लौकी के तुम्बी मे रक्खे। यह सिद्ध तैल है, वैद्य इस तैल से शीघ्र ही मण्डल कुष्ठ को छेदन करे और इसके लेप से कण्डू, कोठ ( कुष्ठ ) को नाश करे। (यहां परिमाण का निर्देश नहीं है अतः तैल के चौथाई कल्क तथा चौगुना कषाय लेना चाहिए ) ॥

पामायां आर्द्रकाद्यं तैलम्—

आर्द्रकस्यार्कदुग्धस्य स्नुक्क्षीरस्य पृथक् पृथक् ॥ ३३६ ॥
द्वे द्वे पले तु सिन्दूरं द्विपलं च समाहरेत् ।
भूर्जकर्षविमिश्राणि कटुतैलस्य पाचयेत् ॥ ३३७ ॥
पलानि दश चाभ्यङ्गात्कच्छूरोगविनाशनम् ।

पामा ( खुजली ) रोग में आर्द्रकाद्य तैल—अद्रक का रस, मदार का दूध, सेहुंड का दूध—दो २ पल, सिन्दूर दो पल, भोजपत्र एक कर्ष, सरसो का तैल दशपल—इन सभी द्रव्यों को मिलाकर तैल सिद्ध करे। यह तैल लेप करने से कच्छू रोग को नाश करता है ॥

दद्रूरोगे दार्व्याद्यं सूर्यपाकतैलम्—

दार्वीगण्डीरसंयुक्तैः कासमर्दकसम्भवैः ॥ ३३८ ॥
मूलैर्महोटिकायास्तु स्वरसेन समन्वितैः ।
स्नुहीक्षीरनिशामूर्वागृहधूमफणिज्जकैः ॥ ३३९ ॥
विडङ्गपिप्पलीरालागौरसर्षपनागरैः ।
चक्रमर्दकनाडीकाबाकुचीनक्तमालकैः ॥ ३४० ॥
मूलकस्य च बीजैस्तु सुरसारग्वधच्छदैः ।
सक्षारलवणोपेतैर्गोमूत्रपरिपेषितैः ॥ ३४१ ॥
कटुतैलयुतैः पक्वैः सम्यग्रविगभस्तिभिः ।
कृतमाशु नराणां तु हन्यादस्य प्रलेपनम् ॥ ३४२ ॥
दद्रूं विचर्चिकां कण्डूं पामां दुर्भक्तक ( ? ) तथा ।

दाद में दार्व्याद्य सूर्यपाक तैल—दारुहल्दी, गण्डीर ( गण्डीर दूर्वा "समष्ठीला" ), कसौंदी का मूल, महोटिका (बड़ी कटेरी) का स्वरस, सेहुंड का दूध, आमाहल्दी, मूर्वा ( मोरवेल ), गृहधूम ( घर का धूआ ), फणिज्जक (मरुआ), विडंग, पीपर, राल, सफेद सरसों, सोंठ, चकवड़, नाडिका (पट्टशाक), बाकुची, करंज, मूली का बीज, तुलसी, अमलतास का पत्ता, यवक्षार, सेन्धानमक—समभाग—इन द्रव्यों को गाय के मूत्र मे पीसकर, पूर्वोक्त स्वरस तथा दूध मिलाकर सरसो का तैल सूर्य के धूप में पकावे ( धूप मे पकाने का समय शरद् तथा ग्रीष्म ऋतु होता है ) यह तैल लेप करने से मनुष्यों के दाद, विचर्चिका ( पीडायुक्त खुजली ), कण्डू, पामा तथा दुर्भक्तक को नाश करता है। ( इसमे कल्क तैल का चौथाई स्वरस तथा दूध तैल के बराबर लेना चाहिए ) ॥

कुष्ठे गुग्गुल्वाद्यं सूर्यपाकतैलम्—

गुग्गुलुमरिचविडङ्गैः सर्षपकासीसमुस्तसर्जरसैः ॥ ३४३ ॥
श्रीवेष्टतालगन्धैर्मनःशिलाकुष्ठकम्पिल्लैः ।

उभयहरिद्रासहितैः कटुतैलं विमिश्रितैरेभिः ॥ ३४४ ॥
आदित्यरश्मिपक्वं कुष्ठं विनिहन्ति संस्पर्शात् ।

कुष्ठ रोग में गुग्गुलवाद्य तैल—गुग्गुलु, मरिच, विडंग, सरसों, कासीस, मोथा, राल, श्रीवेष्ट (वृक्ष धूप), तालमज्जा, चन्दन, मनःशिला, कूठ, कबीला, आमाहल्दी, दारुहल्दी,—इन द्रव्यों के कल्क (तैल के चौथाई) के साथ सरसों का तैल मिलाकर सूर्य के धूप में पकावे। यह आदित्यपाक तैल स्पर्श, (लेप मात्र) से कुष्ठ रोगों को नाश करता है ॥

कुष्ठे विद्रावणं तैलम्—

मनःशिलालसिन्दूरं सौराष्ट्री गन्धकस्तथा ॥ ३४५ ॥
सिक्थकं सर्जनिर्यासं कासीसं पुरकुन्दरू ।
अथाह्वः शल्लकिकम्पिल्ल कङ्कुष्ठं चाप्यरुष्करम् ॥ ३४६ ॥
गवां मूत्रेण संसिद्धं कटुतैलं प्रयोजयेत् ।
पामाविचर्चिकादद्रूकण्डूकुष्ठक्रिमीन् व्रणान् ॥ ३४७ ॥
अभ्यङ्गाच्छमयत्येतन्नाम्ना विद्रावणं मतम् ।

कुष्ठ रोग में विद्रावण तैल—मनःशिला, आल (हरिताल), सिन्दूर, गोपीचन्दन मृत्तिका, गन्धक, मोम, राल, कासीस, पुर (गुग्गुलु), कुन्दरु (शल्लकी का गोंद), देवदारु, शल्लकी वृक्ष, कबीला, कंकुष्ठ (मुर्दाशंख), भल्लातक—इन द्रव्यों को गोमूत्र मे पीसकर कल्क बनाकर गाय के मूत्र में सरसों का तैल सिद्ध करे। (तैल एक प्रस्थ, कल्क द्रव्य चार पल तथा गोमूत्र चार प्रस्थ लेना चाहिए)। यह विद्रावण नामक तैल लेप करने से पामा (खुजली), पीडायुक्त खुजली, दाद, कुष्ठ रोग, कृमि रोग तथा व्रण को शान्त करता है ॥

कुष्ठे महासुगन्धं तैलम्—

चन्दनं कुङ्कुमोशीर प्रियङ्गुत्रुटिरोचनाः ॥ ३४८ ॥
तुरुष्कागुरुकस्तूर्यः कपूर जातिपत्रिका ।
जातीकङ्कोलपूगानां लवङ्गस्य फलानि च ॥ ३४९ ॥
नलिका नलदं कुष्ठं हरेणुस्तगरः प्लवम् ।
नख व्याघ्रनखं स्पृक्का बालो दमनको मुरा ॥ ३५० ॥
चोरकं चैव शैलेयं स्थौणेयं सैलवालुकम् ।
सरलः सप्तपर्णश्च लाक्षा तामलकी तथा ॥ ३५१ ॥
कुसुमानि च धातक्या लामज्जकं च पद्मकम् ।
प्रपौण्डरीककर्चूरौ समांशैः शाणमात्रकैः ॥ ३५२ ॥
महासुगन्धमित्येतत्प्रस्थं तैलस्य साधयेत् ।

प्रस्वेदमलदौर्गन्ध्यकण्डूकुष्ठहरं परम् ॥ ३५३ ॥
अनेनाभ्यक्तगात्रस्तु वृद्धः साप्ततिकोऽपि वा ।
युवा भवति शुक्राढ्यः स्त्रीणां चात्यन्तवल्लभः ॥ ३५४ ॥
सुभगो दर्शनीयश्च गच्छेच्च प्रमदाशतम् ।
वन्ध्याऽपि लभते गर्भं पण्ढोऽपि पुरुषायते ॥ ३५५ ॥
अपुत्रः पुत्रमाप्नोति जीवेच्च शरदां शतम् ।

कुष्ठ रोग में महासुगन्ध तैल—चन्दन, केशर, खस, प्रियंगु, इलायची, गोरोचन, शिलारस, अगर, कस्तूरी, कर्पूर, जावित्री, जायफर, कंकोल ( कबाब चीनी ), सुपारी, लवंग का फल, नलिका ( प्रवाली ), नलद ( जटामांसी ), कूठ, सम्भालू का बीज, तगर, प्लव ( केवटीमोथा ), नखवृक्ष, व्याघ्रनख, स्पृक्का ( सुगन्धित तृण ), बोल ( गन्धरस "खूनखरवा" ), दवना, सुरामांसी, चोरक, छड़ीला, स्थौणेय ( सुगन्धित द्रव्य विशेष "थुनेर" ), एलवालु, चीढ, छतिवन, लाक्षा, शुद्ध आँवला, धाय का फूल, लामज्जक, पद्मकाठ, प्रपौण्डरीक, कर्चूर, समभाग—एक २ शाण—इन द्रव्यों के कल्क के साथ एक प्रस्थ तैल ( चौगुने जल मिलाकर ) सिद्ध करे। यह महासुगन्ध तैल पसीना, मल की दुर्गन्धि, कण्डू तथा कुष्ठ को अच्छी तरह नाश करता है। इस तैल को लेपकर वृद्ध, साप्तति ( सत्तर वर्ष का बूढ़ा ) भी युवा के तरह वीर्यवान होकर स्त्रियों का अत्यन्त प्रिय हो जाता है और सुन्दर शरीरवाला देखने योग्य होकर सैकड़ों स्त्रियों के साथ संभोग करने में समर्थ हो जाता है। बांझ स्त्री भी गर्भ धारण करती है और नपुंसक भी पुंस्त्व प्राप्त करता है तथा पुत्रहीन व्यक्ति 'पुत्र' प्राप्त करता है और सैकड़ों वर्ष तक जीवित रहता है ॥

कुष्ठे मरीचाद्यं तैलम्—

मरीचं त्रिवृता मुस्तं हरितालं मनःशिला ॥ ३५६ ॥
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ।
विशाला करवीरश्च भानुक्षीरं शकृद्रसः ॥ ३५७ ॥
एतेषां कार्षिकान् भागान् विषस्यार्धपलं भवेत् ।
प्रस्थं च कटुतैलस्य गोमूत्रे द्विगुणे पचेत् ॥ ३५८ ॥
मृत्पात्रे लोहपात्रे वा शनैर्मृद्वग्निना भिषक् ।
तैलेनानेन नश्यन्ति रोगा देहे शरीरिणाम् ॥ ३५९ ॥
पामा विचर्चिका चैव दद्रूविस्फोटकानि च ।
अभ्यङ्गेन प्रणश्यन्ति कौमलत्वं प्रजायते ॥ ३६० ॥
प्रच्छानितानि तैलेन श्वित्राण्येतेन मर्दयेत् ।
चिरोत्थमपि यच्छ्वित्रं सवर्णं म्रक्षणाद्भवेत् ॥ ३६१ ॥

कुष्ठ रोग मे मरीचाद्य तैल—मरिच, निशोथ, मोथा, हरिताल, मनःशिला, देवदारु, आमाहल्दी, निशा ( हल्दी ), जटामांसी, कूठ, रक्तचन्दन, इन्द्रायण, कनेर तथा मदार का दूध, गोवर का रस—एक २ कर्ष—इन द्रव्यों का कल्क, विष ( वत्सनाभ ) आधा पल, सरसो का तैल एक प्रस्थ, गोमूत्र दो प्रस्थ ( या अठगुना-पाठान्तर ) मिलाकर, मिट्टी के वर्तन मे या लोहे के वर्तन में धीरे २ मन्द आँच से पकावे। इस तैल से मनुष्यों के शरीर के चर्म रोग नष्ट हो जाते हैं। इस तैल के अभ्यंग ( लेप ) करने से पामा, विचर्चिका, दाद, विस्फोटक ( झलक्ई माई ), ये चर्म रोग नष्ट हो जाते है और शरीर कोमल हो जाता है। इस तैल से प्रच्छन्न ( छिपे हुए ) श्वित्र को मर्दन करे। इसके लेप करने से पुराना भी श्वित्र ( सफेद कोढ़ ) नष्ट होकर समान वर्णवाला हो जाता है ॥ ३५६-३६१ ॥

कुष्ठे भ्रामरिकं तैलम्—

गुञ्जामूलं फलं कुष्ठं विषं सिन्दूरसिक्थकम्।
द्वे हरिद्रे सलाङ्गल्यौ गुग्गुलुश्च तथैव च ॥ ३६२ ॥
कृकलाससमायुक्तं कटुतैलं विपाचयेत्।
क्षिपेत्स्वरूपवस्तूनि सुदग्धान्यवतारयेत् ॥ ३६३ ॥
उद्धृत्य तैलमध्यात्तु सूक्ष्मचूर्णानि कारयेत्।
चूर्णं तैले पुनः कृत्वा त्रिशूलीं दापयेत्ततः ॥ ३६४ ॥
जीवन्ती जीवनीमूलं तथा च व्रणरोहिणीम्।
एतच्चूर्णं समालोड्य त्वेकरात्रं तु धारयेत् ॥ ३६५ ॥
शिरोरोगं व्रणं कुष्ठं पामां चैव विचर्चिकाम्।
ये व्रणा न प्ररोहन्ति गम्भीरा भैरवाश्च ये ॥ ३६६ ॥
तांस्तु नाशयते सर्वान् सप्ताहेन न संशयः।
भिषजां नात्र सन्देहस्तैलं भ्रामरिकं खलु ॥ ३६७ ॥

कुष्ठ रोग में भ्रामरिक तैल—गुञ्जा ( रत्ती ) की जड, मदनफल, कूठ, वत्सनाभ, सिन्दूर, मोम, आमाहल्दी, दारुहल्दी, कलिहारी, गुग्गुलु, वच, कृकलास ( सरट—गिरगिट ) स्वरूप द्रव्य ( भौंरा के समान जन्तुवों ) को छोड़ कर सरसों के तैल मे पकावे। अच्छी तरह खर हो जाने पर उतार कर तैल से उन औषधों को निकाल कर सूक्ष्म चूर्ण बनावे। पुनः इस चूर्ण को तैल मे छोड कर त्रिशूली ( भौंरा-भ्रमर ) डाल दे और जीवन्ती, जीवनी-मूल ( फञ्जिका "वभनेटी ), व्रणरोहिणी ( मांसरोहिणी 'मासूपीडी' )—इन द्रव्यों के चूर्ण को मिलाकर एक रात तक वन्द कर रक्खे। इसके बाद छान कर प्रयोग करे। यह भ्रामरिक तैल शिरोरोग, व्रण, कुष्ठ रोग, खुजली, विचर्चिका,

गम्भीर भयंकर व्रण और जो व्रण नहीं भरते हैं ऐसे सभी प्रकार के व्रणों को एक सप्ताह में नाश करता है इसमें संशय नहीं है। और वैद्यों को भी इसमें सन्देह नहीं है ॥ ३६२-३६७ ॥

व्रणे महाकषायं तैलम्—

उदुम्बरो वटश्चैव प्लक्षः पिप्पल एव च।
मधूक आम्रसर्जौ च जम्बूद्वयमथार्जुनः ॥ ३६८ ॥
कम्पिल्लकः प्रियालश्च कदम्बस्तिन्दुकस्तथा।
पलाशा रोध्रसंमिश्रं बदरं पद्मकेसरम् ॥ ३६९ ॥
शिरीषो बीजकश्चैव तथा रक्तं च चन्दनम्।
अमीषां क्वाथकल्काभ्यां तैलमन्दाग्निसाधितम् ॥ ३७० ॥
नाम्ना महाकषायं तु क्षिप्रमभ्यञ्जनाद्धरेत्।
व्रणास्तु देहिनामेतच्चिरकालभवानपि ॥ ३७१ ॥

व्रण में महाकषाय तैल—गूलर, वट, पाकड़, पीपल, महुआ, आम, शाल, जामुन, कठजामुन, अर्जुन, कवीला, पियाल (खिरिनी), कदम्ब, तिन्दुक, परास, लोध्र, बेर, पद्मकेशर (कमल का पराग), सिरिस, विजयसार, रक्त-चन्दन, श्वेत चन्दन—इन द्रव्यों के क्वाथ तथा कल्क के साथ मन्द आँच से तैल सिद्ध करे। यह महाकषाय नामक तैल, अभ्यञ्जन (लेप) करने से मनुष्यों के पुराने व्रणों को भी शीघ्र ही शान्त कर देता है। अर्थात् व्रण शीघ्र ही भर जाते हैं। (यहाँ उपर्युक्त द्रव्यों की छाल लेकर कूटकर तैल से अठगुने जल में क्वाथ करे और चतुर्थांश शेष क्वाथ में (तैल के चौगुना द्रव्यों को लेकर अठगुना जल में क्वाथ करे) इन्हीं द्रव्यों का तैल के चौथाई द्रव्य, लेकर कल्क बनावे और उसके साथ तैल सिद्ध करे) ॥

वल्मीके मनःशिलाद्यं तैलम्—

मनःशिलालभल्लातसूक्ष्मलागुरुचन्दनैः।
जातीपल्लवपत्रैश्च निम्बतैलं विपाचयेत् ॥ ३७२ ॥
वल्मीकं नाशयत्येतद्बहुच्छिद्रं बहुस्रवम्।

वल्मीक व्रण में मनःशिलाद्य तैल—मनःशिला, आल (हरिताल), भल्ला-तक, छोटी इलायची, अगर, रक्तचन्दन, चमेली का पल्लव तथा पत्र—इन द्रव्यों के (तैल के चतुर्थांश) कल्क के साथ (तैल के चौगुना जल मिलाकर) नीम का तैल पकावे। यह तैल अधिक स्रावयुक्त, बहुत छिद्रवाले, वल्मीक व्रण को नाश करता है ॥

गण्डमालायां फणिज्जकाद्यं तैलम्—

फणिज्जकश्च नादेयं क्षवको नवमालिका ॥ ३७३ ॥

अश्मन्तको विडङ्गानि मयूरकफलानि च ।
कट्फलं सहदेवा च देवदारु वितुन्नकम् ॥ ३७४ ॥
बीजं कारञ्जपालाशं मूलकस्याजकस्य च ।
महापर्पटको मुस्तं त्रिकटु त्रिफला वचा ॥ ३७५ ॥
सुवर्चला च हिङ्गुश्च समभागानि कारयेत् ।
अक्षमात्रैः पचेदेभिस्तैलप्रस्थं सुखाग्निना ॥ ३७६ ॥
अजामूत्रेण संयुक्तमजाक्षीरे चतुर्गुणे ।
नस्यं तदस्य दद्याच्च गण्डमालाविनाशनम् ॥ ३७७ ॥
विदारिकां गलग्रन्थिं गलगण्डं च नाशयेत् ।

गण्डमाला (ग्लैण्ड टी० बी०) में फणिज्जकाद्य तैल—( फणिज्जक ( प्रस्थ-पुष्प-मरुआ ), नादेय ( मोथा ), च्चवक ( नकछिकनी ), नवमालिका ( सातला ), अश्मन्तक ( पाषाणभेद ), विडंग, मयूरकफल ( अपामार्ग का फल), कायफर, सहदेइया, देवदारु, धनिया, करजबीज, पलासवीज, मूलकवीज, निर्गन्ध तुलसी का बीज, महासहा ( मापपर्णी ), पित्तपापड़ा, मोथा, त्रिकटु ( सोंठ, पीपर, मरिच ), त्रिफला ( हर्रे, बहेड़ा, आँवला ), वच, हुलहुल, हिंगु—समभाग—एक २ अक्ष—इन द्रव्यों के कल्क के साथ तैल एक प्रस्थ, समभाग बकरी का मूत्र तथा चौगुना बकरी का दूध मिलाकर मंद आँच से पकावे। इसके बाद गण्डमाला को नाश करने के लिये इस तैल का नस्य दे। यह तैल विदारिका ( कांख, वंक्षण आदि का शोथ ), गलग्रन्थि तथा गलगण्ड ( घेघा ) को नाश करता है ॥

गण्डमालायां काकादनीतैलम्—

काकादनीविशल्याह्वानदीजतुण्डिकाफलैः ॥ ३७८ ॥
जीमूतबीजकर्कोटैर्विशालाकृतवेधनैः ।
पाठान्वितैः पलार्धांशैर्विषकर्षयुतैः पचेत् ॥ ३७९ ॥
प्रस्थं करञ्जतैलस्य निर्गुण्डीस्वरसाढके ।
अनेन गण्डमाला हि चिरजा पूयवाहिनी ॥ ३८० ॥
सिद्ध्यत्यसाध्यकल्पाऽपि पानाभ्यञ्जननावनैः ।

गण्डमाला में काकादनीतैल—काकादनी ( गुञ्जा ), कलिहारी, नदीज ( हिज्जल ), तुण्डिकाफल ( बिम्बीफल ), जीमूत ( देवदाली—'बन्दाल' ) बीज ( विजयसार ), कर्कोट ( ककोडा 'चठइल ) का पत्ता, इन्द्रायण, कृत-वेधन ( नेनुआ ) का पत्ता, पाठा—आधा २ पल, विष (वत्सनाभ) एक कर्ष—इन द्रव्यों के कल्क के साथ करञ्ज का तैल एक प्रस्थ, निर्गुण्डी-स्वरस एक आढक में मिलाकर पकावे। यह तैल पान, अभ्यंजन (लेप) तथा नावन करने

से पूय देने वाली चिरकालीन असाध्य भी गण्डमाला सिद्ध हो जाती है अर्थात्—गण्डमाला का व्रण शुद्ध एवं भर जाता है ॥

रक्तपित्ते मूर्वाद्यं तैलम्—

द्राक्षामधूकमूर्वेक्षुरसचन्दनपद्मकैः ॥ ३८१ ॥
सारिवाद्वयनक्ताह्वैस्तैलप्रस्थं विपाचयेत् ।
क्षीरे चतुर्गुणे पक्वं कल्कैरक्षसमैर्भिषक् ॥ ३८२ ॥
रक्तपित्तहरं त्वेतद्वर्ण्यं वातघ्नमुत्तमम् ।
मूर्वातैलमिदं नाम्ना सवर्णकरणं परम् ॥ ३८३ ॥

रक्तपित्त में मूर्वाद्य तैल—मुनक्का, महुआ, मूर्वा (मोरवेल या मड़ोरफली), गन्ने की जड़ का रस (रसाञ्जन), चन्दन, पद्मकाठ, काला सारिवा, रक्तसारिवा, निशा ( हल्दी )—एक २ अक्ष—इन द्रव्यों के कल्क के साथ, तैल एक प्रस्थ, दूध चौगुना ( चार प्रस्थ ) में वैद्य, पकावे। यह तैल रक्तपित्त को दूर करनेवाला, कान्ति बढ़ानेवाला तथा उत्तम वातनाशक है। यह मूर्वाद्य नामक तैल, अच्छी तरह समान वर्ण बनाने वाला है ॥ ३८१–३८३ ॥

कुष्ठे विपादनं तैलम्—

कम्पिल्लकनिशायुग्मैः शालनिर्यासचित्रकैः ।
पुरकीटारिसंयुक्तैः पालिकैः सुविचूर्णितैः ॥ ३८४ ॥
एकीकृत्य समैरेभिर्विषस्य च पलद्वयम् ।
आतपे स्थापयेद्द्वौमासान् कटुतैलपरिप्लुतम् ॥ ३८५ ॥
विपादनमिदं तैलं लेपात्सिध्मविचर्चिके ।
हन्ति पामापचीव्यङ्गदुष्टव्रणभगन्दरान् ॥ ३८६ ॥

कुष्ठ रोग में विपादन तैल—कम्पिल्लक ( कबीला ), आमाहल्दी, दारुहल्दी, शाल का गोंद, चित्रक, गुग्गुलु, विडंग—एक २ पल, विष (वत्सनाभ) दो पल—इन द्रव्यों को एकत्र कर सरसों तैल एक प्रस्थ में मिलाकर सूर्य के धूप में पकावे। यह विपादन तैल लेप करने से सिध्म (सेहुआं)। विचर्चिका ( कुष्ठ भेद, हाथ-पैर में खाज, पीड़ायुक्त रूखी रेखायें उत्पन्न होना ), पामा ( स्राव, खाज, जलनयुक्त फुन्सियां "उकवत" ), अपची ( कण्ठमाला ), व्यङ्ग, दुष्ट व्रण तथा भगन्दर को नाश करता है ॥ ३८४–३८६ ॥

कुष्ठे जीवन्त्याद्यं तैलम्—

जीवन्ती मञ्जिष्ठा दार्वी कम्पिल्लकः पयस्तुत्थम् ।
एष घृततैलपाकः सिद्धः सर्जरससंयुक्तः ॥ ३८७ ॥
देयः समधूच्छिष्टो विपादिकाशामकोऽभ्यङ्गात् ।
चर्मैककुष्ठं किटिभ सिध्मं शाम्यत्यलसकं च ॥ ३८८ ॥

कुष्ठरोग में जीवन्त्याद्य तैल—जीवन्ती, मंजीठ, दारुहल्दी, कबीला, दूध, तूतिया, सर्जरस ( श्रीवेष्टक ), मोम तैल, घृत—इन सभी द्रव्यों को एकत्र कर पकावे, ( तैल तथा घृत समभाग दूध, तैल के चौगुना, कल्क द्रव्य तैल के चौथाई तथा श्रीवेष्टक और मोम—एक २ भाग मिलाना चाहिए )। यह तैल विपादिका ( बेवाई ) को शान्त करने वाला है और चर्मकुष्ठ ( "परिसर्प" त्वचापर से छिलका या भूसी निकलना ), किटिभ ( कुष्ठ का एक भेद "कालादाग" ), सेहुआं तथा अलसक ( सिर की भूसी ) को शान्त करता है ॥ ३८७–३८८ ॥

पामायां जीरकाद्यं तैलम्—

जीरकस्य पलं पिष्टं सिन्दूरार्धपलं तथा।
कटुतैलं पचेदेभिः सद्यः पामाहरं परम् ॥ ३८९ ॥

पामा ( उकवत ) में जीरकाद्य तैल—जीरा का चूर्ण एक पल, सिन्दूर आधा पल—इन द्रव्यों के साथ सरसों तैल ( छः पल ) पकावे। यह तैल शीघ्र ही पामा ( उकवत ) को अच्छी तरह दूर करता है। ( यहां द्रवद्रव्य मिलाने की आवश्यकता नहीं है क्योंकि जहां कल्क द्रव्य दो या तीन से अधिक न हो वहां द्रव द्रव्य नहीं मिलाया जाता ) ॥ ३८९ ॥

कृमिरोगे विडङ्गाद्यं तैलम्—

विडङ्गानि स्नुहीक्षीरमर्कक्षीरं तथैव च।
गुञ्जाफलानि गण्डीरं श्यामा निर्दहनी तथा ॥ ३९० ॥
एतैर्गोमूत्रसंपिष्टैस्तैलं मूर्ध्नि निधापयेत्।
कृमयः पूरणादेव नश्यन्त्यपि विमार्गगाः ॥ ३९१ ॥

कृमिरोग में विडंगाद्य तैल—विडंग, सेहुंड का दूध, मदार का दूध, गुञ्जाफल (रत्ती), गण्डीरदूर्वा, काला निशोथ, चित्रक—समभाग—इन द्रव्यों को गोमूत्र में पीस कर ( तैल के चौथाई ), सेहुंड तथा मदार का दूध तैल के बराबर मिलाकर तैल सिद्ध करे। इस तैल को सिर पर रक्खे। यह तैल सिर पर पूरण करने मात्र से विपरीत मार्ग से जाने वाले भी कृमि नष्ट हो जाते हैं ॥ ३९०–३९१ ॥

वातरोगे गुडूचीतैलम्—

तुलां पचेज्जलद्रोणे गुडूच्याः पादशेषितम्।
क्षीरद्रोणयुतं कल्कैः पचेत्तैलाढकं शनैः ॥ ३९२ ॥
पिष्टैर्मधुकमञ्जिष्ठाजीवनीयैर्युतं तथा।
कुष्ठैलागुरुमृद्वीकामांसीव्याघ्रीनखैर्नवैः ॥ ३९३ ॥
सारिवाश्रावणीव्योषमिशीशृङ्गीहरेणुभिः।

त्वक्पत्रागुरुविक्रान्तास्थिरातामलकीघनैः ॥ ३९४ ॥
नतकेसरकोशीरपद्मकोत्पलचन्दनैः ।
सिद्धं तच्छ्नकैस्तैलं पानाभ्यञ्जनवस्तिषु ॥ ३९५ ॥
धन्यं पुंसवनं स्त्रीणां गर्भदं वातपित्तनुत् ।
तोदकम्परुजायामशिरःकम्पामयार्दितान् ॥ ३९६ ॥
हन्याद् व्रणकृतान्दोषान् गुडूचीतैलमुत्तमम् ।

वातरोग में गुडूची तैल—गुडूची एक तुला, एक द्रोण जल में क्वाथ करे। चौथाई शेष क्वाथ, दूध एक द्रोण, तैल एक आढक मिलाकर कल्कार्थ—मुलेठी, मंजीठ, जीवनीयगण ( जीवक, ऋषभक, मेदा, महामेदा, काकोली, क्षीरकाकोली, माषपर्णी, मुद्गपर्णी, जीवन्ती, मुलेठी ), कूठ, इलायची, अगर, मुनक्का, जटामांसी, व्याघ्री ( कण्टकारी ), नवीन नख (नखी), सारिवा, श्रावणी ( मुण्डी ), व्योष ( सोंठ, पीपर, मरिच ), मिशी ( सौंफ ), काकड़ासिंघी, सम्भालू का बीज, दालचीनी, तेजपत्र, अगर, विक्रान्ता (हुलहुल "सुवर्चला"), शालपर्णी, भुइं आवला, मोथा, तगर, नागकेशर, खस, पद्मकाठ, नील कमल, रक्तचन्दन—इन द्रव्यों के ( तैल के चौथाई एक प्रस्थ ) कल्क के साथ धीरे २ मन्द आंच से पकावे और सिद्ध होने पर इस तैल को पान, लेप तथा वस्तिकर्म में प्रयोग करे। यह उत्तम गुडूची तैल धन देने वाला, पुंस्त्व-शक्ति देनेवाला, स्त्रियों को गर्भ देने वाला तथा वात-पित्त को नष्ट करने वाला है और तोद ( छेदने की तरह व्यथा ), कम्प रोग, आयाम, सिर का कांपना, अर्दित ( आधा चेहरा का बांका होना ), तथा व्रणकृत दोषों को नाश करता है ॥

वातरोगे द्वितीयं गुडूचीतैलम्—

अमृतायास्तुलाः पञ्च द्रोणेष्वष्टास्वपां पचेत् ॥ ३९७ ॥
पादशेषं तु सक्षीरं तैलस्यार्धाढकं पचेत् ।
एलामांसीनतोशीरसारिवाकुष्ठचन्दनैः ॥ ३९८ ॥
शतपुष्पावलामेदामहामेदर्धिजीवकैः ।
काकोलीक्षीरकाकोलीश्रावण्यतिबलानखैः ॥ ३९९ ॥
महाश्रावणिकाजीवाविदारीकपिकच्छुभिः ।
शतावर्योऽथ भूधात्रीकर्कटाख्याहरेणुभिः ॥ ४०० ॥
वचागोक्षुरकैरण्डरास्नाकालासहाचरैः ।
द्विजीरकसहादारुवृषभैश्चापि कार्षिकैः ॥ ४०१ ॥
मञ्जिष्ठायास्त्रिकर्षेण मधुकाष्टपलेन तु ।

कल्कैस्तत्क्षीणवीर्याग्निबलसंमूढचेतसः ॥ ४०२ ॥
युक्तानुन्मादकम्पापस्मारैश्च प्रकृतिं नयेत् ।
वातव्याधिहरं श्रेष्ठं तैलाग्र्यममृताह्वयम ॥ ४०३ ॥

वातरोग में गुडूची तैल—गुडूची पांच तुला, आठ द्रोण जल में क्वाथ करे चतुर्थांश शेष क्वाथ, दूध ( तैल के बराबर ), तैल आधा आढ़क ( दो प्रस्थ ), कल्कार्थ—इलायची, जटामांसी, तगर, खस, सारिवा, कूठ, रक्तचन्दन, सौंफ, बरियार, मेदा, महामेदा, ऋद्धि, जीवक, काकोली, क्षीरकाकोली, मुण्डी, कंघी, नख (नखी), महाश्रावणिका (बड़ी मुण्डी), जीवन्ती, विदारीकन्द, केंवाछ का बीज, शतावरी, मुद्ग आंवला, काकड़ासिंघी, सम्भालू का बीज, वच, गोखरू, रेंड की जड़, रास्ना, कालीझिण्टी, स्याहजीरा, सफेदजीरा, सहा ( मुद्गपर्णी ), देवदारु, अडूसा—एक २ कर्ष, मंजीठ तीन कर्ष, मुलेठी आठ पल—इन द्रव्यों के कल्क के साथ तैल सिद्ध करे। यह तैल क्षीणवीर्य, मन्दाग्नि, निर्बल, संमूढ चित्तवाले, उन्माद, कम्प तथा अपस्मार से युक्त व्यक्तियों को प्रकृति ( साम्यावस्था ) मे अर्थात् इन रोगों से रहित करता है। तैलों में श्रेष्ठ यह अमृता नामक तैल उत्तम वातव्याधिनाशक है ॥ ३९७–४०३ ॥

वातरोगे सहचरं तैलम्—

समूलशाखस्य सहाचरस्य तुला समेतां दशमूलतश्च ।
पलानि पञ्चाशदभीरुतश्च पादावशेष विपचेद्वहेऽपाम् ॥ ४०४ ॥
तत्र सेव्यनखकुष्ठहिमैलास्पृक्प्रियङ्गुनलिकाम्बुशिलाजैः ।
लोहितानलदलोहसुराह्वैः कोपनामिशितुरुष्कनतैश्च ॥ ४०५ ॥
तुल्यक्षीरे पालिकैस्तैलपात्रं
सिद्धं कृच्छ्रान्छीलित हन्ति वातान् ।
कम्पाक्षेपस्तम्भशोपादियुक्तान्
गुल्मोन्मादान् पीनसं योनिरोगान् ॥ ४०६ ॥

वातरोग में सहचर तैल—मूल-शाखा सहित सहाचर ( कटसरैया ) एक तुला, दशमूल ( बिल्व, गम्भारी, पाटला, अरलु, अरणी, शालपर्णी, पृश्निपर्णी, वनभंटा, रेगनी, गोखरू ) एक तुला, अभीरु ( शतावरी ) पचास पल—इन द्रव्यों को चार द्रोण जल मे क्वाथ करे, चौथाई शेष क्वाथ मे तैल एक आढ़क, दूध—समभाग (एक आढ़क)—मिला कर कल्कार्थ—खस, नख (नखी), कूठ, हिम ( चन्दन ), इलायची, स्पृक् ( सुगन्धद्रव्य ), प्रियंगु, नलिका (प्रवाली), सुगन्धवाला, छडीला, मजीठा, नलद ( जटामांसी ), लोह ( अगर ), देवदारु, कोपना ( हल्दी ), सौंफ, तुरुष्क ( शिलारस ), नत-तगर—एक २ पल—इन द्रव्यों के कल्क के साथ तैल सिद्ध करे। यह तैल प्रयोग करने से कष्टप्रद

वातरोग, कम्पवात, आक्षेप, स्तम्भवात, सूखा रोग आदि से युक्त वातरोग, गुल्म, उन्माद, पीनस तथा योनिरोगों को नाश करता है ॥ ४०४–४०६ ॥

वातरोगे नीलसहचरतैलम्—

सहचरहस्ती नीलोत्पलशतगात्रस्तृषातुरः पतितः ।
सलिलद्रोणतडागे सुतप्तघर्मांशुतप्त इव ॥ ४०७ ॥
तैलप्रस्थमतोऽस्मै दद्यात्तैलाच्चतुर्गुणं च पयः ।
मदगन्धसुरभिसैन्धवकल्कैश्चाक्षोन्मितैर्लिप्तः ॥ ४०८ ॥
एलामृणालकुष्ठप्रियङ्गुकाश्मीरपुरलोहैः ।
श्रीवेष्टकसजरसैश्चन्दनशैलेयरजनीभिः ॥ ४०९ ॥
दारुशताह्वापथ्याकेसररसपेलवघनैश्च ।
तीर्णो मालतीसुमैः सहचरनीलाशवनपतितः ॥ ४१० ॥
मेदोस्थिमज्जमांसासृग्रुधिरशुक्रसंश्रयांश्चिरोत्पन्नान् ।
हन्याद्वातविकारानशीतिमेतन्महानीलम् ॥ ४११ ॥

वातरोग में नीलसहचर तैल—अनेक नील पुष्प से युक्त मूल-पत्र-शाखा सहित, नील सहचर ( नील कटसरैया ) उखाड़ कर टुकड़ा २ काट तथा कूट कर, दो द्रोण जल में मिलाकर, तीव्र धूप में सुखाये। चौथाई शेष रहने पर छान कर तैल दो प्रस्थ, दूध आठ प्रस्थ और कल्कार्थ—मदगन्ध ( सप्तपर्ण ), रास्ना, सेन्धानमक, इलायची, कमल का नाल, कूठ, प्रियंगु, केशर, गुग्गुल, तगर, श्रीवेष्ट ( धूपवृक्ष ), राल, छड़ीला, हलदी, देवदारु, सोया, हर्रे, नागकेशर, रस ( रसांजन ), पेलव ( केवटीमोथा ), मोथा, मालतीपुष्प—एक २ अक्ष—इन द्रव्यों का कल्क मिलाकर मन्द आंच से धीरे २ पकावे। यह महानील तैल, पुराना मेद-अस्थि-मज्जा-मास-असृक् ( रुधिर ) तथा शुक्रगत अस्सी प्रकार के वात रोगों को नाश करता है। अपने सहचर सहित जिस प्रकार धूप से संतप्त तथा प्यास से व्याकुल हाथी सैकड़ों नीलकमल के पत्तों से आच्छादित, जलपूर्ण तड़ाग में डूबकर अपने सताप को दूर करता है, वैसे ही मेदा, अस्थि, मज्जा आदिगत वात से पीड़ित रोगी नीलसहचर तेल में अवगाहन कर ८० प्रकार के वातरोगों से शान्ति प्राप्त करता है ॥४०७–४११॥

वातरोगे दशमूलाद्यं तैलम्—

दशाङ्घ्रिकेशरारिष्टब्राह्मीपाठाकटुत्रिकैः ।
शटीपुनर्नवाभार्गीसुरसाम्बुफलत्रिकैः ॥ ४१२ ॥
शङ्खपुष्पीत्वगेलार्कमुनिपादपपल्लवैः ।
अङ्कोटवरुणास्फोतशिरीषकटभीफलैः ॥ ४१३ ॥
कृमिघ्नमूलशम्पाकसर्षपामरदारुभिः ।

प्रियंगुहिंगुमञ्जिष्ठासुमुखातन्दुलीयकैः ॥ ४१४ ॥
गिरिकर्णीवचाकुष्ठकङ्कुष्ठरजनीद्वयैः ।
मधूकसारसिन्धूत्थसितनीलोत्पलाम्बुदैः ॥ ४१५ ॥
कटुतैलं समैरेभिः पक्वं क्षीरे चतुर्गुणे ।
सोन्मादं हन्त्यपस्मारं पानाभ्यञ्जननावनैः ॥ ४१६ ॥
डाकिनीभूतवेतालनैगमेषादिकान् ग्रहान् ।
कृत्याभिचाररक्षांसि नाशयत्यखिलान्यपि ॥ ४१७ ॥
तैलमेतत्सुरेन्द्रेण नन्दस्य कथितं पुरा ।
बालस्य किल रक्षार्थं विष्णोरमिततेजसः ॥ ४१८ ॥
अभ्यज्य सर्वगात्राणि भोक्तव्यं रिपुवेश्मनि ।
तैलमभ्यञ्जनं श्रेष्ठं वसतोऽरातिसङ्कटे ॥ ४१९ ॥
अथ विलिप्तभगा भगशालिनी यदि रमेत नरं दिवसे शुभे ।
मदनसायकजर्जरितोरसो भवति तस्य तयाऽपहृतं मनः ॥ ४२० ॥
ताम्बूलमुखवासेषु व्यञ्जनाहारयोगतः ।
अनामिकाग्रसंयुक्तं वशीकरणमुत्तमम् ॥ ४२१ ।'

वातरोग में दशमूलाद्य तैल—दशाङ्ग ( दशमूल–बेल, गम्भारी, पाटला, अरलू, अरणी, सरिवन, पिठवन, वनभंटा, रेगनी, गोखरू ), नागकेशर, अरिष्ट, ( निम्ब ), ब्राह्मी, पाढ़ी, कटुत्रिक ( सोंठ, पीपर, मरिच ), कपूरकचरी, पुनर्नवा, भांगरा, तुलसी, सुगन्धवाला, फलत्रिक ( हर्रे, बहेडा, आंवला ), शंखपुष्पी, दालचीनी, इलायची, मदार, अगस्त्य का पल्लव, अकोट ( ढेरा ), वरुण, आस्फोत ( कृष्ण सारिवा ), सिरिस, कटभीफल ( मालकांगनी ), विडंग की जड़, शम्पाक ( अमलतास ), सरसो, देवदारु, प्रियंगु, हिंगु, मंजीठ, सुमुखा ( तुलसीभेद ), तण्डुलीयक ( चौराई ), अपराजिता, वच, कूठ, कंकुष्ठ ( मुर्दाशंख ), आमाहल्दी, दारुहल्दी, महुआ की लकडी, सेन्धानमक, सफेद कमल, नीलकमल, मोथा—इन द्रव्यों के कल्क के साथ सरसों का तैल, तैल के चौगुना दूध मिला कर सिद्ध करे। यह तैल—पान, लेप तथा नावन करने से—उन्माद, अपस्मार को नाश करता है। और डाकिनी, भूत, वेताल, नैगमेष आदिक ग्रह, अभिचार कृत्य तथा सभी राक्षस-दोष आदि को नाश करता है। इस तैल के अमित पराक्रमी बालक कृष्ण की रक्षा के लिये इन्द्र ने पहले नन्द जी से कहा था। शत्रु के घर में इस तैल को सम्पूर्ण शरीर में लगा कर भोजन करना चाहिए। शत्रु से संकट आ जाने पर इस तैल का लेप श्रेष्ठ है। यदि नवयौवना स्त्री इस तैल को अपने भग मे लेप कर पुरुष के साथ रमण करे तो वह स्त्री कामदेव के बाण से जर्जरित हृदय

वाले पुरुष के मन को अपहरण कर लेती है। पान आदि मुख को सुगन्धित करने वाली चीजों में, तथा खाद्य पदार्थों में प्रयोग करने से एवं अनामिका अंगुली के अग्रभाग में लगाने से यह तैल उत्तम वशीकरण ( मन को वश मे करने वाला ) हो जाता है ॥ ४१२–४२१ ॥

भग्ने गन्धतैलम्—

रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले ।
दिवा दिवा विशोष्यापि गवां क्षीरेण भावयेत् ॥ ४२२ ॥
तृतीयं सप्तरात्रं तु भावयेन्मधुकाम्बुना ।
ततः क्षीरं पुनः पीतान् सुशुष्कांश्चूर्णयेद् बुधः ॥ ४२३ ॥
काकोल्यादिं सयष्ट्याह्वं मञ्जिष्ठां सारिवां तथा ।
कुष्ठं सर्जरसं मांसीं सुरदारु सचन्दनम् ॥ ४२४ ॥
शतपुष्पां च संचूर्ण्य तिलचूर्णेन योजयेत् ।
पीडनार्थे प्रकर्तव्यं सर्वगन्धशृतं पयः ॥ ४२५ ॥
चतुर्गुणेन तोयेन तत्तैलं विपचेद्भिषक् ।
एलामंशुमतीं पत्रं जीरकं तगरं तथा ॥ ४२६ ॥
रोध्रं प्रपौण्डरीकं च तथा कालानुसारिवाम् ।
क्षीरशुक्लां च सैरेयमनन्तां समधूलिकाम् ॥ ४२७ ॥
पिष्ट्वा शृङ्गाटकं चैव पूर्वोक्तान्यौषधानि च ।
एभिस्तद्विपचेत्तैलं शास्त्रविन्मृदुनाऽग्निना ॥ ४२८ ॥
एतत्तैलं सदा पथ्यं भग्नानां सर्वकर्मसु ।
पक्षघाते तालुशोषे ह्याक्षेपे च तथाऽर्दिते ॥ ४२९ ॥
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे ।
बाधिर्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ॥ ४३० ॥
पथ्यं पाने तथाऽभ्यङ्गे नस्ये बस्तिषु भोजने ।
ग्रीवास्कन्धोरसां वृद्धिरमुनैवोपजायते ॥ ४३१ ॥
मुखं च पद्मसंकाशं ससुगन्धिसमीरणम् ।
गन्धतैलमिदं नाम्ना सर्ववातविकारनुत् ।
कार्यं राजार्हमेतत्तु राज्ञामेव विचक्षणैः ॥ ४३२ ॥

भग्न होने पर गन्ध तैल—परिपुष्ट काले तिल को प्रतिरात्रि में अस्थिर जल में भिगोये और प्रतिदिन दिन में सुखा कर गाय के दूध से भावित करे। और पुनः रात्रि में जल में भिगो दे। इस प्रकार चौदह दिन तक करे। तृतीय सप्ताह में, दूध के स्थान पर मुलेठी के क्वाथ की भावना दे। इसके बाद पुनः दूध की भावना देकर और सुखा कर चूर्ण बना ले। इसके बाद काकोल्यादि

गण औषधि, मुलेठी, मंजीठ, सारिवा, कूठ, राल, जटामांसी, देवदारु, रक्तचन्दन, सौफ—इन द्रव्यों को चूर्ण कर तिल के चूर्ण में मिला दे और सभी गन्ध-द्रव्यों को दूध में पका कर उस दूध से मिश्रित कर तिलचूर्ण का तैल निकाले। इसके बाद इस प्रकार निकाले हुए तैल को चौगुना जल में पकावे और उसमें इलायची, जोतिष्मती, पतंग, स्याहजीरा, तगर, लोध, प्रपौण्डरीक, कालासारिवा, चीरशुक्ला ( चीरकाकोली ), कटसरैया, अनन्तमूल, सौफ, सिंहाड़ा तथा पूर्वकथित काकोल्यादि—शतपुष्पान्त द्रव्यों को पीस कर उसमें मिला दे और अनुभवी वैद्य मन्द आंच से पकावे। यह सिद्ध तैल भग्न व्यक्तियों के सभी कर्म, पान-मर्दन आदि मे पथ्य है। पक्षाघात, तालुशोष, आक्षेपक, अर्दित, मन्यास्तम्भ, शिरोरोग, कर्णरोग, हनुग्रह, बहरापन, तिमिर रोग तथा स्त्री-प्रसंग से क्षय के रोगियों के रोग में पथ्य अर्थात् इन रोगों को नाश करने वाला है। यह तैल, पान-लेप-नस्यकर्म-वस्तिकर्म तथा भोजन में प्रशस्त है और इसी तैल से ग्रीवा, कन्धा तथा छाती की वृद्धि होती है और मुख कमल के समान तथा सुगन्ध देने वाला हो जाता है। यह गन्धनामक तैल सभी प्रकार के वातविकारों को नाश करने वाला है। विद्वान् वैद्य राजाओं के योग्य इस तैल को राजाओं के कार्य मे ही प्रयोग करे। ( इस योग में परिमाण का निर्देश नहीं किया गया है अतः कल्क-द्रव्य तैल के चतुर्थांश लेना चाहिए )॥ ४२२–४३२ ॥

बृहत्सहचरतैलम्—

काथे साहचरे वरीपरियुते क्षुद्रामृतैरण्डजे
श्योनाकार्णिबिल्वगोक्षुरयुते सिंहाग्निमन्थोद्भवे।
रास्नोशीरविशालदारुतगरैस्त्वक्पत्रमेदानखैः
स्पृक्काशैलघनैलवालुसरलैः कङ्कोलकुष्ठोत्पलैः॥ ४३३॥
कौन्तीकेशिबलाद्विसारिवनिशाश्यामाशताह्वानतै-
मञ्जिष्ठापुरसिह्लचन्दनवरैश्चण्डाह्वस्थौणेयकैः।
श्रीवेष्टागरुरोध्रकुङ्कुमवरैः कल्कैः समांशैः खलु-
तैलं क्षीरसमं विपाच्य विधिना वस्तौ च नस्ये ध्रुवम्॥४३४॥
पानाभ्यङ्गविधौ नियोजितमिदं वातादिसर्वामयान्
गुल्माष्ठीलशिरोर्तिशूलमुदरं श्वासामकासज्वरम्।
शोफं प्लीहगुदामयं च जठरं धातुक्षयाध्मानकं
अर्शः कुष्ठभगन्दरं च शमयेत्सर्वान् व्रणान् हन्ति च॥ ४३५॥
जयति पवनरोगान् कामलां विड्विबन्धं
दिननिशि तिमिरान्ध्यं गृध्रसीं मूर्ध्नि वातम्।

सहचरमिति नाम्ना तैलमेतत्प्रसिद्धं
धनपतिनृपयोग्यं भाषितं शम्भुनैव ॥ ४३६ ॥

बृहत्सहचर तैल—सहचर ( कटसरैया ), शतावरी, भटकटैया, गुडूची, रेंड़ की जड़, अरलू, अरणी, बेल की छाल, गोखरू, छो० अरणी—इन द्रव्यों को चौगुने जल में क्वाथ करने पर चतुर्थांश क्वाथ में रास्ना, खस, इन्द्रायण, देवदारु, तगर, दालचीनी, तेजपत्र, मेदा, नख (नखी), स्पृक्का ( सुगन्धित द्रव्य विशेष ), छड़ीला, मोथा, एलवालु, चोढ़, कंकोल ( ढेरा ), कूठ, नीलकमल, कौन्ती, (सम्भालू का बीज), जटामांसी, बरियार, कृष्ण सारिवा, रक्तसारिवा, आमाहल्दी, दारुहल्दी, काला निशोथ, सोया, तगर, मंजीठ, गुग्गुलु, सिह्ल ( शिलारस-तुरुष्क ), चन्दन, त्रिफला, चण्डाह्व ( चोरक ), स्थौणेयक ( सुगन्धि द्रव्य विशेष ), श्रीवेष्टक ( धूपवृक्ष ), अगर, लोध, केशर—समभाग—इन द्रव्यों के कल्क ( तैल के चौथाई ) के साथ तैल के बराबर दूध मिलाकर तैल को सिद्ध करे। यह तैल विधिपूर्वक वस्तिकर्म, नस्यकर्म, पान तथा अभ्यङ्ग ( लेप ) में प्रयोग करने से वातादिक सभी रोगों को गुल्म, अष्ठीला, शिरोरोग, शूल, उदरशूल, श्वास, कास, ज्वर, शोथ, प्लीहावृद्धि, गुदारोग, जठररोग, धातुक्षय, आध्मान, अर्श, कुष्ठ रोग तथा भगन्दर को शान्त करता है। और सभी व्रणों को नाश करता है। यह प्रसिद्ध सहचरनामक तैल वात रोग, कामला, विड्विबन्ध ( मलावरोध ), दिनान्ध्य, राज्यान्ध्य, तिमिर रोग, गृध्रसी तथा मूर्धवात को जीत लेता है। यह तैल शम्भु का कहा हुआ धनी तथा राजाओं के योग्य है ॥ ४३३–४३६ ॥

तरक्ष्वाद्यं तैलम्—

तरक्षोश्च शृगालस्य पादावन्त्राणि संत्यजेत् ।
कोष्ठसारादिकं सर्वमुत्क्वाथ्य बहुलेऽम्भसि ॥ ४३७ ॥
पादशेषं परिगृह्य छागगव्यपयोन्वितम् ।
तैलं रससमं दत्त्वा मदिरामस्तुकाञ्जिकम् ॥ ४३८ ॥
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ।
करञ्जस्त्रिवृता मुस्ता पत्राङ्गं रेणुक त्वचम् ॥ ४३९ ॥
क्षारद्वयं तथा व्योष पञ्चैव लवणानि च ।
वचा तुरगगन्धा च मञ्जिष्ठा सर्जगुग्गुलू ॥ ४४० ॥
मेदा रास्ना च वर्षाभूरेला शैलेयकं बला ।
एतैरर्धपलैर्द्रव्यैः शनैर्मृद्वग्निना पचेत् ॥ ४४१ ॥
तैलं तेनैव नश्यन्ति रोगा देहे शरीरिणाम् ।
अशीतिं वातजान् रोगान् शोफं शूलं कटिग्रहम् ॥ ४४२ ॥

मांसमेदःश्रितं वायुं हर्ष चैव भगन्दरम् ।
लूतां सद्योव्रणं चैव नाडीदुष्टव्रणानि च ॥ ४४३ ॥
भूतग्रहमपस्मारमुन्मादं च नियच्छति ।
हन्ति वातमसाध्यं च पामादद्रुविचर्चिकाः ॥ ४४४ ॥
एतत्तैलं सदाभ्यङ्गात्सर्वरोगहरं नृणाम् ।

तरक्ष्वाद्य तैल—तरक्षु ( तेंदुआ "बाघ" ) तथा शृगाल के पैर तथा अतड़ी के मांस को निकाल दे और कलेजी आदि उत्तम मांस को लेकर बहुत जल ( अठगुने जल ) में क्वाथ करे और चौथाई शेष मांसरस को लेकर बकरी तथा गाय का दूध ( तैल के बराबर ), तैल मांसरस के बराबर मिलाकर मद्य का तोड, कांजी ( तैल के समभाग ) छोड़ कर कल्कार्थ—देवदारु, आमाहल्दी, दारुहल्दी, जटामांसी, कूठ, चन्दन, करञ्ज, निशोथ, 'मोथा, पतङ्ग, सम्भालू का बीज, दालचीनी, सर्ज्जीखार, यवक्षार, व्योष ( सोंठ, पीपर, मरिच ), सेन्धानमक, सौवर्चल, विड, सांभर, सामुद्रनमक, वच, अश्वगन्धा, मंजीठ, राल, मेदा, रास्ना, पुनर्नवा, इलायची, छरीला, बरियार-आधा २ पल—इन द्रव्यों के कल्क के साथ धीरे २ मन्द आंच से तैल सिद्ध करे । इसी तैल से मनुष्यों के शरीर के रोग नष्ट हो जाते हैं । यह तैल अस्सी प्रकार के वात रोग, शोथ, शूल, कटिग्रह ( कमर का जकड़न ), मांस तथा मेद गत वायु, हर्ष ( रोमांच ), भगन्दर, लूताविष, सद्योव्रण, दुष्टनाडीव्रण ( नासूर ), भूतदोष, अपस्मार तथा उन्माद को दूर करता है और असाध्य वातरोग, उकवत, दाद तथा पीडायुक्त खुजली को नाश करता है । यह तैल निरन्तर प्रयोग करने से मनुष्यों के सभी रोगों को दूर करने वाला है । ( इस योग में मांस का परिमाण नहीं दिया गया है अतः मांस एक तुला, जल दो द्रोण, तैल आठ प्रस्थ, दूध आठ प्रस्थ, मद्यादि आठ प्रस्थ लेना उपयुक्त है ) ॥ ४३७-४४४ ॥

व्याघ्रतैलम्—

व्याघ्रशिरः समादाय क्वाथयित्वा जले बहु ॥ ४४५ ॥
उलूखले तु संकुट्य रस नीत्वा सुगालितम् ।
कटाहे सुदृढे दत्त्वा पचेत्साधु विधानतः ॥ ४४६ ॥
द्रव्याण्येतानि वै वैद्यः पादमानेन दापयेत् ।
देवदारु वचा कुष्ठं तगरं चन्दनं घनः ॥ ४४७ ॥
मञ्जिष्ठा पुष्करं रास्ना चातुर्जातकसैन्धवम् ।
पिप्पली मरिचं शुण्ठी मांसी सहचरो जलम् ॥ ४४८ ॥
अश्वगन्धात्मगुप्ते च क्रमुकश्च शतावरी ।

श्वदंष्ट्रा केतकी मूर्वा मधुकं चागुरुस्तथा ॥ ४४९ ॥
जात्याः फलं तथा पत्री तथा कटुकरोहिणी ।
ग्रन्थिकं शुक्लकन्दा च शतपुष्पा पुनर्नवा ॥ ४५० ॥
जीवनीयो गणश्चैव रालकेसरबोलकम् ।
नखं च कृष्णसारश्च वत्सनाभस्तथैव च ॥ ४५१ ॥
अस्य तैलस्य सिद्धस्य शृणु वीर्यमतः परम् ।
अशीति वातजान् रोगान् हन्यादाशु प्रयोजितम् ॥ ४५२ ॥
अश्वानां वातभग्नानां शिशूनां करिणामपि ।
अंशशोपे खुडे वाते क्रोष्टुशीर्षे कटिग्रहे ॥ ४५३ ॥
मन्यास्तम्भे हनुश्रोत्रवाते मन्दे तथाऽनले ।
पुत्रोत्पादि तु वन्ध्यानां षण्ढानां कामवर्धनम् ॥ ४५४ ॥
अश्विभ्यां निर्मित चैव प्रजानां हितकारकम् ।
अनेनैव विधानेन तैल तारक्षवं पचेत् ॥ ४५५ ॥

व्याघ्र तैल—व्याघ्र का शिर कूटकर दो द्रोण जल में क्वाथ करे और अच्छी तरह छान ले। इस रस को मजबूत कड़ाही में डालकर, तैल के चौथाई निम्न लिखित कल्क द्रव्यों को तथा तैल ( एक आढक ) छोड़कर विधिपूर्वक तैल पकावे। कल्कार्थ—देवदारु, वच, कूठ, तगर, चन्दन, मोथा, मंजीठ, पुष्कर-मूल, रास्ना, चातुर्जातक ( इलायची, दालचीनी, तेजपत्र, नागकेशर, ) सेन्धा-नमक, पीपर, मरिच, सोंठ, जटामांसी, सहचर ( कटसरैया ), जल ( सुगन्ध-वाला ), अश्वगन्धा, केवांछ का बीज, सुपारी, शतावरी, गोखरू, केतकी का फूल, मूर्वा ( मोरवेल ), मुलेठी, अगर, जायफर, जावित्री, कुटकी, पिपरामूल, शुक्लकन्दा ( मुसली ), सौंफ, पुनर्नवा, जीवनीयगण ( जीवक, ऋषभक, मेदा, महामेदा, काकोली, क्षीर-काकोली, मापपर्णी, मुद्गपर्णी, जीवन्ती, मुलेठी), राल, केशर, बोल (गन्धरस), नख (नखी), कृष्णसार (कस्तूरी), वत्सनाभ—इन द्रव्यों ( तैल के चौथाई भाग—एक प्रस्थ ) का कल्क मिला दे। इसके बाद इस सिद्ध तैल के वीर्य को सुनो। इस तैल का प्रयोग करने से अस्सी प्रकार के वातरोगों को, वातपीड़ित, अश्व, बालक तथा हाथियों के भी वातरोग को, अंशशोष, खुड ( वातरक्त ), वातरोग, क्रोष्टुशीर्ष, कटिग्रह, मन्यास्तम्भ, हनुवात, श्रोत्रवात तथा मन्दाग्नि मे प्रयोग करने से इन सभी रोगों को शीघ्र ही नाश करता है। बांझ स्त्रियों को भी पुत्र देनेवाला तथा नपुंसकों को काम बढाने वाला है। यह तैल अश्विनीकुमार का बनाया हुआ प्रजाओं का हित करने वाला है। इसी प्रकार, तारक्षव तैल को भी पकावे ॥ ४४५–४५५ ॥

वातारितैलम्—

शतावर्यास्तुलामेकां तुलां गोक्षुरकस्य च ।
तुलार्धं तिलतैलस्य चैरण्डस्य पलानि षट् ॥ ४५६ ॥
एरण्डच्छदनद्रावपलानि नव कारयेत् ।
बुकशिग्रुकतर्कारीसिन्दुवारसुवर्णकात् ॥ ४५७ ॥
नीलिकाग्रन्थिपर्णाभ्यां करञ्जात्केशरञ्जकात् ।
षट्पलं गुग्गुलोर्दत्त्वा तैलं मृद्वग्निना पचेत् ॥ ४५८ ॥
कौब्जाक्षेपकपाङ्गुल्यसुप्तत्वङ्मन्दगामिताः ।
पक्षाघातहनुस्तम्भसन्धिरोगादिकानपि ॥ ४५९ ॥
नाशयेत्तत्क्षणादेव तमः सूर्योदयो यथा ।
तैलं वातारिनामेदं सर्ववातहरं परम् ॥ ४६० ॥

वातारि तैल—शतावरी का रस एक तुला, गोखरू का रस एक तुला, तिल का तैल आधा तुला, एरण्डमूल-क्वाथ छ पल, रेड़ के पत्ता का रस नव पल, कल्कार्थ—उरुबूक ( एरण्ड ), सहिजन, जयन्ती, सिन्दुवार, सुवर्णक (नागकेशर ), नीलिका (नील), ग्रन्थिपर्ण (गठिवन), करंज, केशरंजक (भृङ्गराज)—इन द्रव्यों का कल्क ( तैल के चतुर्थांश ), गुग्गुलु छः पल मिलाकर तैल मन्द आँच से पकावे, । यह तैल कुब्जवात, आक्षेपक, पङ्गुत्व, सुप्तचर्म, धीरे २ चलना, पक्षाघात, हनुस्तम्भ, सन्धिरोग, गठिया आदि को शीघ्र ही नाश करता है । जैसे सूर्योदय अन्धकार को नाश करता है । यह वातारि नामक तैल सभी प्रकार के वात रोगों को अच्छी तरह दूर करने वाला है ॥४५६–४६०॥

दारुणके सारिवाद्यं तैलम्—

सारिवोग्रामृतायष्टीत्रिफलानीलमुत्पलम् ।
नीलीभृङ्गारकासीस-महानिम्बफलानि च ॥ ४६१ ॥
कटुतैलं पचेदेभिः सार्धं यवरसेन तु ।
कण्डूं दारुणकं हन्ति शिरोरोगे च शस्यते ॥ ४६२ ॥

दारुणक रोग में सारिवाद्य तैल—सारिवा, वच, गुडूची, मुलेठी, त्रिफला ( हर्रे, बहेड़ा, आंवला ), नीलकमल, नील, भृङ्गराज, कासीस, बकायन, मदनफल—समभाग, तैल के चतुर्थांश इन द्रव्यों के कल्क के साथ तैल के चौगुना यवरस ( यवको चौगुने जल मे क्वाथ कर अवशिष्ट चौथाई रस ) में सरसों का तैल सिद्ध करे । यह तैल कण्डु, दारुणक ( सिर से भूसी उतरना ) को नाश करता है और शिरोरोग में प्रशस्त है ॥ ४६१–४६२ ॥

वातरोगे दशाङ्गं तैलम्—

तर्कारीभृङ्गशिग्रूणां निर्गुण्डीशणयोस्तथा ।

वातघ्नवृपजातीनां निम्बभास्करयोरपि ॥ ४६३ ॥
स्वरसं तु समादाय प्रत्येकं प्रस्थमानतः।
प्रस्थं तु तिलतैलस्य शनैर्मृद्वग्निना पचेत् ॥ ४६४ ॥
एरण्डमूलवर्षाभूहयगन्धाशतावरी-
रास्नागोक्षुरकाश्चैव शतपुष्पा च सैन्धवम् ॥ ४६५ ॥
प्रत्येकं कर्षमादाय कर्षार्धं त्रिकटोस्तथा ।
एलात्वक्पत्रमांसीनां कर्षार्धं च विनिक्षिपेत् ॥ ४६६ ॥
तैलेनानेन नश्यन्ति वातरोगाः सुदारुणाः ।
आक्षेपकं हनुस्तम्भमपतन्त्रकमर्दितम् ॥ ४६७ ॥
अपबाहुकविश्वाचीपक्षाघातापतानकम् ।
स्नायुसन्धिगतं वातं सप्तधातुगतं तथा ॥ ४६८ ॥
ऊरुस्तम्भामवातौ च वातरक्तं सुदारुणम् ।
दशाङ्गसञ्ज्ञकं तैलं हन्यादन्यांश्च वातजान् ॥ ४६९ ।

वात रोग में दशांग तैल—जयन्ती, भृंगराज, सहिजन, निर्गुण्डी, सन, रेड़, अडूसा, चमेली का पत्ता, निम्ब, मदार—इन द्रव्यों का स्वरस एक २ प्रस्थ लेकर, तिलका तैल एक प्रस्थ, कल्कार्थ—रेड की जड़, पुनर्नवा, अश्वगन्धा, शतावरी, रास्ना, गोखरू, सौंफ, सेन्धानमक,—प्रत्येक एक २ कर्ष, त्रिकटु ( सोंठ, पीपर, मरिच ), इलायची, दालचीनी, तेजपत्र, जटामांसी आधा २ कर्ष—इन द्रव्यों के कल्क को मिलाकर, धीरे २ मन्द आँच से तैल सिद्ध करे। इस तैल के प्रयोग से भयंकर वातरोग नष्ट होते हैं। यह दशांग नामक तैल आक्षेपक, हनुस्तम्भ, अपतन्त्रक, अर्दित, अपबाहुक, विश्वाची, पक्षाघात, अपतानक, स्नायु तथा सन्धिगत वात, रसादि सप्त धातुगत वात, ऊरुस्तम्भ, आम वात तथा अन्य वातरोगों को नाश करता है ॥४६३–४६९॥

कर्पूराद्यं तैलम्—

कर्पूरचन्दनवचासुरदारुमूर्वा-
गन्धर्वमूलरजनीद्वयसिन्धुजातैः ।
मेदाद्वयत्रिकटुपुष्करमूलकुष्ठ-
रास्नाह्वयासुहरितालककुङ्कुमैश्च ॥ ४७० ॥
पथ्याक्षकास्थितगरागुरुसारमेप-
शृङ्गीजटाह्वययुतैः खलु कल्कितैश्च ।
गोदुग्धयुक् कटुकतैलमिदं विपक्वं
ख्यातं निहन्ति सहसा विविधा रुजश्च ॥ ४७१ ॥

कर्पूराद्य तैल—कपूर, चन्दन, वच, देवदारु, मूर्वा ( मोरवेल ), गन्धर्व-

मूल ( एरण्ड की जड ); आमाहल्दी, दारुहल्दी, सेन्धानमक, मेदा, महामेदा, त्रिकटु ( सोंठ, पीपर, मरिच ), पुष्करमूल, कूठ, रास्ना, यास ( यवासा ), हरिताल, केशर, हर्रे बहेडा का बीज, तगर, अगर का मज्जा, मेढ़ासिंघी, जटामांसी—समभाग, तैल के चौथाई—इन द्रव्यों के कल्क के साथ तैल के चौगुना दूध मिलाकर सरसों का तैल सिद्ध करे। यह प्रसिद्ध तैल एकाएक अनेक प्रकार के रोगों को नाश करता है ॥ ४७०-४७१ ॥

ज्वरे लाक्षादिकं तैलम्—

लाक्षारससमं तैलं तैलान्मस्तु चतुर्गुणम् ।
अश्वगन्धानिशादारुकौन्तीकुष्ठाब्जचन्दनैः ॥ ४७२ ॥
मूर्वारोहिणिकारास्नाशताह्वामधुकैः सह ।
सिद्ध लाक्षादिकं नाम तैलमभ्यञ्जनादिभिः ॥ ४७३ ॥
सर्वज्वरविषोन्मादश्वासापस्मारकासनुत् ।
यक्षराक्षसभूतघ्नं गर्भिणीनां च शस्यते ॥ ४७४ ॥
पित्तज्वरेण तीव्रेण दह्यमानस्य देहिनः ।
प्रवातमन्दिरस्थस्य कुर्याच्छीतामिमां क्रियाम् ॥ ४७५ ॥

ज्वर मे लाक्षादिक तैल—लाख का रस तैल के बराबर, मस्तु ( दही का तोड़ ) तैल—के चौगुना इन मे तैल, मिलाकर, कल्कार्थ—अश्वगन्धा, आमाहल्दी, दारुहल्दी, कौन्ती ( रेणुका बीज ), कूठ, कमल, चन्दन, मूर्वा ( मोरवेल या मडोरफली ), मांसरोहिणी, रास्ना, सोया ( तैल के चौथाई )—इन द्रव्यों के कल्क के साथ तैल को सिद्ध करे। यह लाक्षादि-नामक तैल अंजन, लेप आदि में प्रयोग करने से सभी प्रकार के ज्वर, विषजन्य उपद्रव, उन्माद, श्वास, अपस्मार तथा कास को दूर करता है। यक्ष, राक्षस तथा भूतदोषों को नाश करने वाला है और गर्भिणी स्त्रियों के लिये उत्तम है। तीव्र पित्त ज्वर से जलते हुए शरीरवाले व्यक्ति को—हवादार मकान मे रखकर इस शीत क्रिया को करनी चाहिए ॥ ४७२-४७५ ॥

अन्वासनं तैलम्—

पिप्पली पौष्करं मूलं शतपुष्पा वचा शटी ।
यष्ट्याह्व देवदारुश्च चित्रको मदनात्फलम् ॥ ४७६ ॥
बिल्वं कुष्ठं च कल्केन तैलात्पादांशकेन हि ।
तैलतो द्विगुण क्षीरं दत्त्वा मृद्वग्निना पचेत् ॥ ४७७ ॥
एतदन्वासनं नाम गुदस्रावं प्रवाहिकाम् ।
गुदव्यथां पुरीषस्य प्रवृत्ति च पुनः पुनः ॥ ४७८ ॥
वङ्क्षणस्यावरोधं च गलरोधं कटिग्रहम् ।

निहन्ति वातजान् रोगान् दीपयत्यपि चानलम् ॥ ४७६ ॥

अन्वासन तैल—पीपर, पुष्करमूल, सौंफ, वच, कपूरकचरी, मुलेठी, देवदारु, चित्रक, मदनफल, बेल की छाल, कूठ, तैल के चौथाई—इन द्रव्यों के कल्क के साथ, तैल के दुगुना दूध मिलाकर तैल को मन्द आँच से पकावे, यह अन्वासन नामक तैल गुदस्राव ( रक्तार्श ), प्रवाहिका, गुद की पीड़ा, बार २ टट्टी का आना, वङ्क्षणका अवरोध, गलेका-रुँधना, कटिग्रह ( कमर का अकड़न ) तथा वातजन्य रोगों को नाश करता है और उदराग्नि को भी प्रदीप्त करता है ॥ ४७६–४७९ ॥

महानीलं तैलम् —

ककुभस्य श्रीपर्ण्याः पुष्पं जम्बूफलं प्रियङ्गुश्च ।
मञ्जिष्ठा त्रिफलाऽगुरुमदनफलं चित्रकश्चैव ॥ ४८० ॥
नीलोत्पलमृणालकबीजककर्दमकनील्यश्च ।
भल्लातः स्रोतोञ्जनमाम्रास्थिकासीसपौण्डरीकं च ॥ ४८१ ॥
मदयन्ती बाकुचिका रोध्र चैतैस्तु समभागैः ।
तुलसीपत्र बीजं सणस्य सूर्यभक्ता च ॥ ४८२ ॥
काकमाचीदारुकयष्टीमधुमार्कव च सैरेयः ।
एतैर्द्विगुणैः कल्कीकृतैर्बिभीतमज्जतैलं च ॥ ४८३ ॥
कल्काच्चतुर्गुणितं, तच्चतुर्गुणोऽथ धात्रीस्वरसः ।
सूर्यातपे विपाच्यं नाम्ना तैलं महानीलम् ॥
पलितादिषु प्रयोज्यं जत्रूर्ध्वगेषु च निपुणतरैः ॥ ४८४ ॥

महानील तैल—ककुभ ( अर्जुन ) का पुष्प, गम्भारी का पुष्प, जामुन का फल, प्रियंगु, मंजीठ, त्रिफला ( हर्रे, बहेड़ा, आंवला ), अगर, मदनफल, चित्रक, नीलकमल का पुष्प, कमल की नाल, विजयसार, कर्दमक ( कांदो ), नीलीवृक्ष, शु० भल्लातक, स्रोतोञ्जन, आम की गुठली, कासीस, पौण्डरीक ( कमल ), मेंहदी, बाकुची, लोध्र—समभाग—( एक २ भाग ), तुलसीपत्र, सन का बीज, सूर्यभक्ता ( सुवर्चला "हुलहुल" ), मकोय, देवदारु, मुलेठी, भृङ्गराज, कटसरैया ( झिंटी )—दो २ भाग—इन द्रव्यों (तैल के चतुर्थांश) के कल्क के साथ, बहेड़े के गुद्दी का तैल, कल्क के चौगुना, आंवला का रस तैल के चौगुना मिलाकर, सूर्य के प्रखर धूप ( शरद् तथा ग्रीष्म ऋतु ) मे पकावे। यह महानील नामक तैल है। इस तैल को पलितादि ( असमय में बाल का पकना-गिरना-मुख में झुर्री पड़ना ) रोगों मे तथा जत्रु के ऊर्ध्वाङ्ग के रोगों में योग्य वैद्य प्रयोग करे ॥ ४८०–४८४ ॥

पलिते नील्याद्यं तैलम्—

नीलीदलं भृङ्गरजोऽर्जुनत्वक् पिण्डीतकं कृष्णमयोरजश्च ।
बीजोद्भवं साहचरं च पुष्पं पथ्याक्षधात्रीसहितं विपाच्य ॥ ४८५ ॥
एकीकृतं सर्वमदः प्रमाय पङ्केन तुल्यं नलिनीभवेन ।
संयोज्य पक्षं कलशे निधाय लोहे दृढे पद्मनि सापिधाने ॥ ४८६ ॥
एतेन तैलं विपचेद्विमृश्य रसेन भृङ्गत्रिफलाभवेन ।
आसन्नपाके च परीक्षणार्थं पक्षं बलाकाभवमाक्षिपेच्च ॥ ४८७ ॥
भवेद्यदा तद्भ्रमराङ्गनीलं तदा विपक्वं विनिधाय पात्रे ।
कृष्णायसे माससवस्थित तदभ्यङ्गयोगात्पलितानि हन्यात् ॥ ४८८ ॥

पलित रोग में नीलाद्य तैल—नीलीवृक्ष का पत्र, भृङ्गराज, अर्जुन की छाल, पिण्डीतक ( मदनफल ), मरिच, लौहभस्म, विजयसार, सहचर ( कटसरैया ) का फूल, हर्रे, बहेड़ा, आंवला—इन द्रव्यों को चौगुने जल में पका कर, चतुर्थांश शेष रस, नीलिनी ( नीलवृक्ष ) का कल्क सभी द्रव्यों को एकत्र कर लोहे के मजबूत पात्र में भरकर कमल के पत्ते से ढक कर एक पक्ष ( पन्द्रह दिन ) तक रक्खे। इसके बाद पूर्वोक्त कल्क-मिश्रित रस तथा ( तैल के बराबर ) भृङ्गराज-स्वरस एवं त्रिफला के क्वाथ के साथ विचार कर (धीरे २ मंद आंच से) तैल सिद्ध करे। पाक नजदीक होने पर परीक्षा के लिये बकुला का पांख छोड़ दे। जब पांख भ्रमर के अंग के समान हो जाय तब परिपक्व तैल जाने और उसको छान कर काले लोहे के पात्र में एक मास तक रक्खे। यह तैल लेप करने से पलित ( असमय मे बाल का पकना ) रोग को नाश करता है। ( इस योग में तैल के चौगुना क्वाथ, चौथाई कल्क द्रव्य तथा—समभाग—स्वरस लेना चाहिए ) ॥ ४८५–४८८ ॥

ऊरुस्तम्भे द्विपञ्चमूल्याद्यं तैलम्—

त्रिफला पञ्चमूल्यौ द्वे चित्रको देवदारु च ।
एकाष्ठीला त्वपामार्गः श्रेयसी वायसी सुधा ॥ ४८९ ॥
काला भार्गी पृथक्पर्णी सुवहा मदयन्तिका ।
विशल्योशीरकाश्मर्यहिंस्रादार्व्यस्तथाऽम्लिका ॥ ४९० ॥
चिरबिल्वो विशोकश्च बला चांशुमती तथा ।
पयस्या पीलुपर्णी च सगुडूची शतावरी ॥ ४९१ ॥
एषां पञ्चपलान् भागान् जलद्रोणेषु सप्तसु ।
अष्टभागावशेषेण पचेत्तैलं शनैः शनैः ॥ ४९२ ॥
कुष्ठं च शतपुष्पा च चित्रकस्त्र्यूषणं वचा ।
देवदार्वगुरु श्रेष्ठं विडङ्गं मुस्तमेव च ॥ ४९३ ॥

अश्वगन्धा स्थिरा पाठा मूर्वा श्योनाकमेव च।
पिप्पली शृङ्गवेरं च दन्ती हिङ्ग्वम्लवेतसौ ॥ ४९४ ॥
भिषग्गेषां तु गर्भेण कषायेण च साधयेत्।
सिद्धं शीतं च पूतं च क्षौद्रेण सह संसृजेत् ॥ ४९५ ॥
दद्यात्तदस्य पानार्थं तदेवाभ्यञ्जने भवेत्।
ऊरुस्तम्भश्चिरोत्पन्नस्तैलेनानेन शाम्यति ॥ ४९६ ॥
श्लीपदं चाढ्यवातं च खुडवातांश्च नाशयेत्।

ऊरुस्तम्भ में द्विपञ्चमूलाद्य तैल—त्रिफला ( हर्रे, बहेड़ा, आंवला ), दोनों पंचमूल ( बेल, गम्भारी, पाटला, अरलू, अरणी, सरिवन, पिठवन, वनभंटा, रेगनी, गोखरू ), चित्रक, देवदारु, एकाष्ठीला ( पाठा ), अपामार्ग, गजपीपर, वायसी ( मकोय ), सेहुंड, काला ( काला निशोथ ), भांगरा, पृथक्पर्णी ( पृश्निपर्णी ), सुवहा ( निर्गुण्डी ), मेंहदी, विशल्या (कलिहारी), खस, गम्भारी, हिंस्रा ( 'अगर' या हैंस ), दारुहल्दी, इमली, चिरविल्व ( चिलविल "पूतिकरंज" ), अशोक, वरियार, शालपर्णी क्षीरकाकोली, मूर्वा, गुडूची, शतावरी—इन द्रव्यों को पांच २ पल लेकर जल सात द्रोण में पकावे। अष्टमांश शेष क्वाथ के साथ तैल ( एक आढ़क ) तथा कल्कार्थ—कूठ, सौंफ, चित्रक, त्र्यूषण ( सोंठ, पीपर, मरिच ), वच, देवदारु, अगर, त्रिफला, विडंग, मोथा, अश्वगन्धा, शालपर्णी, पाठा, मूर्वा, अरलू, पीपर, सोंठ, दन्तीमूल, हिंगु, अम्लवेत—इन द्रव्यों को ( तैल के चतुर्थांश ) कल्क मिलाकर धीरे २ मन्द आंच से पकावे, और सिद्ध होने पर छान कर तथा ठण्डा कर मधु ( तैल के चतुर्थांश ) मिला दे और स्वच्छ वर्तन में रख दे। इस तैल को पान के लिये तथा इसी को लेप के लिये भी प्रयोग करे। इस तैल से पुराना ऊरुस्तम्भ ( दोनों ऊरुवों का घात "आढयवात" ) शान्त होता है और यह तैल श्लीपद ( पीलपांव ), आढ्यवात ( अधःशाखाघात ) तथा खुडवात ( वातरक्त ) को नाश करता है। ( इस योग में क्वाथ का परिमाण दिया है किन्तु तैल, कल्क तथा मधु का मान नहीं दिया है। अतः क्वाथ के आधार पर बुद्धिमान वैद्य परिमाण की कल्पना कर ले) ॥४८९–४९६॥

अर्शांसि दन्त्याद्यं तैलम्—

दन्तीकाशीससिन्धूत्थकरवीरानलैः पचेत् ॥ ४९७ ॥
तैलमर्कपयोन्मिश्रमभ्यङ्गात्पायुकीलजित्।

अर्शरोग में दन्त्याद्य तैल—दन्तीमूल, कासीस, सेन्धानमक, कनेर, चित्रक—समभाग—इन द्रव्यों का कल्क के साथ तैल, मदार का दूध मिलाकर पकावे। यह तैल लेप करने से अर्श के कीलों ( अर्शांकुरों ) को

नाश करता है। ( इस योग में तैल के चौथाई कल्क तथा चौगुना दूध लेना चाहिए )॥

क्रिमिरोगे महावीर्यतैलम्—

शशमार्जारयोर्बभ्रोः कपेर्वृषवराहयोः ॥ ४९८ ॥
मांसानां द्वे तुले सम्यक् पचेद् द्रोणेषु सप्तसु।
अष्टभागावशेषेण तेन तैलाढकं पचेत् ॥ ४९९ ॥
भासवायसकाकानां गृध्रस्याखोः शुकस्य च।
कलविङ्ककुलिङ्गानां कुक्कुटस्य च वै वसाम् ॥ ५०० ॥
मज्जानं दापयेदेषां पित्तान्यपि च लाभतः।
अपामार्गफल भार्गी बीजं शैरीषमेव च ॥ ५०१ ॥
फणिज्झकं विडङ्गानि शिग्रुकस्य त्वचस्तथा।
त्र्यूषणं हिङ्गुनिर्यासो वचा कुष्ठं सचन्दनम् ॥ ५०२ ॥
हस्तिपर्ण्योः शिरीषस्य ककुभस्यासनस्य च।
पलाशस्यारिमेदस्य मूलं बीज च संहरेत् ॥ ५०३ ॥
पिचुमन्दस्य निर्यासः शल्लक्या गुग्गुलोस्तथा।
हिङ्ग्वम्लवेतसौ चापि तथा ग्राह्या निदिग्धिका ॥ ५०४ ॥
तुल्यान्येतानि गर्भाणि तैलं कर्णप्रपूरणम्।
नावनं चावगाहश्च शीर्षक्रिमिविनाशनम् ॥ ५०५ ॥
तैलस्यास्य प्रणीतस्य गन्धेन क्रमयः स्थिराः।
नश्यन्ति न विवर्धन्ते बलात्सुबहवोऽपि वा ॥ ५०६ ॥
युक्त्याऽस्मिन् क्रमयस्तैले नस्ये तु प्रतिपादिते।
तालु भित्वाऽऽशु मूर्ध्नस्तु प्रद्रवन्त्युपपीडिताः ॥ ५०७ ॥
सर्वक्रिमिहरं ह्येतत्तैल शिरसि देहिनाम्।
बलाबलं विचार्यैव नस्ये तदवचारयेत् ॥ ५०८ ॥
क्रिमिभिर्भक्ष्यमाणानां नराणामेतदुत्तमम्।
तैलमेतन्महावीर्य सर्वक्रिमिविनाशनम् ॥ ५०९ ॥

क्रमिरोग में महावीर्य तैल—शश ( खरगोश ), मार्जार ( बिलार ), बभ्रु ( नकुल ), कपि, ( बन्दर ), वृष ( बैल ), वराह ( सुअर )—इन जन्तुओं का स्वच्छ एवं परिपुष्ट मांस दो तुला, सात द्रोण जल में पकावे और अष्टमांश क्वाथ के साथ तैल एक आढक पकावे और उसमें भास ( शकुन्त गृध्र ), वायस ( काकभेद ), काक ( कौआ ), गीध, मूस, शुक, कल ( शकुन्तल-मत्स्य ), विङ्क ( भुजैटा पक्षिविशेष ), कुलिंग ( चटक, गौरैया ) तथा कुक्कुट (मुर्गा) के वसा तथा मज्जा एवं प्राप्त होने पर पित्त भी मिला दे। कल्कार्थ—

अपामार्ग का फल, भांगरा, सिरिष का बीज, फणिज्झक ( मरुआ ), विडंग, सहिजन की छाल, त्र्यूषण ( सोंठ, पीपर, मरिच ), हिंगुनिर्यास ( चिरायता ), वच, कूठ, चन्दन, हस्तिपर्णी ( कर्कटीभेद ), सिरीष, अर्जुन, विजयसार, पलास तथा इरिमेद का मूल एवं बीज, नीम का गोंद, निर्गुण्डी का गोंद, गुग्गुल का गोंद, हिंगु, अम्लवेत, भटकटैया—समभाग—इन द्रव्यों का ( तैल के चौथाई ) कल्क छोड कर तैल सिद्ध करे। यह तैल कान मे डालने से, नावन करने से तथा अवगाहन करने से शिर के कृमियों का नाश करने वाला है। इस सिद्ध तैल के गन्ध से स्थायी कृमि नष्ट हो जाते है और अधिक होने पर भी एकाएक नहीं बढ़ते है। युक्तिपूर्वक इस तैल के नस्य देने पर मूर्द्धा के कृमि व्याकुल "उत्पीड़ित" होकर तालु को छेद कर गिर जाते हैं। मनुष्यों के शिर पर यह तैल लगाने से सभी प्रकार के कृमियों को दूर करता है। इस तैल को बलाबल देख कर ही नस्य कर्म मे प्रयोग करना चाहिए। यह तैल कृमियों से काटे जाते हुए मनुष्यों के लिये उत्तम है। यह महावीर्य नामक तैल सभी प्रकार के कृमियों को नाश करने वाला है॥ ४९८-५०९॥

अन्त्रवृद्धौ गन्धर्वतैलम्—

शतमेरण्डमूलस्य पलं शुण्ठीयवाढकम्।
जलद्रोणेऽथ दुग्धेन पचेदष्टगुणेन तु॥ ५१०॥
प्रस्थमेरण्डतैलस्य सप्तला द्विपला तथा।
द्विपलं शृङ्गवेरस्य गर्भं दत्त्वा शनैः पचेत्॥ ५११॥
पिबेत्तन्नियतः शुद्धो नरः क्षीरान्नभुक् भवेत्।
अन्त्रवृद्धिं निहन्त्याशु तैलं गन्धर्वसंज्ञितम्॥ ५१२॥

अन्त्रवृद्धि में गन्धर्व तैल—एरण्ड का मूल एक सौ पल, सोंठ तथा यव एक आढ़क एक द्रोण जल में पकावे, अष्टमांश शेष क्वाथ तथा तैल के अठगुना दूध के साथ रेडी का तैल एक प्रस्थ और सातला दो पल, सोंठ दो पल—इन दोनों के कल्क को मिलाकर धीरे २ पकावे। इस तैल को वमन-विरेचनादि से शुद्ध मनुष्य नियमपूर्वक पान करे और दूध-भात खाय। यह गन्धर्व नामक तैल अन्त्रवृद्धि को शीघ्र ही नाश करता है॥

कर्णरोगे कुष्ठाद्यं तैलम्—

कुष्ठं मरिचलाङ्गल्यौ शुण्ठी मागधिका घनम्।
सरसाञ्जनकासीसं जातीसैन्धवगुग्गुलु॥ ५१३॥
तालं शिला च निर्गुण्डी बिल्वं भल्लातकं तथा।
कार्षिकैर्देवदारुत्थतैलस्य द्विपलेन च॥ ५१४॥

कुडवं तिलतैलस्य पचेन्मूत्रे चतुर्गुणे।
तत्कर्णपूरणात्क्षिप्रं पूयस्रावनिवारणम् ॥ ५१५ ॥
कृमिघ्नं दुष्टनाडीघ्नं व्रणानां चैव रोपणम्।

कर्ण रोग में कुष्ठाद्य तैल—कूठ, मरिच, कलिहारी, सोंठ, पीपर, मोथा, रसाञ्जन, कासीस, लाक्षा, सेन्धालमक, गुग्गुलु, हरताल, मनःशिला, निर्गुण्डी, वेल, भल्लातक—एक २ कर्ष—इन द्रव्यों के कल्क के साथ देवदारु का तैल दो पल, तिल का तैल एक कुडव ( चार पल ), तैल के चौगुना गोमूत्र में पकावे, इस सिद्ध तैल को कान मे छोड़ने से शीघ्र ही कर्ण स्राव को निवारण करता है, और कृमियों को तथा दुष्ट नाड़ी ( नासूर ) को नाश करने वाला है एवं व्रणों को रोपण करने वाला है ॥

शिरोरोगे महानीलं तैलम्—

आदित्यवल्लिमूलानि कृष्णसैरेयकस्य च ॥ ५१६ ॥
सुरसस्य च पत्राणि फलं कृष्णसणस्य च।
मार्कवः काकमाची च मधुकं देवदारु च ॥ ५१७ ॥
पृथग् दशपलांशानि पिप्पली त्रिफलाऽञ्जनम्।
प्रपौण्डरीकं मञ्जिष्ठा रोध्रं कृष्णागुरूत्पलम् ॥ ५१८ ॥
आम्रास्थि कर्दमः कृष्णो मृणालं रक्तचन्दनम्।
नीली भल्लातकास्थीनि कासीसं मदयन्तिका ॥ ५१९ ॥
सोमराज्यसनात्पुष्पं कृष्णपिण्डितचित्रकौ।
पुष्पाण्यर्जुनकाश्मर्योः श्यामा जम्बूफलानि च ॥ ५२० ॥
पृथक् पञ्चपलांशानि तैः पिष्टैराढकं पचेत्।
विभीतकस्य तैलस्य धात्रीरसचतुर्गुणम् ॥ ५२१ ॥
कुर्यादादित्यपाकं च यावच्छुष्को भवेद्रसः।
लोहपात्रे ततः पूतं संशुद्धमथ योजयेत् ॥ ५२२ ॥

शिरोरोग में महानील तैल—मदार की जड, काले कटसरैया की जड, तुलसी का पत्र, काले सन का बीज, भृङ्गराज, मकोय, मुलेठी, देवदारु, अलग २ दशपल, पीपर, त्रिफला ( हर्रे, बहेड़ा, आंवला ), रसाञ्जन, प्रपौण्डरीक, मंजीठ, लोध, अगर, नीलकमल, आम की गुठली, कांदो, मरिच, कमल का नाल, रक्त चन्दन, नील, शु० भल्लात की गुठली, कसीस, मेंहदी, सोमराजी ( वाकुची ), विजयसार का फूल, कृष्ण पिण्डित ( काला मदनफल ), चित्रक, अर्जुन का पुष्प, काला निशोथ, जामुन का फल—अलग २ पांच पल—इन द्रव्यों के कल्क के साथ बहेड़े का तैल एक आढक, आंवला का रस चौगुना में मिलाकर तीव्र सूर्य के धूप से ( शरद् तथा ग्रीष्म ऋतु में ) तब तक पकावे, जब तक रस

सूख न जाय। रस सूख जाने पर सिद्ध तैल को छानकर स्वच्छ बर्तन में रख ले और शिरोरोग में प्रयोग करे ॥ ५१६–५२२ ॥

कुष्ठे गुञ्जामूलाद्यं तैलम्—

त्रिफलागुञ्जिकामूलत्रिशूलीपुरतालकैः।
पुत्रञ्जीवास्थिसिन्दूरमधूच्छिष्टनिशायुगैः ॥ ५२३ ॥
पर्शुच्छिन्नविषज्वालामुखीकन्दवचायुतैः।
पृथक्पलार्धकैः पिष्टैस्तैलमर्धाढकं कटु ॥ ५२४ ॥
समालोड्य पचेत्सम्यग्गवां मूत्रे चतुर्गुणे।
विपाच्य मतिमान् वैद्यः सर्वकुष्ठव्रणापहम् ॥ ५२५ ॥
तैलं कुष्ठहरं वर्ण्यं फणिकीटविषापहम्।
कण्डूविचर्चिकासिध्मवातासृक्शासनं परम् ॥ ५२६ ॥

कुष्ठ रोग में गुञ्जामूलाद्य तैल—त्रिफला, गुञ्जा का मूल, त्रिशूली (त्रिधारा—सेहुंड), गुग्गुलु, हरताल, पुत्रञ्जीव ( पुत्रजीव वृक्ष ) "कोलापुर में प्रसिद्ध" की गुठली, सिन्दूर, मोम, आमाहल्दी, दारुहल्दी, पर्शुच्छिन्न (गुडूची), विष ( वत्सनाभ ), ज्वालामुखीकन्द ( मिरिचियाकन्द ), वच—अलग २ आधा २ पल—इन द्रव्यों के कल्क के साथ, सरसों का तैल आधा आढक ( दो प्रस्थ ), चौगुना ( आठ प्रस्थ ) गाय के मूत्र मे मिलाकर बुद्धिमान् वैद्य पकावे। यह सिद्ध तैल, सभी प्रकार के कुष्ठ व्रण को दूर करने वाला है। यह तैल कुष्ठनाशक, कान्तिप्रद, साँप तथा कीट के विष को दूर करने वाला है और कण्डू, पीड़ायुक्त खुजली (कुष्ठभेद), सिध्म ( सिहुआ ) तथा वातरक्त को अच्छी तरह नाश करता है ॥ ५२३–५२६ ॥

मञ्जिष्ठाद्यं तैलम्—

मञ्जिष्ठा पद्मकं कुष्ठं चन्दनं गैरिकं बला।
हरिद्रे द्वे प्रियङ्गुश्च नागं यष्टी सवाकुची ॥ ५२७ ॥
दारु प्रपौण्डरीकं च पिष्ट्वाऽर्धपलिकानि तु।
तैलप्रस्थं गवा क्षीरं दत्त्वा क्वाथं तथाऽसनात् ॥ ५२८ ॥
भृङ्गद्रवं चतुष्प्रस्थं शनैर्मृद्वग्निना पचेत्।
अस्य तैलस्य पक्वस्य शृणु वीर्यमतः परम् ॥ ५२९ ॥
केशशाते शिरोदुःखे मन्यास्तम्भे हनुग्रहे।
दन्तकर्णाक्षिशूले च नस्येऽभ्यङ्गे च योजयेत् ॥ ५३० ॥
आकुञ्चिताग्रान् सुस्निग्धान् केशान् संजनयेद् बहून्।
पलिते चेन्द्रलुप्ते च तैलमेतत्प्रशस्यते ॥ ५३१ ॥
मञ्जिष्ठाद्यमिदं नाम्ना शिरोरोगनिवारणम्।

मंजिष्ठाद्य तैल—मंजीठ, पद्मकाठ, कूठ, चन्दन, गेरू, बरियार, आमाहल्दी, दारुहल्दी, प्रियंगु, नागकेशर, मुलेठी, बाकुची, देवदारु, प्रपौण्डरीक—आधा २ पल—इन द्रव्यों का कल्क बनाकर, तैल एक प्रस्थ, तैल के बराबर गाय का दूध, विजयसार का क्वाथ तथा भृङ्गराज का स्वरस चार प्रस्थ—इन सभी द्रव्यों को मिलाकर धीरे २ मन्द आँच से पकावे। सिद्ध इस तैल का वीर्य ( बल ) इसके बाद कहते है। इस तैल को बाल के कमजोर होने पर, सिर का दर्द, मन्या नाडी का अकडन, जबड़ों का अकडन, दन्तशूल, अक्षिशूल तथा कान के दर्द मे नस्य कर्म एवं अभ्यंग का प्रयोग करना चाहिए। यह तैल अग्रभाग टूटे हुए बालों को स्निग्ध करता है तथा अधिक बाल उत्पन्न करता है। बालों के गिरने तथा बालों के पकने में लाभदायक है अर्थात् बालों को पकने से बचाता है और झरने से रोकता है। मञ्जिष्ठाद्य नामक यह तैल सिर के रोगों को दूर करता है ॥

कुष्ठे सिद्धार्थकतैलम्—

करवीरवचातुम्बरुरसाञ्जनकरञ्जभृङ्गलाक्षाभिः ॥ ५३२ ॥
सारुष्करसिद्धार्थकमूलबीजाग्निगण्डीरैः।
रजनीद्वयमञ्जिष्ठारग्वधविडङ्गमाक्षीकैः ॥ ५३३ ॥
सैन्धवकटुकालाबुपिचुमर्दास्फोटमालतीभिश्च।
सर्षपतैलं कारञ्जं वा गवां मूत्रेण वै सिद्धम् ॥ ५३४ ॥
द्विगुणेन साधितमचिरादभ्यङ्गाद्धन्ति कुष्ठानि।
अष्टादशापि सिद्धं तैलं सिद्धार्थकं नाम ॥ ५३५ ॥

इति श्रीवैद्यवरसोढलग्रथिते गदनिग्रहे द्वितीयस्तैलाधिकारः।

कुष्ठ रोग में सिद्धार्थक तैल—कनेर, वच, तुम्बरु, रसाञ्जन, करञ्ज, भृङ्गराज, शु० भल्लातक, सरसो, मूली का बीज, चित्रक, गण्डीरी दूर्वा, आमाहल्दी, दारुहल्दी, मंजीठ, अमलतास, विडंग, स्वर्णमाक्षिक, सेन्धानमक, कडवी लौकी ( तुम्बी ), नीम, मदार, मालती—समभाग—इन द्रव्यों के कल्क के साथ सरसों का तैल या करज का तेल दुगुने गाय के मूत्र मे सिद्ध करे। यह सिद्ध तैल लेप करने से शीघ्र ही कुष्ठ रोगों को नाश करता है। यह अट्ठारह द्रव्यों से सिद्ध सिद्धार्थक नामक तैल है। ( इस योग मे कल्क तथा तैल का परिमाण नहीं दिया गया है अतः कल्क द्रव्य तैल के चौथाई लेना चाहिए)॥५३२-५३५॥

इति श्री वैद्यवर शोढल के बनाये हुए गदनिग्रह नामक
ग्रन्थ में द्वितीय तैलाधिकार समाप्त ॥

# अथातस्तृतीयश्चूर्णाधिकारः ।

गुल्मे हिङ्ग्वाद्यं चूर्णम्—

हिङ्गु त्रिकटुकं पाठां हपुषामभयां शटीम् ।
अजमोदाजगन्धे च तिन्तिडीकाम्लवेतसम् ॥ १ ॥
दाडिमं पौष्करं धान्यमजाजीं चित्रकं वचाम् ।
द्वौ क्षारौ लवणे द्वे च चव्यं चैकत्र चूर्णयेत् ॥ २ ॥
चूर्णमेतत्प्रयोक्तव्यमन्नपानेष्वनत्ययम् ।
प्राग्भक्तमथवा पेयं मद्येनोष्णोदकेन वा ॥ ३ ॥
पार्श्वहृद्बस्तिशूलेषु गुल्मे वातकफात्मके ।
आनाहे मूत्रकृच्छ्रे च गुदयोनिरुजासु च ॥ ४ ॥
ग्रहण्यर्शोविकारेषु प्लीहपाण्ड्वामयेऽरुचौ ।
उरोविबन्धहिक्कासु श्वासे कासे गलग्रहे ॥ ५ ॥
भावित मातुलुङ्गस्य चूर्णमेतद्रसेन वा ।
बहुशो गुटिकाः कार्याः कार्मुकाः स्युस्ततोऽधिकाः ॥ ६ ॥

अब तैलाधिकार के बाद तृतीय चूर्णाधिकार है ।

गुल्मरोग में हिंग्वाद्य चूर्ण—हिंगु, त्रिकटु ( सोंठ, पीपर, मरिच ), पाढ़ी, हाऊबेर, हर्रे, कपूरकचरी, अजमोदा, अजवायन, तिन्तिडीक ( वृक्षाम्ल ), अम्लवेंत, अनार, पुष्करमूल, धनिया, स्याहजीरा, चित्रक, बालवच, सज्जीखार, यवक्षार, सेन्धानमक, सोवर्चल नमक, तथा चव्य—समभाग—इन द्रव्यों को एकत्र कर चूर्ण बनावे और कपडा से छान कर शीशी में भर दे तथा कार्क बन्द कर रख दे । हिंगु घृत मे भून कर महीन बना अलग से मिलावे । इस चूर्ण को निरन्तर, अन्नपान में प्रयोग करना चाहिए । भोजन के पहले या बाद मे मद्य या गरम जल से पार्श्वशूल, हृदयशूल, वस्तिशूल, वातकफात्मक गुल्म रोग, आनाह ( पेट का फूलना ), मूत्रकृच्छ्र, गुदपीडा, योनिपीडा, ग्रहणी-विकार, अर्शविकार, प्लीहावृद्धि, पाण्डुरोग, अरुचि, उरोरोग, मलावरोध, हिक्का, श्वास, कास तथा गलग्रह में पान करना चाहिए । इस चूर्ण को बिजौरा नींबू के रस से भावित कर बहुत गुटिका बनाये । यह गुटिका चूर्ण से भी अधिक कार्मुक ( लाभप्रद ) है ॥ १-६ ॥

विमर्श:—अत्यन्तशुष्कं यद् द्रव्यं सुपिष्टं वस्त्रगालितम् ।
तत्स्याच्चूर्णं रजः क्षोदस्तन्मात्रा कर्षसंमिता ॥

अत्यन्त शुष्क द्रव्य को पीसकर वस्त्र से छान कर जो तैयार किया जाता है उसको 'चूर्ण' कहते हैं, उसको 'क्षोद' तथा 'रज' भी कहते हैं । इसकी

सामान्य मात्रा एक कर्ष (एक तोला) की होती है। अग्नि तथा बल के अनुसार मात्रा की कल्पना बुद्धिमान चिकित्सक करे॥

चूर्णे गुडः समो देयः शर्करा द्विगुणा भवेत्।
चूर्णेषु भर्जितं हिंगु देयं नोत्क्लेदकृद् भवेत्॥

चूर्ण में गुड़ समभाग तथा शक्कर दुगुना मिलाना चाहिए। हिंगु घृत में भून कर मिलाने से उत्क्लेदकारक नहीं होता है।

लिहेच्चूर्णं द्रवैः सर्वैर्घृताद्यैर्द्विगुणोन्मितैः।
पिबेच्चतुर्गुणैरेव चूर्णमालोडितं द्रवैः॥

चूर्ण को सभी द्रव द्रव्यों के साथ सेवन करना चाहिए। घृत के साथ सेवन करना हो तो चूर्ण से दुगुना घृत लेना चाहिए। और द्रव के साथ पान करना हो तो चौगुने द्रव में मिलाकर पान करे।

चूर्ण बनाने की परम्परा दो प्रकार की प्रचलित है। एक अथवा अनेक वनौषधियों को मिला कूटकर तैयार किया जाता है, और छान कर रख लिया जाता है।

दूसरी विधि में प्रत्येक वनौषधि को अलग २ कूट छान कर शास्त्रोक्त मात्रा के अनुसार तौल कर मिलाते हैं। इस विधि से सभी द्रव्यों का परिमाण उचित मात्रा में उपलब्ध हो जाता है। मुनक्का, अनार, इमली आदि औषधियों को मिलाना हो तो पृथक् कूट कर मिलाना चाहिए। चूर्ण सौम्य होने से अधिक मात्रा में विशेष कर प्रयोग होता है अतः चूर्ण महीन होना आवश्यक है।

चूर्ण बनाने के लिये औषधियां शुद्ध नयी एवं अच्छी तरह देख कर लेनी चाहिए। पुरानी और दूषित औषधियां त्याग दे। अपक्व, मकड़ी का जाल जिस पर लगा हो, जिसे कीटाणुओं ने दूषित की हो, अशुद्ध स्थान में उत्पन्न हुई हो और असमय में उत्पन्न हुई हो ऐसी औषधियों को नहीं लेना चाहिए। चिकित्सकों को चाहिए कि औषधियों को अच्छी तरह पहचान कर स्वयं निर्णय कर ग्रहण करे अन्यथा औषधियों के शुद्ध उपलब्ध न होने पर गुण में न्यूनता की आशंका रहती है।

बहुत प्रयोगों में—जमीरीनीबू, अद्रक आदि द्रव्यों के रस से भावना देने को कहा गया है वहां स्वरस उपलब्ध होने पर स्वरस से भावना दे अन्यथा क्वाथ बनाकर भावना दे।

भाव्यद्रव्यसमं क्वाथ्यं क्वाथ्यादष्टगुणं जलम्।
अष्टांशशेषितः क्वाथो भाव्यानां तेन भावना॥

जिस द्रव्य को भावित करना हो उसके समभाग क्वाथ्य द्रव्य लेकर अठगुना जल में क्वाथ करे और अष्टमांश शेष क्वाथ से भावना दे।

भावनाविधिः—

द्रवेण यावता सम्यक् चूर्णं सर्वं प्लुतं भवेत्।
भावनायाः प्रमाणं तु चूर्णे प्रोक्तं भिषग्वरैः॥
दिवा दिवाऽऽतपे शुष्कं रात्रौ रात्रौ निवासयेत्।
शुष्के चूर्णीकृतं द्रव्यं यथोक्तं भावनाविधि.॥

जितने द्रव द्रव्य से चूर्ण अच्छी तरह गीला हो जाय उतना द्रवद्रव्य ग्रहण करे। प्रतिदिन दिन में भावना देकर धूप में सुखाना चाहिए और रात्रि में भावना देकर रख देना चाहिए पुनः सुखाकर चूर्ण कर लेना चाहिए यही चूर्णो की भावना-विधि है॥

भावना का विधान एक बार, दो बार या तीन बार जहां कहा गया हो वहां निर्देशानुसार भावना देनी चाहिए जहाँ निर्देश न किया गया हो वहां सात बार भावना दे।

चूर्ण को आवश्यक परिमाण में तैयार कर कांच की अच्छी डाटवाली शीशियों में भर कर रखना चाहिए। खुले रहने पर चूर्ण खराब एवं गुणहीन हो जाता है। क्षार-मिश्रित चूर्णों को लोहपात्र में नही रखना चाहिये क्योंकि दूषित हो जाते हैं।

क्षार अस्थियों के पोषणार्थ हितावह माना गया है किन्तु धमनियों के दीवालों को हानि पहुँचाता है। क्षार में साधारणतः पाचक, तीक्ष्ण, पित्तवर्द्धक, शुक्रनाशक गुण है। अतः पचनक्रिया मे हितावह होने पर क्षारयुक्त औषधि क्षय, प्रमेह, नेत्र रोग और पित्ताधिक रोग में, सगर्भा स्त्रियों, बालक और वृद्धों को तथा उष्ण ऋतु में सभी रोगियों के लिये विचार करके प्रयोग करना चाहिए। दुरुपयोग होने पर दन्तशूल, आमाशयिक दाह, धातुक्षीणता, मस्तिष्क में उष्णता, सधिस्थानों में पीडा आदि उत्पन्न होकर शरीर निस्तेज बन जाता है।

जिन चूर्णो मे विष, अफीम आदि मिलाये जाते हैं वे चूर्ण उग्र होते हैं। चूर्ण मे मिलाने के पहले इन द्रव्यों को शुद्ध कर लेना चाहिए। यह शीघ्र ही लाभप्रद होता है किन्तु जीवनीय शक्ति को क्षीणकर दुर्बल बनाता है अथवा उत्तेजना के पश्चात् अवसादक असर पहुँचाता है। चूर्ण बनाने का सामान्य नियम प्रत्येक योग में समझना चाहिए क्योंकि सामान्य विधि का प्रत्येक योग में निरूपण नहीं किया जा सकता है।

शूले द्वितीयं हिङ्ग्वाद्यं चूर्णम्—

हिङ्गुग्रन्थिकधान्यदीप्यकवचाचव्याग्निपाठाः शटी
वृक्षाम्लं लवणत्रयं त्रिकटुकं क्षारद्वयं दाडिमम् ।
पथ्यापुष्करवेतसाम्लहपुषाजाज्यस्तदेभिः कृतं
चूर्णं भावितमेतदार्द्रकरसैः स्याद्बीजपूरस्य च ॥ ७ ॥
आध्मानग्रहणीविकारगुदजान् गुल्मानुदावर्तकान्
प्रत्याध्मानगरोदराश्मरिरुजस्तूनीद्वयारोचकान् ।
ऊरुस्तम्भमतिभ्रमं च मनसो बाधिर्यमष्ठीलिकां
प्रत्यष्ठीलिकया सहापहरति प्राक्पीतमुष्णाम्बुना ॥ ८ ॥
रुक्कुक्षिवङ्क्षणकटीजठरान्तरेषु
बस्तिस्तनांसफलकेषु च पार्श्वयोश्च ।
शूलानि नाशयति वातबलासजानि
हिङ्ग्वाद्यमुक्तमिदमाश्विनसंहितायाम् ॥ ९ ॥

शूल रोग में द्वितीय हिंग्वाद्य चूर्ण—हिंगु, पिपरामूल, धनिया, अजमोदा, वच, चव्य, चित्रकमूल, पाढी, कपूरकचरी, वृक्षाम्ल, सेन्धानमक, सौवर्चलनमक, विड़नमक, सोंठ, पीपर, मरिच, सज्जीखार, यवक्षार, अनार, हर्रे, पुष्करमूल, अम्लवेत, हाऊबेर, स्याहजीरा—समभाग—इन द्रव्यों को चूर्ण बनाकर अद्रक का रस तथा विजौरा नीबू के रस में भावित कर शुष्क होने पर पुनः चूर्ण बना ले। यह चूर्ण भोजन के पहले गरम जल से पान करने पर, आध्मान, (आंत में वात का संचय होने पर पक्वाशय का फूल जाना), ग्रहणी दोष, अर्शरोग, गुल्मरोग, उदावर्तक (आमाशय या अन्त्रस्थ आनाह), प्रत्याध्मान (कफावृत वातजन्य आध्मान" पक्वाशय का फूलना), गरोदर (संयोगज विषजन्य उदररोग), पथरी रोग, तूनीद्वय (पक्वाशय या मूत्राशय या दोनों के नीचे गुदा या उपस्थ में शूल का होना "वृक्क शूल के तरह"), अरोचक, ऊरुस्तम्भ (दोनों ऊरुवों का वात), मतिभ्रम, मनोभ्रम, बहरापन, अष्ठीलिका (शूक दोष) तथा प्रत्यष्ठीलिका (अधोवायु, मलमूत्र को रोकने वाली पेट में तिरछीवायु, का उठना "वाताष्ठीला") को दूर करता है। आश्विन-संहिता में कहा हुआ यह हिङ्ग्वाद्य चूर्ण—पेट, वंक्षण, कमर, पेट के अन्दर, वस्ति, स्तन, अंसफलक (कन्धा) तथा दोनों पार्श्वों के वात-कफजन्य शूल को नाश करता है॥ ७–९ ॥

गुल्मे शार्दूलं चूर्णम्—

हिगूग्राबिडशुण्ठ्यजाजिविजयावाटयाभिधानामयै-
श्चूर्णं कुम्भनिकुम्भमूलसहितैर्भागोत्तरं वर्धितैः ।

पीतं कोष्णजलेन कोष्ठकरुजागुल्मोदरादीनयं
शार्दूलं प्रसभं प्रमथ्य हरति व्याधीन्मृगौघानिव ॥ १० ॥

गुल्म रोग में शार्दूल चूर्ण—हिंगु, वच, विडनमक, सोंठ, स्याहजीरा, शु० भाग, बला, कूठ, कुम्भ ( निशोथ ), निकुम्भ ( दन्तीमूल ) उत्तरोत्तर भाग वर्द्धित ( हिंगु एक भाग, वच दो भाग, विडनमक तीन भाग—इस प्रकार एक २ भाग वृद्धिक्रम-परिमाण मे ग्रहण करे ) परिमाण में इन द्रव्यों को एकत्र कर चूर्ण करे। यह शार्दूल नामक चूर्ण गरम जल से पीने पर कोष्ठक-रुजा ( पेट के रोग ), गुल्म रोग तथा उदर रोग आदि रोगसमूह को हठ-पूर्वक मथन कर दूर करता है। जैसे शार्दूल ( बाघ ) मृग के समूह को नाश करता है ॥ १० ॥

गुल्मे नाराचकं चूर्णम्—

सिन्धूत्थपथ्याकणदीप्यकानां चूर्णानि तोयैः पिबतां कवोष्णैः।
प्रयाति नाशं कफवातजन्मा नाराचनिर्भिन्न इवामयौघः ॥ ११ ॥

गुल्म रोग में नाराचक चूर्ण—सेन्धानमक, हर्रे, पीपर, अजवायन—समभाग—इन द्रव्यों के चूर्ण को गरम जल से पान करने वाले पुरुषों के कफ-वातजन्य रोगसमूह नष्ट हो जाते हैं। जैसे नाराच-भिन्न ओघ नष्ट हो जाता है ॥ ११ ॥

गुल्मे पूतीकाद्यं चूर्णम्—

पूतीकपत्रगजचिर्भटचव्यवह्नि-
व्योषं च सस्तरचितं लवणोपधानम्।
दग्ध्वा विचूर्ण्य दधिमस्तुयुतं प्रयोज्यं
गुल्मोदरश्वयथुपाण्डुगुदोद्भवेषु ॥ १२ ॥

गुल्म रोग में पूतीकाद्य चूर्ण—पूतीकरञ्ज, तालीसपत्र, गजपीपर, चिर्भट ( बड़ी ककड़ी का बीज ), चव्य, चित्रकमूल, सोंठ, पीपर, मरिच—समभाग—इन द्रव्यों को तहकर, सेन्धानमक को बीच में रक्खे, और जलाकर चूर्ण कर ले। इस चूर्ण को गुल्मरोग, उदररोग, शोथ, पाण्डुरोग तथा गुदा के अर्श रोगों में प्रयोग करे ॥ १२ ॥

गुल्मे हिङ्ग्वाद्यं चूर्णम्—

हिङ्गुत्रिगुणं सैन्धवमस्मात्त्रिगुणं च तैलमैरण्डम्।
तत्त्रिगुणरसोनरसं गुल्मोदावर्तशूलघ्नम् ॥ १३ ॥

गुल्म रोग में हिग्वाद्य चूर्ण—हिंगु एक भाग, सेन्धानमक तीन भाग, रेंडी का तैल नवभाग, और तैल के तीन गुना लहसुन का रस मिलाकर एकत्र कर प्रयोग करे। यह गुल्म, उदावर्त तथा शूल को नाश करने वाला है ॥१३॥

श्वासे विजयं चूर्णम्—

त्रिकत्रयं वचा हिंगुः पाठा क्षारो निशाद्वयम् ।
चव्यतिक्ताकलिङ्गाग्निशताह्वालवणानि च ॥ १४ ॥
ग्रन्थिबिल्वाजमोदं च गणोऽष्टाविंशको मतः ।
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥ १५ ॥
एरण्डतैलसंयुक्तं सद्यो लिह्यात्ततो नरः ।
बिडालपदकं चापि पिबेदुष्णेन वारिणा ॥ १६ ॥
श्वासं हन्यात्तथा शोफमर्शांसि च भगन्दरम् ।
हृच्छूलं पार्श्वशूलं च बस्तिशूलमरोचकम् ॥ १७ ॥
प्लीहकासप्रमेहांश्च कामलां पाण्डुरोगिताम् ।
आमवातमुदावर्तमन्त्रवृद्धिं गुदक्रिमीन् ॥ १८ ॥
हन्याच्च ग्रहणीरोगान् ये मया परिकीर्तिताः ।
महाज्वरोपसृष्टानां भूतोपहतचेतसाम् ॥ १९ ॥
अप्रजाना च नारीणां प्रजावर्धनमेव च ।
विजयो नाम चूर्णोऽयं सर्वव्याधिहरः परः ॥ २० ॥

श्वास रोग में विजय चूर्ण—त्रिकत्रय (सोंठ, पीपर, मरिच), हर्रे, आँवला, बहेड़ा, दालचीनी, इलायची, तेजपत्र), वच, हिंगु, पाढ़ी, यवक्षार, आमाहल्दी, दारुहल्दी, चव्य, कुटकी, इन्द्रयव, चित्रकमूल, सोया, सेन्धा-सौवर्चल-विड-सांभर-सामुद्रनमक, पिपरामूल, बेल का गूदा, अजमोदा और विजया, यह अष्टाविंशतिक गण है। समभाग इन द्रव्यों को महीन चूर्ण करे। इस चूर्ण को रेंडी के तैल के साथ चाटे या एक कर्ष की मात्रा में गरम जल से पान करे। यह विजय नामक चूर्ण—श्वास, शोथ, अर्श, भगन्दर, हृदय-शूल, पार्श्वशूल, वस्तिशूल, अरोचक, प्लीहावृद्धि, कास, प्रमेह, कामला, पाण्डुरोग, आमवात, उदावर्त, अन्त्रवृद्धि तथा गुदक्रिमि को नाश करता है। महाज्वरजन्य उपद्रवों को तथा भूतों से उपहत चित्तवालों के जो रोग कहे गये हैं उनको तथा ग्रहणी रोगों को भी नाश करता है और बाझ स्त्रियों को भी सन्तान बढ़ाने वाला तथा सभी रोगों को अच्छी तरह नाश करने वाला है ॥ १४–२० ॥

वातरोगे अजमोदाद्यं चूर्णम्—

अजमोदमरिचपिप्पलिविडङ्गसुरदारुचित्रकशताह्वाः ।
सैन्धवपिप्पलिमूलं भागा नवानां पलिकाः स्युः ॥ २१ ॥
शुण्ठी दशपलिका स्यात्पलानि तावन्ति वृद्धदारुकस्यापि ।
अभया पलानि पञ्च सर्वाण्येकत्र कारयेच्चूर्णम् ॥ २२ ॥
समगुडवटकानदतस्तच्चूर्णं कोष्णवारिणा पिबतः ।

नश्यन्त्यामानिलजाः सर्वे रोगाः सुदारुणाः शीघ्रम् ॥ २३ ॥
विश्वाचीप्रतितूनीतूनीरोगाश्च गृध्रसी चोग्रा ।
कटिपृष्ठगुदस्फुटन स्फुटनं चैवास्थिजङ्घयोस्तीव्रम् ॥ २४ ॥
श्वयथुः स्तम्भोऽधिसन्धि ये चान्ये चामवातसंभूताः ।
सर्वे प्रयान्ति नाशं तम इव सूर्यांशुविध्वस्तम् ॥ २५ ॥
क्षुद्बोधमरोगित्वं स्थिरयौवनतां च वलीपलितनाशम् ।
कुरुते च तदभ्यासाद् बहूनन्यानपि गुणांश्चैव ॥ २६ ॥

वात रोग में अजमोदाद्य चूर्ण—अजमोदा, मरिच, पीपर, विडंग, देवदारु, चित्रक, सोया का बीज, सेन्धानमक, पिपरामूल—एक २ पल, सोंठ दशपल, विधारा दशपल, हर्रे पाँच पल—इन सभी द्रव्यों को एकत्र कर चूर्ण बनावे। इस चूर्ण को समभाग गुड मिलाकर ( वटक बनाने की विधि से गुड़ की चाश्नी बनाकर चूर्ण मिलाकर एक २ कर्ष का-वटक बनावे ), वटक बनाकर खाने से या चूर्ण को गरम जल से पान करने से सभी उग्र वातविकार शीघ्र ही नष्ट हो जाते हैं। और विश्वाची ( बाहुपृष्ठ से लेकर अंगुलियों के तल के कण्डरावों का अकड़ जाना ), प्रतितूनी ( ऊपर के तरफ संचरण करने वाला शूल ), तूनी ( पक्वाशय, आमाशय या उसके नीचे गुदा या उपस्थ में जाने वाला रोग ), तीव्र गृध्रसी (लंगड़ी का दर्द), कटि, पीठ तथा गुदा का फटने जैसे पीडा होना तथा हड्डी एवं जंघा में तीव्र फटने जैसी पीडा, शोथ, अधिसंन्धियों का अकडन और अन्य आमवातजन्य रोग ये—सभी रोग नष्ट हो जाते है। जैसे सूर्य के किरण से अन्धकार नष्ट हो जाता है। क्षुद्बोध ( भूख लगता है )। तथा रोगरहित करता है, जवानी को स्थिरता प्रदान करता है और वलि ( मुख में झरी पडना ), पलित ( असामयिक बाल का पकना ) को नाश करता है तथा निरन्तर सेवन करने से बहुत अन्य गुणों को करता है ॥ २१–२६ ॥

वातरोगे आभाद्यं चूर्णम्—

आभां रास्नां गुडूचीं च शतमूलीं महौषधम् ।
शतपुष्पाऽश्वगन्धे च हपुषां वृद्धदारकम् ॥ २७ ॥
यवानीं चाजमोदां च समभागं तु कारयेत् ।
सूक्ष्मचूर्णमिदं कृत्वा बिडालपदकं पिबेत् ॥ २८ ॥
मद्यैर्मांसरसैर्यूषैस्तक्रेणोष्णोदकेन वा ।
सर्पिषा वापि लेह्य तु दधिमण्डेन वा पुनः ॥ २९ ॥
अस्थिसन्धिगतं वायुं स्नायुमज्जाश्रितं तथा ।
गृध्रसीं च कटिस्तम्भं मन्यास्तम्भं हनुग्रहम् ॥ ३० ॥
ये च कोष्ठगता रोगास्तांश्च सर्वान् प्रणाशयेत् ।

आभाद्यं चूर्णमेतत्तु सर्वव्याधिविनाशनम् ॥ ३१ ॥

वातरोग में आभाद्य चूर्ण—आभा ( ज्योतिष्मती ), रास्ना, गुडूची, शतावरी, सोंठ, सौंफ, अश्वगन्धा, हाऊबेर, विधारा, अजवायन, अजमोदा—समभाग—इन द्रव्यों का चूर्ण बनावे और एक कर्ष की मात्रा में—मद्य, मांसरस, यूष, मट्ठा, या गरमजल से पान करे अथवा, घृत या दधिमण्ड से चाटे। यह आभाद्य चूर्ण, अस्थिगतवात, सन्धिगतवात, स्नायु तथा मज्जागतवात, गृध्रसी ( लंगड़ी का दर्द ), कमर का जकड़न, मन्यास्तम्भ, हनुग्रह तथा जितने कोष्ठगत रोग हैं उन सभी रोगों को नाश करता है और भी सभी रोगों को नाश करनेवाला है ॥ २७–३१ ॥

अतिसारे कपित्थाष्टकम्—

यवानीपिप्पलीमूलचातुर्जातकनागरैः ।
मरिचेन्द्रयवाजाजीधान्यसौवर्चलैः समैः ॥ ३२ ॥
वृक्षाम्लधातकीकृष्णाबिल्वदाडिमदीप्यकैः ।
त्रिगुणैः पट्सितायुक्तैः कपित्थाष्टगुणैः कृतः ॥ ३३ ॥
चूर्णोऽतिसारग्रहणीक्षयगुल्मगलामयान् ।
कासश्वासाग्निसादार्शःपीनसारोचकाञ्जयेत् ॥ ३४ ॥

अतिसार रोग में कपित्थाष्टक चूर्ण—अजवायन, पिपरामूल, चातुर्जात ( इलायची, दालचीनी, तेजपत्र, नागकेशर ), मरिच, इन्द्रयव, स्याहजीरा, धनिया, सौवर्चल नमक—समभाग—वृक्षाम्ल, धातकी ( धाय का फूल ), मंगरैल, बेल का गूदा, अनार, अजमोदा—तीन २ भाग, शक्कर छः भाग, कैथ का गूदा आठ भाग—इन द्रव्यों को मिला कर चूर्ण बनावे। यह चूर्ण अतिसार, ग्रहणी, क्षय, गुल्मरोग, गले का रोग, कास, श्वास, मन्दाग्नि, अर्श, पीनस रोग तथा अरोचक को जीत लेता है ॥ ३२–३४ ॥

ग्रहण्यां द्वितीयं कपित्थाष्टकम्—

कपित्थत्रुटिवराङ्गविश्वौषधं धान्यका
चव्याजाजीयवान्यश्च तुल्यांशकाः ।
मरिचदहनदाडिमं धातकी चुक्रिका
बिल्वसौवर्चलं पिप्पलीमूलवृक्षाम्लकम् ॥ ३५ ॥
अपरमपि कपित्थाष्टकं षड्गुणा
पिप्पली सर्वतुल्यांशका शर्करा
ग्रहणिनाशनं वह्निसन्दीपन
कासहृद्रोगगुल्मार्शसां नाशनम् ॥ ३६ ॥

ग्रहणी रोग में द्वितीय कपित्थाष्टक चूर्ण—कैथ का गूदा, इलायची,

दालचीनी, सोंठ, धनिया, चव्य, स्याहजीरा, अजवायन—समभाग—मरिच, चित्रकमूल, अनार का दाना, धाय का फूल, इमली, वेल का गूदा, सौवर्चल नमक, पिपरामूल, वृक्षाम्ल—समभाग, कैथ का गूदा आठ भाग, पीपर छः भाग—इन सभी द्रव्यों को चूर्ण बनाये और सभी चूर्ण के बराबर शक्कर मिला दे। यह चूर्ण ग्रहणीदोषनाशक, उदराग्निसंदीपक तथा कास, हृदय रोग, गुल्मरोग एवं अर्शरोगों को नाश करने वाला है ॥ ३५-३६ ॥

ग्रहण्यां दाडिमाष्टकम्—

कर्षोन्मिता तुगाक्षीरी चातुर्जातं द्विकार्षिकम् ।
यवानीधान्यकाजाजीग्रन्थिव्योषं पलांशकम् ॥ ३७ ॥
पलानि दाडिमादष्टौ सितायाश्चैकतः कृतः ।
कपित्थाष्टकवच्चाय गुणः स्याद्दाडिमाष्टकः ॥ ३८ ॥

ग्रहणी रोग में दाडिमाष्टक चूर्ण—तुगाक्षीरी ( वंशलोचन ), एक कर्ष, चातुर्जात ( इलायची, दालचीनी, तेजपत्र, नागकेशर ) दो कर्ष, अजवायन, धनिया, स्याहजीरा, पिपरामूल, व्योष ( सोंठ, पीपर, मरिच )—एक २ पल, अनार का दाना, आठ पल—इन द्रव्यों को चूर्ण बना कर समभाग शर्करा मिलाकर रख ले। यह दाडिमाष्टक चूर्ण गुणों में कपित्थाष्ट के समान है अर्थात् ग्रहणी, अतिसार आदि रोग नाशक, अग्निसंदीपक, कास, हृद्रोग, गुल्मरोग तथा अर्श रोग को नाश करता है ॥ ३७-३८ ॥

अतिसारे द्वितीयं दाडिमाष्टकचूर्णम्—

दाडिमस्य पलान्यष्टौ चातुर्जातं पलद्वयम् ।
अजाजीनां पलार्धं तु पलार्धं धान्यकस्य च ॥ ३९ ॥
पृथक् तु पालिकान् भागांस्त्रिकटोर्ग्रन्थिकस्य च ।
त्वक्क्षीरी बालकं चैव दद्यात्कर्षसमान् भिषक् ॥ ४० ॥
शर्करायाः पलान्यष्टावेकीकृत्य विचूर्णयेत् ।
आमातीसारकासघ्नस्तथा हृत्पार्श्वशूलनुत् ॥ ४१ ॥
हृद्रोगमरुचिं गुल्मं ग्रहणीमग्निमार्दवम् ।
प्रयुक्तो नाशयत्याशु चूर्णोऽयं दाडिमाष्टकः ॥ ४२ ॥

अतिसार रोग में द्वितीय दाडिमाष्टक चूर्ण—अनार आठ पल, चातुर्जात ( इलायची, दालचीनी, तेजपत्र, नागकेशर ), दो पल, स्याजीरा आधा पल, धनियां आधा पल, त्रिकटु ( सोंठ, पीपर, मरिच ), अलग २ एक पल, पिपरामूल एक पल, वंशलोचन, सुगन्धवाला एक २ कर्ष लेकर चूर्ण बनावे। और शर्करा आठ पल मिला दे। यह चूर्ण आमातिसार तथा कास को नाश करने वाला है। हृदयशूल, पार्श्वशूल को दूर करने वाला है। यह दाडिमाष्टक

चूर्ण प्रयोग करने से हृदय रोग, अरुचि, गुल्मरोग, ग्रहणी रोग तथा मन्दाग्नि को शीघ्र ही नाश करता है ॥ ३९–४२ ॥

गलरोगे एलाद्यं चूर्णम्—

एला त्वग्दलनागपुष्पमरिचं स्यात्पिप्पली नागरं
भागैः स्यात्क्रमवर्धितैः किल युतं सर्वैश्च तुल्या सिता ।
एतच्चूर्णमजीर्णगुल्मजठरेऽप्यर्शःसु हृद्रोगिषु
कासश्वासिषु रक्तपित्तिषु हित कोष्ठामयध्वंसनम् ॥ ४३ ॥

गले के रोग में एलाद्य चूर्ण—इलायची एक भाग, दालचीनी दो भाग, तेजपत्र तीन भाग, नागकेशर चार भाग, मरिच पांच भाग, पीपर छः भाग, सोंठ सात भाग—इन द्रव्यों के चूर्ण के बराबर शर्करा मिला दे। यह एलाद्य चूर्ण अजीर्ण, गुल्मरोग, उदररोग, अर्श, हृदयरोग, कास, श्वास तथा रक्तपित्त के रोगियों के लिये हितकर है और कोष्ठ के रोगों को नाश करने वाला है ॥४३॥

अरोचके वृद्धैलाद्यं चूर्णम्—

वृद्धैला पिप्पलीमूलं चव्यचित्रकनागरम् ।
मरिचं दीप्यकं चैव वृक्षाम्लं चाम्लवेतसम् ॥ ४४ ॥
अजमोदाऽजगन्धा च कपित्थं चार्धकार्षिकम् ।
अत्यन्तपरिशुद्धायाः शर्करायाश्चतुष्पलम् ॥ ४५ ॥
चूर्णं सेव्यमिदं पुम्भिः परमं रुचिवर्धनम् ।
प्लीहकासमथार्शांसि श्वासशूल वमि ज्वरम् ॥ ४६ ॥
निहन्ति दीपयत्यग्नि बलवर्णकरं परम् ।
वातानुलोमनं हृद्यं कण्ठजिह्वाविशोधनम् ॥ ४७ ॥

अरोचक रोग मे वृद्ध एलाद्य चूर्ण—बडी इलायची, पिपरामूल, चव्य, चित्रक, सोंठ, मरिच, दीप्यक ( स्याहजीरा ), कोकमवृक्ष, अम्लवेंत, अजमोदा, अजवायन, कैथ आधा २ कर्ष, स्वच्छशर्करा चार पल—इन द्रव्यों का चूर्ण अत्यन्त रुचि को बढानेवाला है, मनुष्यों को सदा इसका सेवन करना चाहिये। यह प्लीहावृद्धि, कास, अर्श, श्वास, शूल, वमन तथा ज्वर को नाश करता है। अग्नि को प्रदीप्त करता है, बल को बढ़ाता और कान्ति को सुन्दर बनाता है। यह वात का अनुलोमन करनेवाला है। हृदय को बल देनेवाला और कण्ठ तथा जिह्वा को शुद्ध करनेवाला है ॥ ४४–४७ ॥

अरोचके कर्पूराद्यं चूर्णम्—

कर्पूरचोचकङ्कोलजातीफलदलाः समाः ।
लवङ्गोषणनागाह्वकृष्णाशुण्ठ्यो विवर्धिताः ॥ ४८ ॥
चूर्णं सितासमं हृद्य रोचनं क्षयकासजित् ।

वैस्वर्यश्वासगुल्मार्शश्छर्दिकण्ठामयापहम् ॥ ४९ ॥
प्रयुक्तं चान्नपाने हि भेषजद्वेषिणां वरम् ।

अरोचक में कर्पूराद्य चूर्ण—कर्पूर, मोटे दल की दालचीनी, कवावचीनी, जायफर, तेजपत्र—समभाग, लवंग एक भाग, मरिच दो भाग, नागकेशर तीन भाग, पीपर चार भाग, सोंठ पांच भाग—इन द्रव्यों का चूर्ण तथा समभाग शर्करा मिला ले। यह चूर्ण हृदय को बल देनेवाला, रोचक, क्षय तथा कास को जीतनेवाला, स्वरविकृति, श्वास, गुल्म, अर्श, छर्दि तथा कण्ठरोग को नाश करनेवाला है। भोजन से द्वेष करनेवाले ( मन्दाग्नि ) रोगियों के लिये अन्न-पान में प्रयोग करना उत्तम है ॥ ४८–४९ ॥

अरोचके त्वगेलाद्यं चूर्णम्—

त्वगेलाव्योषधान्याम्लनागकेसरजीरकम् ।
लवलीफलकक्कोलं लवङ्गं जातिपत्रिका ॥ ५० ॥
भागानेषां समान् कृत्वा दद्याद् द्विगुणितां सिताम् ।
ईषत्कर्पूरसंयुक्तं चूर्णं रुचिकरं परम् ॥ ५१ ॥

अरोचक में त्वगेलाद्य चूर्ण—दालचीनी, इलायची, सोंठ, पीपर, मरिच, धनिया, अम्लवेत, नागकेशर, स्याहजीरा, हर्फारेवड़ी, कवावचीनी, लवंग, जावित्री समभाग—इन द्रव्यों का चूर्ण बनावे और चूर्ण के बराबर मिश्री मिला दे। तथा थोड़ा कर्पूर मिलाकर चूर्ण तैयार कर ले। यह चूर्ण अत्यन्त रुचिकर है ॥ ५०–५१ ॥

गुल्मे त्रिलवणाद्यं चूर्णम्—

त्रिलवणहपुषाजमोदाजगन्धावचाहिङ्गुपाठोपकुञ्चीशटीजीरकाजाजिकुस्तुम्बरीबाष्पिकाः कारवी तुम्बरुः स्वर्जिका यावशूको जटा पौष्करं दाडिमं तिन्तिडीकं विडङ्गानि भार्गी वरी वेधको, मिशिमरिचगजोपकुल्याऽभयाः पञ्चकोलं निकुम्भा विशाला यवानी सुराह्वं च तत्सर्वमेकत्र चूर्णीकृतं बीजपूरार्द्रकेनासकृद्भावित यः पिबेत्प्रातराहारकालेऽथवा मासमात्रं हिताशी नरः, प्लुतमशिशिरवारिणा जीर्णमद्येन तक्रेण मूत्रेण कोलाम्भसा मस्तुना सर्पिषौष्ट्रेण दुग्धेन कौलत्थयूषेण वा क्षारनिश्र्योततोयेन वा दाडिमस्यैव वाराऽऽत्मवानेभिरेवौषधैः साधितं वा घृतं, हृदयगुदकटीयकृत्प्लीहजं तस्य शूलं प्रणश्येत्तथा गुल्मविष्टम्भदुर्नामकृच्छ्रोदराध्मानहिध्मारुचिश्लीपदश्वासकासाः प्रपक्तुं च शक्तो भवेत्पावकः प्राश्यमानानि पाषाणचूर्णान्यपि ॥ ५२ ॥

गुल्मरोग में त्रिलवणाद्य चूर्ण—त्रिलवण, ( सेन्धा-सौवर्चल-विड नमक ), हाऊवेर, अजमोदा, अजवायन, वच, हिंगु, पाढ़ी, छोटी इलायची, कपूरकचरी,

सफेदजीरा, स्याहजीरा, कुस्तुम्बरी ( धनिया ), नाडीहिंगु, मंगरैल, सज्जीखार, यवक्षार, जटामांसी, पुष्करमूल, अनार, तिन्तिडीक, विडंग, भांगरा, शतावरी, वेधक ( इमली ), सौंफ, मरिच, गजपीपर, हर्रे, पञ्चकोल ( पीपर, पिपरामूल, चव्य, चित्रक, सोंठ ), दन्ती का मूल, इन्द्रायन, अजवायन, मुरामांसी—समभाग—इन द्रव्यों का चूर्ण बनाकर विजौरानीबू के रस मे अनेक बार भावित करे। इस चूर्ण को जो व्यक्ति प्रातःकाल भोजन के समय या एक मास तक पथ्यपूर्वक सौंफ के क्वाथ मे मिलाकर, पुराने मद्य के साथ, तक्र, गोमूत्र, बेर का रस, दही का तोड, घृत, ऊंटनी का दूध, कुलथी का क्वाथ, क्षार से निकाला जल तथा अनार के रस के साथ या इन्हीं औषधों से साधित घृत के साथ सेवन करता है, उसका हृदय, गुदा, कटि ( कमर ), यकृत् तथा प्लीहा का शूल नष्ट हो जाता है। और गुल्मरोग विष्टम्भ, अर्श, कृच्छ्रोदर, आध्मान, हिध्मा, अरुचि, श्लीपद ( फीलपाव ), श्वास तथा कास भी नष्ट हो जाते हैं। जठराग्नि खाये हुए पत्थर के चूर्ण को भी पकाने में समर्थ हो जाता है ॥ ५२ ॥

अरोचके सूक्ष्मैलाद्यं चूर्णम्—

सूक्ष्मैला केसरं त्वक्च पत्रं तालीसकं तुगा।
पृथ्वीका दाडिमं धान्यं जीरकं च द्विकार्षिकम् ॥ ५३ ॥
पिप्पल्यः पिप्पलीमूलं चव्यचित्रकनागरम्।
मरिचं दीप्यकं चैव वृक्षाम्लं साम्लवेतसम् ॥ ५४ ॥
अजमोदाजगन्धे च दधित्थं चेति कार्षिकम्।
चूर्णमग्निप्रदं ह्येतत्परम रुचिवर्धनम् ॥ ५५ ॥

अरोचक में सूक्ष्मैलाद्य चूर्ण—छोटी इलायची, नागकेशर, दालचीनी, तेजपत्र, तालीसपत्र, वंशलोचन, बडी इलायची, अनार, धनिया, स्याहजीरा दो २ कर्ष, पीपर, पिपरामूल, चव्य, चित्रक, सोंठ, मरिच, अजवायन, कोकम वृक्ष, अम्लवेत, अजमोदा, अजवायन, कैथ—एक २ कर्ष—इन सभी द्रव्यों का चूर्ण बनावे। यह चूर्ण अत्यन्त रुचिवर्द्धक है ॥ ५३–५५ ॥

अरोचके लवङ्गाद्यं चूर्णम्—

लवङ्गकङ्कोलमुशीरचन्दनं नतं सनीलोत्पलकृष्णजीरकम्।
एला सकृष्णाऽगुरुभृङ्गकेसरं कणा सविश्वा नलदं सहाम्बुना ॥ ५६ ॥
कर्पूरजातीफलवंशरोचनाः सितार्धभागं सकलं तु चूर्णितम्।
सुरोचनं तर्पणमग्निदीपनं बलप्रदं वृष्यतमं त्रिदोषजित् ॥ ५७ ॥
उरोविबन्धं तमकं गलग्रहं सकासहिध्मारुचियक्ष्मपीनसम्।
ग्रहण्यतीसारसथास्रजः क्षयं प्रमेहगुल्मांश्च निहन्ति सत्वरम् ॥ ५८ ॥

अरोचक में लवंगाद्य चूर्ण—लवंग, कवावचीनी, खस, रक्तचन्दन, तगर, नीलकमल, स्याहजीरा, इलायची, मंगरैल, अगर, भृङ्गराज, नागकेशर, पीपर, सोंठ, जटामांसी, सुगन्धवाला, कपूर, जायफर, वंशलोचन—समभाग—इन द्रव्यों का चूर्ण वनावे और चूर्ण के आधा मिश्री पीस कर मिला दे। यह चूर्ण रोचक, तृप्तिकर, अग्निदीपक, वलप्रद, वीर्यवर्द्धक, तथा त्रिदोष को जीतने वाला है। ऊरुरोग, विवन्ध (मलावरोध), तमकश्वास, गलग्रह, कास, हिध्मा, अरुचि, यक्ष्मारोग, पीनस, (दुर्गन्धयुक्त पुराना नासास्राव), ग्रहणी दोष, अतिसार, रक्तक्षय, प्रमेह तथा गुल्म रोग को शीघ्र ही नाश करता है ॥ ५६–५८ ॥

अरुचौ द्वितीयं लवङ्गाद्यं चूर्णम्—

लवङ्गजातीफलपिप्पलीनां भागं समं कर्षमितं प्रकुर्यात् ।
पलार्धमेकं मरिचस्य दद्यात्पलानि चत्वारि महौषधस्य ॥ ५६ ॥
सितासमं चूर्णमिदं प्रयुक्तं प्रसह्य रोगान् प्रबलान्निहन्यात् ।
कासक्षयारोचकमेहगुल्ममर्शांसि चोग्रान्ग्रहणीप्रदोषान् ॥ ६० ॥
हृत्कण्ठनासावदनप्रबोधं करोति सन्दीपयते च वह्निम् ।

अरुचि रोग में द्वितीय लवंगाद्य चूर्ण—लवंग, जायफर, पीपर—समभाग एक २ कर्ष, मरिच डेढ़पल, सोंठ चार पल—इन द्रव्यों का चूर्ण वनावे और चूर्ण के वरावर मिश्री पीस कर मिला दे। यह चूर्ण प्रयोग करने से प्रवल कास, क्षय, अरोचक, प्रमेह, गुल्मरोग, अर्श, उग्र ग्रहणी दोष आदि रोगों को नाश करता है। हृदय, कण्ठ, नासा तथा मुख को प्रबुद्ध करता है और अग्नि को प्रदीप्त करता है ॥ ५९–६० ॥

तृतीयं लवङ्गाद्यं चूर्णम्—

लवङ्गकङ्कोलकणावराङ्गतालीसचव्यत्रुटिग्रन्थिकौन्त्यः ।
ऐलेयशृङ्गी लवली तुरङ्गी सकेसरा सोषणपत्रिका च ॥ ६१ ॥
द्विदाडिमं तिन्तिडिकोलमम्लं रोध्रत्वचा तूणभवं च तैलम् ।
कर्षांशमानानि पलं च शुण्ठ्याः शशी कलांशः समशर्करोऽयम् ॥६२॥
लवङ्गकाद्यो रुचिपक्तिदाता सुगन्धिहृद्यः क्षयरोगहन्ता ।
बलाग्निसवर्धन एष चूर्णो वरः प्रयोज्यो नृपतेर्हिताय ॥ ६३ ॥

तृतीय लवंगाद्य चूर्ण—लवंग, कवावचीनी, पीपर, दालचीनी, तालीसपत्र, चव्य, इलायची, पिपरामूल, रेणुकावीज, एलवालु, काकड़ासिंघी, हर्फारेवड़ी, अश्वगंधा, नागकेशर, मरिच, जाविंत्री, दोनों अनार, तिन्तिडीक, वेर, अम्लवेत, लोध्र की छाल, तूणभव (कर्पूरवल्ली का तैल) एक २ कर्ष, सोंठ एक पल, कर्पूर सोलहवां भाग—इन द्रव्यों का चूर्ण वनावे और समभाग चीनी मिला दे।

यह लवंगाद्य चूर्ण रुचिवर्द्धक तथा पाचन-शक्ति को बढ़ाने वाला है। यह चूर्ण सुगन्धित तथा हृदय को बल देनेवाला, और क्षयरोग को नाश करने वाला है। बल और अग्नि को बढाने वाले इस श्रेष्ठ चूर्ण का राजाओं के हित के लिये प्रयोग करना चाहिए॥ ६१–६३॥

रक्तपित्ते चन्दनाद्यं चूर्णम्—

चन्दनं नलदं रोध्रमुशीरं पद्मकेसरम्।
नागपुष्पं तथा बिल्वं भद्रमुस्तं सशर्करम्॥ ६४॥
ह्रीबेरं चैव पाठा च कुटजस्य फलत्वचम्।
शृङ्गवेरं विषा चैव धातकी च रसाञ्जनम्॥ ६५॥
आम्रास्थि जम्बुसारं च तथा मोचरसः स्मृतः।
नीलोत्पलं समङ्गा च सूक्ष्मैला दाडिमत्वचः॥ ६६॥
चतुर्विंशतिसेतानि समभागानि कारयेत्।
तन्दुलोदकसंयुक्तं क्षौद्रेण सह योजयेत्॥ ६७॥
चलतां चामगर्भाणां स्तम्भनं परमुच्यते।
अश्विभ्यां विहितं पूर्वं रक्तपित्तविनाशनम्॥ ६८॥
हितं लोहितपित्तिभ्यो ह्यर्शस्सु लोहितेषु च।
तमोमूर्च्छोपसृष्टानां तृषार्तानां च दापयेत्॥ ६९॥

रक्तपित्त में चन्दनाद्य चूर्ण—चन्दन, जटामांसी, लोध्र, खस, कमल का पराग, नागकेशर, बेल का गूदा, नागरमोथा, शक्कर, हाऊबेर, पाढ़ी, इन्द्रयव, कोरैया की छाल, सोंठ, अतीस, धाय का फूल, रसाञ्जन, आम की गुठली, जामुन की गुठली, सेमर का गोंद, नीलकमल, मंजीठ, छोटी इलायची, अनार का छिलका—समभाग—इन चौबीस द्रव्यों का चूर्ण बनावे। इस चूर्ण को चावल के पानी (चावल को एक घंटा तक पानी में भिगोकर मसल कर छाना हुआ जल) तथा मधु के साथ मिलाकर सेवन करे। यह चूर्ण (असमय में) कच्चे गर्भ को गिरने से रोकता है। अश्विनीकुमार का बनाया हुआ यह चूर्ण रक्तपित्त को नाश करने वाला है। रक्तपित्त के रोगी तथा रक्तार्श में लाभप्रद है। तम तथा मूर्च्छा के रोगी एवं पिपासा से व्याकुल व्यक्तियों को यह चूर्ण दिलाना चाहिए॥ ६४–६९॥

प्रतिश्याये व्योषादिचूर्णम्—

व्योषचित्रकतालीसतिन्तिडीकाम्लवेतसैः।
जीरचव्यैश्च तुल्यांशैः पादैस्त्वक्त्रुटिपत्रकैः॥ ७०॥
व्योषादिकमिदं नाम पुराणगुडसंयुतम्।
पीनसश्वासकासघ्नं रुचिस्वरकरं परम्॥ ७१॥

प्रतिश्याय में व्योषादि चूर्ण—व्योष ( सोंठ, पीपर, मरिच ), चित्रक, तालीसपत्र, तिन्तिडीक, अम्लवेत, स्याहजीरा, चव्य—समभाग—दालचीनी, इलायची, तेजपत्र—चौथाई २ भाग—इन द्रव्यों का चूर्ण बनावे और गुड़ की ( चूर्ण से दुगुनी ) चासनी बनाकर मिला दे, या सूखा गुड़ मिला कर प्रयोग करे। यह व्योषादिक नामक चूर्ण पीनस (दुर्गन्ध युक्त चिरकालीन नासास्राव, एवं प्रतिश्याय ) श्वास तथा कास को नाश करने वाला है और रुचि एवं स्वर को बढ़ाने वाला है ॥ ७०-७१ ॥

शोषे षाडवं चूर्णम्—

पिप्पलीनां शतं चैकं द्वे शते मरिचस्य च ।
सिता-पलचतुष्कं च नागरार्धपलं तथा ॥ ७२ ॥
धान्यसौवर्चलाजाजीत्वगेलाश्चार्धकार्षिकाः ।
कोलदाडिमवृक्षाम्लयवान्यश्चाम्लवेतसः ॥ ७३ ॥
कार्षिकांश्चूर्णयेत्सर्वान् हृद्यं त्वन्नप्ररोचकम् ।
प्लीहहृद्ग्रहणीदोषपञ्चकासनिबर्हणम् ॥ ७४ ॥
षाडवं नाम गुल्मार्तिविबन्धानाहशूलनुत् ।

शोष रोग में षाडव चूर्ण—पीपर एक सौ, मरिच दो सौ, मिश्री चार पल, सोंठ आधा पल, धनिया, सौवर्चलनमक, स्याह जीरा, दालचीनी, इलायची—आधा २ कर्ष, बैर, अनार, कोकमवृक्ष, अजवाइन, अम्लवेत—एक २ कर्ष—इन द्रव्यों को लेकर चूर्ण बनावे। यह चूर्ण हृदय को बल देनेवाला, अन्नमे रुचि करनेवाला, प्लीहावृद्धि, हृदयरोग, ग्रहणी दोष तथा पांचों प्रकार के कास को दूर करने वाला है। यह षाडव नामक चूर्ण गुल्मरोग, विबन्ध, आनाह तथा शूल को दूर करता है ॥

शोषे महाषाडवं चूर्णम्—

तालीसोपणचव्यनागलवणैः सर्वैः समांशैस्ततो
द्विघ्नैर्ग्रन्थिकतिन्तिडीकहुतभुक्त्वग्जीरकृष्णायुतैः ।
विश्वैलाबदराम्लवेतसघनैर्धान्याजमोदायुतै-
स्त्र्यंशैर्दाडिमबीजपादसहितैः श्रेष्ठः सितार्धांशकः ॥ ७५ ॥
कण्ठास्योदरहृद्विकारशमनः कायाग्निसंदीपनो
गुल्माध्मानविसूचिकागुदरुजाश्वासक्रिमिच्छर्दिहा ।
कासारुच्यतिसारमूढमरुतां हृद्रोगिणां कीर्तित-
श्चूर्णोऽयमिपजामतीव दयितः ख्यातो महाषाडवः ॥ ७६ ॥

शोषरोग में महाषाडव चूर्ण—तालीसपत्र, मरिच, चव्य, नागकेशर, सेन्धानमक—समभाग—पीपरामूल, तिन्तिडीक, चित्रक, दालचीनी, स्याह-

जीरा, पीपर—दो २ भाग, सोंठ, इलायची, बेर, अमलवेंत, मोथा, धनिया, अजमोदा—तीन २ भाग, अनार का बीज चौथाई भाग—इन सभी द्रव्यों को चूर्ण बनावे और चूर्ण के आधा मिश्री मिला दे। वैद्यों का अतीव प्रिय प्रसिद्ध महाषाडव नामक चूर्ण कण्ठ, मुख, उदर तथा हृदय के विकारों को शान्त करनेवाला है, जाठराग्नि को दीप्त करनेवाला है। गुल्मरोग, आध्मान, हैजा, अर्शरोग, श्वासरोग, कृमि तथा वमन को नाश करनेवाला है और कास, अरुचि, अतिसार, मूढवात (प्रतिलोमवात) एवं हृदय के रोगियों के लिये हितकर है ॥ ७५-७६ ॥

अरोचके दाडिमाद्यं चूर्णम्—

द्वे पले दाडिमादष्टौ खण्डाद्व्योषात्पलत्रयम् ।
त्रिसुगन्धिपलं चैकं चूर्णमेतच्च कारयेत् ॥ ७७ ॥
रोचनं दीपनं स्वर्यं पीनसश्वासकासजित् ।

अरोचक में दाडिमाद्य चूर्ण—अनार का बीज दो पल, मिश्री आठ पल, व्योष (सोंठ, पीपर, मरिच) तीन पल, त्रिसुगन्धि (दालचीनी, इलायची, तेजपत्र) एक पल—इन द्रव्यों को चूर्ण बनावे। यह चूर्ण रुचिवर्द्धक, उदराग्निदीपक, स्वरवर्द्धक एवं पीनस, श्वास तथा कास को जीतनेवाला है ॥

कासे लघुतालीसाद्यं चूर्णम्—

मरिचं चैव तालीसं नागरं पिप्पली शुभा ॥ ७८ ॥
यथोत्तर भागवृद्ध्या त्वगेले चार्धभागिके ।
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा ॥ ७९ ॥
श्वासकासारुचीर्हन्ति चूर्णं दीपनकं परम् ।
हृत्पाण्डुग्रहणीदोषप्लीहशोफज्वरापहम् ॥ ८० ॥
छर्द्यतीसारशूलघ्नं मूढवातानुलोमनम् ।
कल्पयेद् गुटिकां चैव चूर्णं पक्त्वा सितोपलाम् ॥ ८१ ॥
गुटिका ह्यग्निसंयोगाच्चूर्णाल्लघुतरा मता ।

कास रोग में लघु तालीसाद्य चूर्ण—मरिच एकभाग, तालीसपत्र दो भाग, सोंठ तीन भाग, पीपर चार भाग, वंशलोचन पांच भाग, दालचीनी, इलायची, आधा २ भाग, पीपर से अठगुना मिश्री—इन द्रव्यों को एकत्र कर चूर्ण बनावे। यह चूर्ण श्वास, कास, अरुचि को नाश करता है। और उत्तम उदराग्नि दीपक है। हृदय, पाण्डु, ग्रहणीदोष, प्लीहावृद्धि, शोथ तथा ज्वर रोग को नाश करता है। वमन, अतिसार तथा शूल को नाश करने वाला एवं मूढवात का अनुलोम करने वाला है। मिश्री की चासनी बनाकर उसमें चूर्ण

को पकाकर गुटिका बनावे। यह गुटिका अग्नि से संयोग होने के कारण हल्की होती है॥

गुल्मे शार्दूलं चूर्णम्—

भागवृद्धयोत्तरं हिङ्गुवचाबिडसहौषधम्॥ ८२॥
यवानीमभयां चैव चूर्ण मस्त्वादिभिः पिबेत्।
विबन्धानाहशूलार्शोवर्ध्मश्वासोदरापहम्॥ ८३॥
ग्रहणीरोगशूलघ्नं शार्दूलं नाम दीपनम्।

गुल्मरोग में शार्दूल चूर्ण—हिंगु एक भाग, वच दो भाग, बिडनमक तीन भाग, सोंठ चार भाग, अजवायन पांच भाग, हर्रे छः भाग—इन द्रव्यों को चूर्ण बनावे और इस चूर्ण को मस्तु ( दही का तोड़ ), मद्य आदि से पान करे। यह शार्दूल नामक चूर्ण, विबन्ध ( मलबन्ध ), आनाह, शूल, अर्शरोग, वर्ध्म श्वास रोग तथा उदररोग को नाश करने वाला, ग्रहणी रोग तथा शूल को दूर करने वाला, एवं जाठराग्नि को प्रदीप्त करने वाला है॥८२-८३॥

उदरे नारायणं चूर्णम्—

यवानी त्रिफला धान्यं हपुषा सोपकुञ्चिका॥ ८४॥
पृथ्वीका पिप्पलीमूलमजगन्धा शटी वचा।
शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रका॥ ८५॥
द्वौ क्षारौ पौष्करं मूलं कुष्ठ लवणपञ्चकम्।
विडङ्गं च समांशानि दन्तीभागत्रयं तथा॥ ८६॥
द्विगुणे तु त्रिवृच्चित्रे सातला च चतुर्गुणा।
एष नारायणो नाम चूर्णो रोगगणापहः॥ ८७॥
एतं प्राप्य निवर्तन्ते रोगा विष्णुमिवासुराः।
तक्रेणोदरिभिः पेयो गुल्मिभिर्बदराम्बुना॥ ८८॥
सुरया बद्धवाते च वातरोगे प्रसन्नया।
दधिमण्डेन विट्सङ्गे दाडिमाम्बुभिरर्शसि॥ ८९॥
परिकर्तेषु वृक्षाम्लैरुष्णाम्भोभिरजीर्णके।
भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे॥ ९०॥
दूषीविषे विषे मौले सगरे कृत्रिमे विषे।
यथार्हस्निग्धकोष्ठेन पेयमेतद्विरेचनम्॥ ९१॥

उदररोग में नारायण चूर्ण—अजवायन, त्रिफला ( हर्रे, बहेड़ा, आंवला ), धनिया, हाऊबेर, मगरैल, बड़ी इलायची, पिपरामूल, अजमोदा, कपूरकचरी, वच, सौंफ, स्याहजीरा, व्योष ( सोंठ, पीपर, मरिच ), सत्यानासी, चित्रक, सज्जीखार, यवक्षार, पुष्करमूल, कूठ, लवण पंचक ( सेन्धा-सौवर्चल-बिड-

साँभर-सामुद्रनमक ), विडंग—समभाग—दन्तीमूल तीन भाग, निशोथ दो भाग, चित्रक दो भाग, सातला चार भाग—इन द्रव्यों को एकत्र कर चूर्ण बनावे। यह नारायण नामक चूर्ण रोगसमूहों को नाश करने वाला है। इस चूर्ण को प्रयोग करने से विष्णु के आने से असुरों के तरह रोग नष्ट हो जाते हैं। उदर के रोगी को तक्र के साथ, गुल्म के रोगियों को बेर के रस, वातविबन्ध में मद्य, वातरोग में प्रसन्ना, विबन्ध में दधिमण्ड ( दही का पानी ), अर्श रोग में अनार का रस, परिकर्त रोगों में ( पेट मे कैंची काटने के तरह पीड़ा होने पर ) वृक्षाम्ल के रस, अजीर्ण में गरम जल तथा भगन्दर, पाण्डुरोग, कास, श्वास, गलग्रह, दंष्ट्राविष ( सांप का विष ), विष, मूलविष ( जड़ का विष—कनेर आदि का ), गर ( संयोगज ) विष तथा कृत्रिम विष में, यथायोग्य, कोष्ठ को स्निग्ध करनेवाले स्नेह द्रव्यों से स्नेहन करने के बाद पान करना चाहिए। यह चूर्ण विरेचनकारक है॥ ८४-९१॥

उदरे हपुषाद्यं चूर्णम्—

हपुषां काञ्चनक्षीरीं त्रिफलां कटुरोहिणीम्।
नीलिनीं त्रायमाणां च सप्तलां त्रिवृतां वचाम्॥ ९२॥
काचलवणसिन्धूत्थे पिप्पलीं चेति चूर्णयेत्।
दाडिमत्रिफलामांसरसमूत्रसुखोदकैः॥ ९३॥
पेयोऽयं सर्वगुल्मेषु प्लीह्नि सर्वोदरेषु च।
श्वित्रकुष्ठेष्वजीर्णेषु सदने विषमाग्निषु॥ ९४॥
शोफार्शःपाण्डुरोगेषु कामलायां हलीमके।
वातपित्तकफोद्भूतान् विकारान् सन्निवारयेत्॥ ९५॥

उदर रोग में हपुषाद्य चूर्ण—हाऊबेर, सत्यानासी, त्रिफला, ( हर्रे, बहेड़ा, आंवला ), कुटकी, नील, त्रायमाण, सातला, निशोथ, वच, सौवर्चलनमक, सेन्धानमक, पीपर—समभाग—इन द्रव्यों का चूर्ण बनावे। इस चूर्ण को अनार का रस, त्रिफला का क्वाथ, मांसरस, गोमूत्र तथा गरम जल से सभी प्रकार के गुल्म रोग, प्लीहावृद्धि, सभी प्रकार के उदर रोग, श्वित्रकुष्ठ ( सफेद कोढ़ ), अजीर्ण, सदन ( सूखा रोग ), विषमाग्नि, शोथ, अर्श, पाण्डुरोग, कामला तथा हलीमक रोग में पान करना चाहिए। यह चूर्ण वात-पित्त-कफजन्य विकारों को दूर करता है॥ ९२-९५॥

उदरे नाराचकं चूर्णम्—

विडङ्गाजाजिकाचव्यत्रिफलाधान्यकं वचा।
पट्नि पञ्च च क्षारौ ग्रन्थिकं पुष्करं शटी॥ ९६॥
यवानी कुञ्चिका कुष्ठं विशाला धान्यक वचा।

शतपुष्पाऽजगन्धा च हेमक्षीरी सनीलिका ॥ ९७ ॥
हपुषा त्रिवृता दन्ती सातला द्विगुणोत्तरम् ।
चूर्णं नाराचकं पीतं मद्यमस्त्वम्लकाञ्जिकैः ॥ ९८ ॥
गुल्मार्शोग्रहणीरोगान् श्वासं कासोदरे जयेत् ।

उदररोग मे नाराचक चूर्ण—विडंग, स्याहजीरा, चव्य, त्रिफला ( हर्रे, बहेडा, आंवला ), धनिया, वच, पाचों नमक ( सेन्धा, सौवर्चल, विड, सामुद्र, साँभर नमक ), सज्जीखार, यवक्षार, पिपरामूल, पुष्करमूल, कपूर-कचरी, अजवायन, मंगरैल, कूठ, इन्द्रायण, धनिया, बालवच, सौंफ, अजमोदा, सत्यानासी, नील, हाऊबेर, निशोथ, दन्तीमूल, सातला—इन द्रव्यों को उत्तरोत्तर दुगुनी मात्रा मे ( विडंग एक भाग, स्याहजीरा दो भाग, चव्य चार भाग, इत्यादि ) लेकर सूक्ष्म चूर्ण बनावे। यह नाराचक चूर्ण मद्य, मस्तु ( दही का तोड ) तथा अम्ल काञ्जिक के साथ पान करने से गुल्म, अर्श, ग्रहणी रोग, श्वास, कास तथा उदर रोगों को जीत लेता है ॥

उदरे सुवर्णसमकं चूर्णम्—

मरिचं पञ्चकोलं च द्वौ क्षारौ त्रिफला वचा ॥ ९९ ॥
यवानी कुञ्चिका हिङ्गु तिन्तिडीकाम्लवेतसौ ।
त्रायन्ती दाडिमं धान्यमजगन्धा यवाग्रजम् ॥ १०० ॥
कटुका कौटजं बीजं सैन्धवं च समं पृथक् ।
द्विगुणा त्रिवृता दन्ती कम्पिल्लो नीलिकाऽभया ॥ १०१ ॥
स्वर्णक्षीरी सप्तला च सर्वमेकत्र चूर्णयेत् ।
उष्ट्रमूत्रे तथा गव्ये सप्ताहं परिभावयेत् ॥ १०२ ॥
द्विगुणां शर्करां चात्र दापयेत्तत्पिवेत् त्र्यहम् ।
गोमूत्रत्रिफलाक्षाररसैर्मद्यैः सुखाम्बुना ॥ १०३ ॥
सुवर्णसमकं चूर्णं सर्वरोगातिभेषजम् ।
प्लीहानमुदरं हन्ति गुल्मं हृद्रोगमेव च ॥ १०४ ॥
वाताष्ठीलामथानाहं श्वयथुं सर्वगात्रजम् ।
हलीमकं कामलां च पाण्डु मेहं ज्वरं तथा ॥ १०५ ॥

उदररोग में सुवर्णसमक चूर्ण—मरिच, पंचकोल ( पीपर, पिपरामूल, चव्य, चित्रक, सोंठ, ), सज्जीखार, यवखार, त्रिफला ( हर्रे, बहेडा, आंवला ), वच, अजवायन, मंगरैल, हिंगु, तिन्तिडीक, अम्लवेंत, त्रायमाणा, अनारदाना, धनिया, अजमोदा, यवक्षार, कुटकी, इन्द्रयव, सेन्धानमक—समभाग—निशोथमूल, दन्तीमूल, कबीला, नीलवृक्ष, हर्रे, सत्यानाशी ( भंडभाड़ ), सातला—दो २ भाग—इन द्रव्यों को एकत्र कर चूर्ण बनावे। ऊँट का मूत्र

तथा गाय के मूत्र में एक सप्ताह भावित कर सुखा ले। इसके बाद पुनः चूर्ण कर चूर्ण के दुगुना चीनी मिला दे। इस चूर्ण को छः मासा की मात्रा में गाय का मूत्र, त्रिफला का क्वाथ, लाचारस, मद्य तथा ईषदुष्ण जल से तीन दिन तक पान करे। यह सुवर्णसमक चूर्ण, सभी रोगों के उपद्रवों की औषधि है और प्लीहा, उदररोग, गुल्म, हृदयरोग, वाताष्ठीला (पेट में वाताष्ठीला ग्रन्थि का बढ़ जाना), आनाह, सभी अंग का शोथ, हलीमक, कामला, पाण्डुरोग, प्रमेह तथा ज्वर को नाश करता है॥ ९९–१०५॥

कुष्ठे पटोलाद्यं चूर्णम्—

मूलं पटोलस्य तथा रजन्यो फलत्रिकं चेति समानि षट् च।
स्यान्नीलिनी द्वित्रिगुणा विशाला कम्पिल्लकश्चापि चतुर्भिरंशैः॥
त्रिवृत्तथा पञ्चगुणेति योगं चूर्णीकृतं मुष्टिमितं पिबेद्धि।
कुष्ठेषु मूत्रेण तु रोहिणीनां श्वित्रे गरे वाथ हलीमके च॥ १०७॥
जातोदकान्यप्युदराणि हन्यात्पाण्ड्वामयार्शःश्वयथुप्रमेहान्।
एनं प्रयोगं च पिबन् हि कुष्ठी खादेद्रसैर्धन्वमृगद्विजानाम्॥ १०८॥

कुष्ठरोग में पटोलाद्य चूर्ण—परोरा की जड़, आमाहल्दी, दारुहल्दी, फलत्रिक (हर्रे, बहेड़ा, आंवला) समभाग (छः द्रव्यों का छः भाग), नील दो भाग, इन्द्रायण तीन भाग, कबीला चार भाग, निशोथ पांच भाग—इन द्रव्यों को एकत्र कर चूर्ण बनावे और एक कर्ष की मात्रा मे पान करे। कुष्ठ रोग में मूत्र के साथ रोहिणी, सफेद कोढ़, संयोगज विष, हलीमक में भी मूत्र के साथ पान करे। यह चूर्ण जलोदर रोग, उदर रोग, पाण्डु रोग, अर्श, शोथ तथा प्रमेह को नाश करता है। कुष्ठ का रोगी इस चूर्ण को पान करने के समय में धन्व मृग तथा पक्षियों के मांसरस के साथ भोजन करे॥१०६–१०८॥

कुष्ठे द्राक्षाद्यं चूर्णम्—

द्राक्षा निशा च मञ्जिष्ठा त्रिफला देवदारु च।
नागरं पञ्चमूले द्वे मुस्ता मधुरसा तथा॥ १०९॥
सप्तपर्णो ह्यपामार्गः पिचुमन्दाटरूषकौ।
विडङ्गं चित्रको दन्ती पिप्पल्यो मरिचानि च॥ ११०॥
एतेषां समभागानां कुष्ठी चूर्णं पलं पिबेत्।
मासं गोमूत्रसंयुक्तं तथा कुष्ठात्प्रमुच्यते॥ १११॥

कुष्ठरोग में द्राक्षाद्य चूर्ण—मुनक्का, आमाहल्दी, मजीठ, त्रिफला (हर्रे, बहेड़ा, आंवला), देवदारु, सोंठ, पंचमूल दोनों (बेल, गम्भारी, पाटला, अरलू, अरणी, सरिवन, पिठवन, वनभटा, भटकटैया, गोखरू), मोथा, मुलेठी, छतिवन, अपामार्ग, नीम, अडूसा, विडंग, चित्रक, दन्तीमूल, पीपर, मरिच—

समभाग—इन द्रव्यों को एकत्र कर चूर्ण बनावे तथा कुष्ठ रोग-पीडित व्यक्ति एक पल की मात्रा में एक मास तक गोमूत्र के साथ मिलाकर पान करे तो कुष्ठरोग से मुक्त होता है ॥ १०९–१११ ॥

आमवाते अलम्बुषाद्यं चूर्णम्—

अलम्बुषाऽमृता शुण्ठी चित्रकस्त्रिफला कणा ।
यावन्त्येतानि चूर्णानि वृद्धदारु च तत्समम् ॥ ११२ ॥
सूक्ष्मचूर्णीकृतान् सर्वान् स्वेच्छाहारविहारिणः ।
पिबतो मदिरातक्रकाञ्जिकोष्णोदकैर्जयेत् ॥ ११३ ॥
प्लीहानमामवातं च यकृत्पाण्डुविसूचिकाः ।
उक्तं काङ्कायनेनेदं चूर्णमग्निकरं परम् ॥ ११४ ॥

आमवात में अलम्बुषाद्य चूर्ण—अलम्बुषा ( लज्जालुभेद ), गुडूची, सोंठ, चित्रक, त्रिफला ( हर्रे, बहेड़ा, आंवला ), पीपर—समभाग—इन द्रव्यों का चूर्ण बनावे और इन चूर्णों के बराबर विधारा का सूक्ष्म चूर्ण मिला दे। इस चूर्ण को अपनी इच्छा के अनुसार आहार-विहार करने वाला, मदिरा, तक्र, कांजिक तथा गरम जल से पान करने से प्लीहावृद्धि, आमवात, यकृत् रोग, पाण्डु तथा विसूचिका ( हैजा ) को जीत लेता है। कांकायन का बताया यह चूर्ण उदराग्नि को अच्छी तरह बढ़ाता है ॥ ११२–११४ ॥

आमवाते द्वितीयमलम्बुषाद्य चूर्णम्—

अलम्बुषा श्वदंष्ट्रा च त्रिफला नागरामृते ।
यथोत्तर भागवृद्धाः श्यामाचूर्ण च तत्समम् ॥ ११५ ॥
पिबेन्मस्तुसुरातक्रपयोमांसरसादिभिः ।
आमवात निहन्त्येतत्सशोथं वातशोणितम् ।
अलम्बुषादिक चूर्णं बहुरोगविनाशनम् ॥ ११६ ॥

आमवात में द्वितीय अलम्बुषाद्य चूर्ण—अलम्बुषा ( लज्जालुभेद ) एक भाग, गोखरू दो भाग, त्रिफला ( हर्रे, बहेड़ा, आवला ) तीन भाग, सोंठ चार भाग, गुडूची पांच भाग—इन सभी द्रव्यों के बराबर कालानिशोथ मिलाकर चूर्ण बनावे। इस चूर्ण को मस्तु ( दही का तोड ), सुरा, तक्र, दूध तथा मांसरस आदि के साथ पान करे। यह अलम्बुषादिक चूर्ण आमवात, सूखा रोग तथा वातरक्त को नाश करता है और बहुत रोगों को नाश करने वाला है ॥ ११५–११६ ॥

श्वासकासे विडङ्गाद्यं चूर्णम्—

विडङ्गश्चित्रको मुस्ता ग्रन्थिकं देवदारु च ।
वराङ्गचविकाजाजीबिभीतकफलानि च ॥ ११७ ॥

शुण्ठी खदिरसारश्च मेषशृङ्गी सपिप्पली ।
भार्गी शृङ्गी तथा छत्रा कर्चूरो मरिचानि च ॥ ११८ ॥
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ।
उष्णेन वारिणा पीत हन्ति श्लेष्मगलामयान् ॥ ११९ ॥
हृद्रोगांश्चैव कासांश्च कण्ठरोगांश्च दारुणान् ।
अन्ये च कफजा रोगा विलय यान्ति तत्क्षणात् ॥ १२० ॥

श्वास-कास रोग से विडाङ्गाद्य चूर्ण—विडंग, चित्रक, सोंथा, पिपरामूल, देवदारु, दालचीनी, चव्य, स्याहजीरा, बहेडा, मदनफल, सोंठ, खैरसार, मेढ़ासिंघी, पीपर, भांगरा, काकडासिंघी, छत्रा ( सौंफ ), कचूर, मरिच—समभाग—इन द्रव्यों को लेकर महीन चूर्ण बनावे । यह चूर्ण गरम जल से पान करने पर श्लैष्मिक गला रोग, हृदय रोग, कास तथा भयंकर कण्ठ रोगों को नाश करता है और अन्य कफजन्य रोग शीघ्र ही नष्ट हो जाते हैं ॥ ११७-१२० ॥

मन्दाग्नौ वडवानलं चूर्णम्—

सैन्धवसमूलमगधाचव्यानलनागरं हरीतक्यः ।
क्रमवृद्धमग्निवृद्धिं करोति वडवानल चूर्णम् ॥ १२१ ॥

मन्दाग्नि में वडवानल चूर्ण—सेन्धानमक एक भाग, पिपरामूल दो भाग, पीपर तीन भाग, चव्य चार भाग, चित्रक पांच भाग, सोंठ छः भाग, हर्रे सात भाग—इन द्रव्यों को एकत्र कर चूर्ण करे । यह वडवानल चूर्ण उदराग्नि को प्रदीप्त करता है ॥ १२१ ॥

मन्दाग्नौ द्वितीय वडवानल चूर्णम्—

पथ्यानागरकृष्णाकरञ्जवेल्लाग्निभिः सितातुल्यैः ।
वडवानलं तु जरयति बहुगुर्वपि भोजनं चूर्णम् ॥ १२२ ॥

मन्दाग्नि में द्वितीय वडवानल चूर्ण—हर्रे, सोंठ, पीपर, करंज, विडंग, चित्रक—समभाग—इन द्रव्यों के चूर्ण के बराबर शर्करा मिलाकर रख दे । यह वडवानल नामक चूर्ण अधिक गरिष्ठ ( भारी, दुष्पच ) भोजन को पचा देता है ॥ १२२ ॥

ग्रहण्यामग्निमुखं चूर्णम्—

त्रिकटुत्रिफलाभागा पञ्च षट् च पृथक् चव्यचित्रकयोः ।
बिडसैन्धवसौवर्चलमेकद्वित्रीणि कर्षाणि ॥ १२३ ॥
इति चूर्णं ग्रहणीगदगुदजोदरगुल्मशूलघ्नम् ।
जनयति च जातवेदसमल्पभुजामेतदग्निमुखम् ॥ १२४ ॥

ग्रहणी-विकार में अग्निमुख चूर्ण—त्रिकटु ( सोंठ, पीपर, मरिच ) तीन

भाग, त्रिफला ( हर्रे, बहेडा, आँवला ) तीन भाग, चव्य पांच भाग, चित्रक छः भाग, विडनमक एक भाग, सेन्धानमक दो भाग, सौवर्चल नमक तीन भाग—इन द्रव्यों को एकत्र कर चूर्ण बनावे। यह चूर्ण, ग्रहणी रोग, गुदज ( अर्श ) रोग, उदररोग, गुल्मरोग तथा शूल को नाश करता है। यह अग्निमुख चूर्ण अल्पाहारियों ( मन्दाग्नि वालों ) के जठराग्नि को प्रदीप्त करता है ॥ १२३-१२४ ॥

गुल्मे द्वितीयमग्निमुखं चूर्णम्—

चित्रकहपुषाग्रन्थिकसैन्धवसौवर्चलाजमोदाभिः।
विडधान्यशटीपुष्करकर्चूराजाजितिन्तिडीकैश्च ॥ १२५ ॥
चव्ययवानीदाडिमपृथ्वीकेलाम्लवेतसैश्च समैः।
अग्निमुखोऽयं चूर्णः काञ्जिकमस्तूष्णवारिसीधूनाम् ॥ १२६ ॥
पीतोऽन्यतमेन नृभिर्गुल्मारुचिवह्निसादशूलानि।
दुर्नामप्लीहोदरकफवातगदान्विनाशयति क्षिप्रम् ॥ १२७ ॥

गुल्म रोग में द्वितीय अग्निमुख चूर्ण—चित्रक, हाऊबेर, पिपरामूल, सेन्धानमक, सौवर्चल नमक, अजमोदा, विडनमक, धनिया, कपूरकचरी, पुष्करमूल, कचूर, स्याहजीरा, तिन्तिडीक, चव्य, अजवायन, अनार, पृथ्वीका ( मगरल ), इलायची, अम्लवेत—समभाग—इन द्रव्यों को लेकर चूर्ण बनावे। यह अग्निमुख नामक चूर्ण कांजिक, मस्तु ( दही का तोड ), गरम जल तथा सीधु में से किसी एक के साथ पान करने से मनुष्यों के गुल्म, अरुचि, मन्दाग्नि, शूल, दुर्नाम ( अर्श ) रोग, प्लीहोदर (पुराना प्लीहावृद्धि) तथा कफवातजन्य रोगों को शीघ्र ही नाश करता है ॥ १२५-१२७ ॥

गुल्मे बृहदग्निमुखं चूर्णम्—

द्वौ क्षारौ चित्रकः पाठा विडङ्ग लवणानि च।
सूक्ष्मैला तगर भार्गी कारवी हिङ्गु पौष्करम् ॥ १२८ ॥
शटी दार्वी त्रिवृन्मुस्ता वचा चेन्द्रयवास्तथा।
धात्रीजीरकवृक्षाम्लश्रेयस्यः सोपकुञ्चिकाः ॥ १२९ ॥
अम्लवेतसमम्लीका दाडिमं कटुत्रयम्।
भल्लातकाजमोदे च यवानी सुरदारु च ॥ १३० ॥
अभयाऽतिविषा चव्या हपुषाऽऽरग्वधस्तथा।
तिलमुष्ककशिग्रूणां कोकिलाक्षपलाशयोः ॥ १३१ ॥
क्षारा अमूनि तुल्यानि सूक्ष्मचूर्णानि कारयेत्।
लोहकिट्टं च सप्ताहं तप्तं गोमूत्रसेचितम् ॥ १३२ ॥
विद्वान्सुभावितं कृत्वा योगेऽस्मिन्प्रक्षिपेत्ततः।

मातुलुङ्गरसेनैव भावयेत्तु दिनत्रयम् ॥ १३३ ॥
दिनत्रयं तु शुक्तेन तथाऽऽर्द्रकरसेन च ।
सुभावितं ततः कृत्वा भक्तमध्ये प्रयोजयेत् ॥ १३४ ॥
एषोऽग्निकल्पचूर्णस्तु नाशयत्यचिराद् गदान् ।
अजीर्णकं तथाऽऽनाहं पञ्च गुल्मान् सुदुस्तरान् । १३५ ॥
ग्रहणीपाण्डुरोगांश्च श्वासकासांश्च दारुणान् ।
प्रतिश्यायं क्षयं शोषं विद्रधिं कफवातजाम् ।
उदराण्यन्त्रवृद्धिं च ह्यष्ठीला वातशोणितम् ।
कुष्ठानि च विशीर्णानि सन्निपातं सुदुर्जयम् ।
अर्शांसि वातरक्तं च कुष्ठमन्त्रस्य वृद्धिताम् ॥
अपस्मारं तथोन्मादं विभ्रमं च मदात्ययम् ॥ १३६ ।
प्रणुदत्युल्बणानेतान्नष्टमग्निं च दीपयेत् ।
समस्तव्यञ्जनोपेतं भक्तं कृत्वा तु भोजने ॥ १३७ ॥
प्रदद्यादस्य चूर्णस्य बिडालपदकं भिषक् ।
ततस्तद्द्रवतां याति कोष्णत्वं च प्रपद्यते ॥ १३८ ॥
एष चाग्निमुखश्चूर्णश्चूर्णराजो निगद्यते ।
ब्रह्मणा निर्मितश्चैष ह्यश्विभ्यां परिकीर्तितः ॥ १३९ ॥

गुल्मरोग में बृहत् अग्निमुख चूर्ण—सज्जीक्षार, यवक्षार, चित्रक, पाठा, विडंग, सेन्धानमक, सौवर्चल-विड-सांभर-सामुद्र, छोटी इलायची, तगर, भांगरा, कारवी ( सौंफ ), हिंगु, पुष्करमूल, कपूरकचरी, दारुहल्दी, निशोथ, मोथा, वच, इन्द्रयव, आवला, जीरा, कोकमवृक्ष, गजपीपर, मंगरैल, अम्लवेंत, इमली, अनार, कटुत्रय ( सोंठ, पीपर, मरिच ), भल्लातक, अजमोदा, अजवायन, देवदारु, हर्रे, अनीस, चव्य, हाऊवेर, अमलतास, तिलक्षार, पाढ़ल क्षार, सहिजनक्षार, तालमखानाक्षार, पलासक्षार—समभाग—इन द्रव्यों को सूक्ष्म चूर्ण बनावे । मण्डूर को गरम कर गाय के मूत्र में बुझावे । इस प्रकार सात दिन तक करे पुनःभावित कर सुखा ले और पीस कर इस योग में मिला दे ( यहां मण्डूरभस्म की मात्रा नहीं है अतः समभाग लेना चाहिए ) फिर विजौरा नीबू के रस से तीन दिन तक भावित करे । इस प्रकार तीन दिन तक शुक्त से तथा तीन दिन तक अदरक के स्वरस से भावित करे । इस चूर्ण को अच्छी तरह भावित कर पुनः चूर्ण बना ले और भोजन के मध्य में प्रयोग करे । यह अग्निकल्प चूर्ण रोगों को शीघ्र ही नाश करता है । अजीर्ण, आनाह, पांचों प्रकार के दुस्साध्य गुल्म रोग, ग्रहणी दोष, पाण्डुरोग, भयंकर श्वास-कास, प्रतिश्याय, क्षय, सूखा रोग, कफवातजन्य विद्रधि, उदर रोग, आन्त्रवृद्धि,

अष्ठीला, वातरक्त, विशीर्ण कुष्ठरोग, दुर्जयसन्निपात, अर्शरोग, वातरक्त, कुष्ठ, अतड़ी का बढ़ना, अपस्मार, उन्माद, विभ्रम तथा मदात्यय उग्रतर इन रोगों को दूर करता है और उदराग्नि को प्रदीप्त करता है। वैद्य सभी व्यंजनों से युक्त भात बनाकर उसमें इस चूर्ण को एक अक्ष मात्रा मे मिला दे। इसके बाद वह भात द्रवीभूत होता हैं और थोडा सा गरम हो जाता है। यह अग्निमुख चूर्ण चूर्णों का राजा कहा गया है। ब्रह्मा ने इस चूर्ण को बनाया और अश्विनीकुमारों ने प्रयोग किया है ॥ १२८-१३९ ॥

अग्निमान्द्ये वैश्वानरं चूर्णम्—

लवणयवानीदीप्यकपिप्पलीनागरमुत्तरोत्तर वृद्धम्।
सर्वसमांशा पथ्या चूर्णो वैश्वानरः साक्षात्॥ १४० ॥

अग्निमान्द्य में वैश्वानर चूर्ण—सेन्धानमक एक भाग, अजवायन दो भाग, अजमोदा तीन भाग, पीपर चार भाग, सोंठ पांच भाग, सभी द्रव्यों के बराबर हर्रे लेकर, इन द्रव्यों को चूर्ण बनावे। यह साक्षात् वैश्वानर चूर्ण है। अर्थात् यह चूर्ण अग्नि को प्रदीप्त करने वाला है ॥ १४० ॥

गुल्मे द्वितीयं वैश्वानरं चूर्णम्—

सैन्धवलवणात्कर्षौ द्वौ च यवान्यास्त्रयोऽजमोदायाः।
पिप्पल्याश्चापि पलं पञ्चकर्षाणि शुण्ठ्याश्च ॥ १४१ ॥
द्वादश हरीतकीनां चूर्णमिदं कारयेच्छ्लक्ष्णम्।
मद्योष्णोदकयूषैः पिबेद्धि तक्रेण सर्पिषा वापि ॥ १४२ ॥
गुल्मे तथा रुजायां पार्श्वोदरवस्तियोनिशूलेषु।
वातानुलोमनकरं चूर्ण वैश्वानरं नाम ॥ १४३ ॥

गुल्म रोग में द्वितीय-वैश्वानर चूर्ण—सेन्धानमक एक कर्ष, अजवायन दो कर्ष, अजमोदा तीन कर्ष, पीपर एक पल ( चार कर्ष ), सोंठ पांच कर्ष, हर्रे बारह कर्ष, लेकर इन द्रव्यों को सूक्ष्म चूर्ण करे। इस चूर्ण को मद्य, गरम जल, यूष तक्र या घृत के साथ गुल्म रोग, पार्श्व, उदर, वस्ति तथा योनिशूल में पान करे। यह वैश्वानर चूर्ण वात का अनुलोमन करने वाला है ॥१४१-१४३॥

गुल्मे तृतीयं वैश्वानरं चूर्णम्—

माणिमन्थस्य भागौ द्वौ यवान्यास्तद्वदेव च।
भागास्त्रयोऽजमोदाया नागराद्भागपञ्चकम्॥ १४४ ॥
दश चैव हरीतक्याः सूक्ष्मचूर्णीकृताः शुभाः।
मस्त्वारनालमद्यैश्च सर्पिषोष्णोदकेन वा ॥ १४५ ॥
आमवातं जयेत्पीत गुल्मं हृद्वस्तिज गदम्।
वातानुलोमनं श्रेष्ठं चूर्ण वैश्वानरं स्मृतम्॥ १४६ ॥

गुल्मरोग में तृतीय वैश्वानर चूर्ण—मणिमन्थ ( सेन्धानमक ) दो भाग, अजवायन दो भाग, अजमोदा तीन भाग, सोंठ पांच भाग, हर्रे दश भाग,—इन द्रव्यों को सूक्ष्म चूर्ण बनावे। यह उत्तम वैश्वानर चूर्ण मस्तु ( दही का तोड ), आरनाल, मद्य, घृत या गरम जल से पान करने पर आमवात, गुल्म रोग, तथा वस्ति के रोग ( अर्श ) को जीत लेता है। और वात का अनुलोमन करने वाला है ॥ १४४–१४६ ॥

अग्निदीप्त्यर्थं ज्वालामुखं चूर्णम्—

हिङ्ग्वम्लवेतसकटुत्रिकचित्रकेभ्यः
सक्षारपौष्करफलत्रिकदाडिमेभ्यः।
कर्षान्पृथग्गुडपलान्यथ चूर्ण्य भुक्तो
ज्वालामुखोऽयमनलस्य करोति दीप्तिम् ॥ १४७ ॥

अग्निदीप्त्यर्थ ज्वालामुख चूर्ण—हिंगु, अम्लवेत, कटुत्रिक ( सोंठ, पीपर, मरिच ), चित्रक, यवक्षार, पुष्करमूल, फलत्रिक ( हर्रे, आंवला, बहेडा ), अनार एक २ कर्ष—इन द्रव्यों को चूर्ण बनाकर गुड सात पल मिला दे। यह ज्वालामुख नामक चूर्ण अग्नि को प्रदीप्त करता है ॥ १४७ ॥

उदावर्ते नाराचकं चूर्णम्—

हिङ्गु कुष्ठ वचा चैव स्वर्जिका बिडमेव च।
एको द्वावथ चत्वारस्तथाऽष्टौ षोडशैव च ॥ १४८ ॥
यथाक्रमकृतान् भागांश्चूर्णमानाहभेदनम्।
नाराचविवृतो ह्येष योगो नाराचको मतः ॥ १४९ ॥
उदावर्तेषु शूलेषु गुल्मेष्वथ भगन्दरे।
हृद्रोगस्य प्रमेहस्य योगोऽयं शमनः परः ॥ १५० ॥

उदावर्त में नाराचक चूर्ण—हिंगु एक भाग, कूठ दो भाग, वच चार भाग, सज्जीखार आठ भाग, विडनमक सोलह भाग—इन द्रव्यों का चूर्ण आनाह को दूर करता है। नाराच-निर्मित यह योग नाराचक नामक है। उदावर्त, शूल, गुल्म तथा भगन्दर रोग में प्रशस्त है। और यह योग हृदय रोग तथा प्रमेह को अच्छी तरह शान्त करता है ॥ १४८–१५० ॥

सारस्वतं चूर्णम्—

कुष्ठाश्वगन्धसैन्धवपिप्पलिमरिचं द्विजीरकं शुण्ठी।
पाठाऽजमोदसहिता समभागा चूर्णिता च वचा ॥ १५१ ॥
प्रातर्मधुसर्पिर्भ्यां बिडालपदमात्रमेतदवलिह्य।
सप्ताह पथ्याशी किन्नरमधुरस्वरो भवति मर्त्यः ॥ १५२ ॥
द्विगुणीकृते च तस्मिन्मेधावी भवति मिष्टवाक्यश्च।

त्रिगुणीकृते च तस्मिञ्छ्लोकसहस्रं पठत्याशु ॥ १५३ ॥
दुर्मेधसः किलायं भिक्षोराचार्यलोकसेनेन ।
अप्रार्थितेन दत्तो योगवरो नन्दविहारे ॥ १५४ ॥

सारस्वत चूर्ण—कूठ, अश्वगन्धा, सेन्धानमक, पीपर, मरिच, स्याह जीरा, सफेद जीरा, सोंठ, पाढी, अजमोदा—इन द्रव्यों को समभाग लेकर सूक्ष्म चूर्ण बनावे और सभी चूर्णों के बराबर बालवच का चूर्ण मिला दे। मनुष्य इस चूर्ण को एक कर्ष की मात्रा में पथ्यपूर्वक भोजन करते हुए एक सप्ताह तक मधु एक भाग तथा घृत आधा भाग के साथ सेवन करने से किन्नर के समान मधुर स्वर बोलने वाला होता है। दो सप्ताह तक सेवन करने से मेधा शक्ति से युक्त मृदुभाषी होता है। तीन सप्ताह तक सेवन करने वाला व्यक्ति शीघ्र ही दो हजार श्लोकों को पढ़ लेता है। इस श्रेष्ठ योग ( चूर्ण ) को आचार्य त्रिलोक सेन ने दुर्मेधस भिक्षु के लिये नन्द विहार में दिया ( बताया ) था ॥ १५१–१५४ ॥

बृहत्सारस्वतं चूर्णम्—

कुष्ठाश्वगन्धे लवणाजमोदे द्वे जीरके त्रीणि कटूनि पाठा।
माङ्गल्यपुष्पी च समानि चूर्णं कृत्वा तु चूर्णेन वचोद्भवेन ॥ १५५ ॥
तुल्येन युक्तं बहुशो रसेन तद्भावितं ब्रह्मविनिर्मितायाः।
सर्पिर्मधुभ्यां च ततोऽक्षमात्रं लिह्यान्नरः सप्तदिनं हिताशी ॥ १५६ ॥
सौस्वर्यमिच्छन्मनसश्च धैर्यं मेधां तथेच्छन्द्विगुणं च कालम्।
पठेन्नरः श्लोकसहस्रमह्ना तद्वत्प्रयुक्तं त्रिगुणं च कालम् ॥ १५७ ॥
सारस्वतमिदं चूर्णं ब्रह्मणा निर्मितं स्वयम्।
जगद्धिताय लोकानां दुर्मेधसां विचेतसाम् ॥ १५८ ॥

बृहत्सारस्वत चूर्ण—कूठ, अश्वगन्धा, सेन्धानमक, अजमोदा, त्रिकटु ( सोंठ, पीपर, मरिच ), पाढा, मांगल्यपुष्पी ( त्रायमाणा )—समभाग इन द्रव्यों को लेकर चूर्ण बनाये और चूर्ण के बराबर बालवच का चूर्ण मिलाकर ब्राह्मी के रस से अनेक बार भावित करे तथा सुखा कर चूर्ण बना ले। इसके बाद अच्छे स्वर को चाहने वाला पथ्यपूर्वक रहकर एक सप्ताह तक एक अक्ष की मात्रा में मधु तथा आधा भाग घृत के साथ चाटे। मन की स्थिरता एवं धारणा शक्ति को चाहने वाला दुगुने समय तक ( दो सप्ताह ) सेवन करे। इसी प्रकार तीन सप्ताह तक सेवन करने वाला व्यक्ति एक ही दिन में एक हजार श्लोक पढ़ लेता है। ब्रह्मा ने इस सारस्वत चूर्ण को मन्दबुद्धि तथा दूषित चित्तवाले प्राणियों के हित के लिये स्वयं बनाया है ॥१५५-१५८॥

अर्शोरोगे यवानिकाद्यं चूर्णम्—

यवान्यतिविषा कुष्ठं वचा हिङ्गु हरीतकी ।
कत्तृण रोहिषं मुस्त रास्ना विबुधदारु च ॥ १५९ ॥
पिप्पल्यः शृङ्गवेर च मरिचं चव्यचित्रकौ ।
मातुलुङ्गस्य मूलानि पालाश मूलमेव च ॥ १६० ॥
त्रिफलाशटिसूक्ष्मैलाः पौष्कर त्वग्घरीतकी ।
अजाजी चेति तच्चूर्ण पिबेदुष्णोदकासवैः ॥ १६१ ॥
एतदर्शोविबन्धानां प्रयोगादमृतोपमम् ।

अर्शरोग मे यवानिकाद्य चूर्ण—अजवायन, अतीस, कूठ, वच, हिंगु, हर्रे, कत्तृण ( सुगन्धित तृण ), दूर्वा, मोथा, रासन, विधारा, पीपर, सोंठ, मरिच, चव्य, चित्रक, मातुलुंग की जड, पलास की जड, त्रिफला (हर्रे, वहेड़ा, आंवला), कपूरकचरी, छोटी इलायची, पुष्करमूल, हर्रे, स्याहजीरा—समभाग—इन द्रव्यों को एकत्र कर चूर्ण बनावे । और इस चूर्ण को गरम जल-तथा आसव के साथ पान करे । यह चूर्ण अर्श तथा विवन्ध ( मलावरोध ) से पीडित व्यक्तियों के लिये प्रयोग करने से अमृत के समान कार्य करता है ( अर्थात् अर्श तथा विबन्ध को दूर करता है ॥ १५९–१६१ ॥

श्वासकासे विभीतकाद्यं चूर्णम्—

बिभीतक विषा चैव भद्रमुस्ता च पिप्पली ।
भार्गी च शृङ्गवेरं च सूक्ष्मचूर्णानि कारयेत् ॥ १६२ ॥
तानि चूर्णानि मद्येन पीतान्युष्णोदकेन वा ।
नाशयन्ति नृणां क्षिप्रं श्वासकासापतन्त्रकान् ॥ १६३ ॥

श्वासकास में विभीतकाद्य चूर्ण—वहेड़ा, अतीस, नागरमोथा, पीपर, भांगरा, सोंठ—समभाग—इन औषधियों को चूर्ण बनावे । यह चूर्ण मद्य तथा गरम जल के साथ पान करने से मनुष्यों के श्वास-कास तथा अपतन्त्रक ( मृगी सदृश वात व्याधि ) को शीघ्र ही नाश करता है ॥ १६२–१६३ ॥

हिक्काकासे रेणुकाद्यं चूर्णम्—

हरेणुश्चोरकं मुस्तं सूक्ष्मैलाशटिनागरम् ।
त्वगेला पुष्करं शृङ्गी ह्रीबेरागरुकेसरम् ॥ १६४ ॥
यवान्यामलकी भार्गी पिप्पली सुरसा तथा ।
सिताचतुर्गुणं चूर्णं तत्पीतं लीढमेव वा ॥ १६५ ॥
अन्नपानप्रयुक्तं वा भक्षितं वापि केवलम् ।
कासहिक्काज्वरश्वासपार्श्वशूल च नाशयेत् ॥ १६६ ॥

हिक्का-कास में रेणुकाद्य चूर्ण—रेणुका बीज, चोरा, मोथा, छोटी इलायची,

कपूर कचरी, सोंठ, दालचीनी, बडी इलायची, पुष्करमूल, काकड़ा सिंघी, हाऊबेर, अगर, नागकेशर, अजवायन, आंवला, भांगरा, पीपर, तुलसी—इन समभाग औषधियों को चूर्ण बनाकर, चूर्ण के चौगुना मिश्री मिला ले। इस चूर्ण को पान करने से या चाटने से एव भोजन के साथ प्रयोग करने से अथवा केवल ही प्रयोग करने से कास, हिक्का ( हिचकी ) ज्वर, श्वास तथा पार्श्वशूल को नाश करता है ॥ १६४–१६६ ॥

हिक्काश्वासे सुरसाद्यं चूर्णम्—

सुरसा चोरकं शृङ्गी सूक्ष्मैला पुष्करं शटी।
पिप्पलीत्वग्विडक्षारशुण्ठीहिङ्ग्वम्लवेतसम् ॥ १६७ ॥
भार्गी तामलकी जीवा वृक्षाम्लश्चेति चूर्णितम्।
हिक्काश्वासविबन्धार्शःकासहृत्पार्श्वशूलनुत् ॥ १६८ ॥

हिक्का-श्वास में सुरसाद्य चूर्ण—तुलसी, चोरा, काकडासिंघी, छोटी इलायची, पुष्करमूल, कपूरकचरी, पीपर, दालचीनी, विडनमक, यवक्षार, सोंठ, हिंगु, अम्लवेत, भांगरा, भुइ आंवला, जीवक, कोकम वृक्ष—समभाग—इन द्रव्यों का सूक्ष्म चूर्ण बनावे। यह चूर्ण हिक्का ( हिचकी ), श्वास, मलावरोध, अर्श, कास, हृदयशूल तथा पार्श्वशूल को दूर करता है ॥ १६७–१६८ ॥

तमकश्वासे शट्याद्यं चूर्णम्—

शटीचोरकजीवन्तीत्वङ्मुस्तापुष्कराह्वयम्।
सुरसातामलक्येलापिप्पल्यगरुनागरम् ॥ १६९ ॥
बालकं च समं चूर्णं कृत्वाऽष्टगुणशर्करम्।
सर्वथा तमके श्वासे हिक्कायां च प्रयोजयेत् ॥ १७० ॥

तमक श्वास में शट्याद्य चूर्ण—कपूरकचरी, चोरा, जीवन्ती, दालचीनी, मोथा, पुष्करमूल, तुलसी, भुइ आंवला, इलायची, पीपर, अगर, सोंठ, सुगन्ध बाला—समभाग—इन औषधियों को चूर्ण बनावे और उसमें अठगुना शक्कर मिला दे। यह चूर्ण हमेशा तमक श्वास ( कफाधिक श्वास रोग—अस्थमा ) तथा हिक्का ( हिचकी ) में प्रयोग करना चाहिए ॥ १६९–१७० ॥

दन्तरोगे तिक्तकं चूर्णम्—

मुस्तं त्रिकटुकं पाठां त्वग्बीजं वत्सकस्य च।
पटोलकटुके निम्बं हरिद्रां धन्वयासकम् ॥ १७१ ॥
जातीप्रवालभूनिम्बौ मधुकं सरसाञ्जनम्।
त्रायमाणां गुडूची च त्रिफलां चेति चूर्णयेत् ॥ १७२ ॥
चूर्णोऽयं तिक्तको नाम कवलः प्रतिसारणः।
दन्तमूलास्यकण्ठस्थान् रोगानाशु व्यपोहति ॥ १७३ ॥

दन्तरोग में तिक्तक चूर्ण—मोथा, त्रिकटु ( सोंठ, पीपर, मरिच ), पाठा, दालचीनी, इन्द्रयव, परोरा का पत्ता, कुटकी, नीम, हलदी, धमासा, चमेली का पत्ता, चिरायता, मुलेठी, रसाञ्जन, त्रायमाणा, गुडूची, त्रिफला ( हर्रे, बहेडा, आंवला )—समभाग—इन द्रव्यों का सूक्ष्म चूर्ण बनावे। यह तिक्तक नामक चूर्ण कवल ( कवर-कुल्ला ) धारण करने से तथा प्रतिसारण ( अंजन ) करने से दांत के मूल ( मसूडा ), मुख तथा कण्ठ में स्थित रोगों को दूर करता है ॥ १७१–१७३ ॥

दन्तरोगे पीतक चूर्णम्—

दार्वीपटोलयष्ट्याह्वप्रियङ्ग्वतिविषा घनम्।
त्रायन्ती नागपुष्पं च भूनिम्बस्तिक्तरोहिणी ॥ १७४ ॥
दाडिमत्वग्बिभीतं च हरितालं मनःशिला।
समांशानि त्रिभागांशं सशैलेयं रसाञ्जनम् ॥ १७५ ॥
पीतकं चूर्णमेतद्धि सक्षौद्रं प्रतिसारणम्।
दन्तमूलगलास्योष्ठजिह्वातालुविकारिणाम् ॥ १७६ ॥

दन्तरोग मे पीतक चूर्ण—दारुहलदी, परोरा का पत्ता, जेठीमधु, प्रियंगु, अतीस, मोथा, त्रायमाणा, नागकेशर, चिरायता, कुटकी, अनार, दालचीनी, बहेडा, हरिताल, मनःशिला—समभाग, छडीला तीनभाग, रसांजन तीन भाग—इन सभी द्रव्यों को चूर्ण बनावे। इस पीतक चूर्ण को मधु में मिलाकर दांत के मूल ( मसूड़ा ), गला, मुख, ओंठ, जिह्वा तथा तालु विकारवाले रोगियों के लिये अंजन करना चाहिए। अर्थात् विकार के अनुसार उन स्थानों मे लेप करना चाहिए ॥ १७४–१७६ ॥

गलरोगे कालकं चूर्णम्—

गृहधूमं यवक्षारं पाठां व्योषं रसाञ्जनम्।
तेजोह्वां त्रिफलां रोध्रं चित्रकं चेति चूर्णयेत् ॥ १७७ ॥
सक्षौद्रं धारयेदेतद् गलरोगविनाशनम्।
कालकं नाम चूर्णं तु दन्तास्यगलरोगनुत् ॥ १७८ ॥

गलरोग मे कालक चूर्ण—गृहधूम, यवक्षार, पाठा, व्योष ( सोंठ, पीपर, मरिच ), रसाञ्जन, तेजबल, त्रिफला, (हर्रे, बहेडा, आंवला), लोध्र, चित्रक—समभाग—इन द्रव्यों को चूर्ण बनावे। इस चूर्ण को मधु मे मिलाकर मुख में धारण करना चाहिए। यह कालक चूर्ण गला के रोगों को नाश करता है तथा दाँत, मुख और गला के रोगों को दूर करता है ॥ १७७–१७८ ॥

मुखरोगे द्वितीयं पीतकं चूर्णम्—

मनःशिला यवक्षारो हरितालं ससैन्धवम्।

दार्वी त्वक्चेति तच्चूर्णं माक्षिकेण समायुतम् ॥ १७९ ॥
मूर्च्छितं घृतमण्डेन कण्ठरोगेषु धारयेत् ।
मुखरोगेषु च श्रेष्ठं पीतकं नाम चूर्णकम् ॥ १८० ॥

मुखरोग में पीतक चूर्ण—शु० मनःशिला, यवक्षार, हरिताल, सेन्धानमक, दारुहल्दी, दालचीनी—इन द्रव्यों को सूक्ष्म चूर्ण बनावे और मधु मिलाकर घृतमण्ड ( मेहरु ) के साथ गरम कर कण्ठ रोग तथा मुख रोग में धारण ( मुख में कवल ग्रहण ) करे। यह पीतक नामक चूर्ण कण्ठ तथा मुख रोग में श्रेष्ठ है ॥ १७९–१८० ॥

कासे जीवन्त्याद्यं चूर्णम्—

जीवन्ती मधुकं पाठा त्वक्क्षीरी त्रिफला शटी ।
मुस्तैलापद्मकं द्राक्षा द्वे बृहत्यौ वितुन्नकम् ॥ १८१ ॥
सारिवा पौष्करं मूलं कर्कटाख्या रसाञ्जनम् ।
पुनर्नवा लोहरजस्त्रायमाणा यवानिका ॥ १८२ ॥
भार्गी तामलकी वृद्धिर्विडङ्गं धन्वयासकम् ।
क्षारचित्रकचव्याम्लवेतसव्योषदारु च ॥ १८३ ॥
चूर्णीकृत्य समांशानि लेहयेन्मधुसर्पिषा ।
चूर्णं पाणितलं कृत्वा पञ्चकासान् व्यपोहति ॥ १८४ ॥

कासरोग में जीवन्त्याद्य चूर्ण—जीवन्ती, मुलेठी, पाठा, वंशलोचन, त्रिफला ( हर्रे, बहेडा, आंवला ), कपूरकचरी, मोथा, इलायची, पद्मकाठ, मुनक्का, वनभंटा, रेगनी, धनियां, सारिवा, पुष्करमूल, काकड़ासिंघी, रसाञ्जन (रसौंत), पुनर्नवा, लौहभस्म, त्रायमाणा, अजवायन, भांगरा, भुइ आंवला, वृद्धि, विडंग, धमासा, यवक्षार, चित्रक, चव्य, अम्लवेत, व्योष ( सोंठ, पीपर, मरिच ), देवदारु—समभाग इन द्रव्यों का चूर्ण बनाकर एक अक्ष की मात्रा में—मधु एक भाग तथा घृत आधा भाग के साथ चाटे। यह चूर्ण पांचों प्रकार के कासों को दूर करता है ॥ १८१–१८४ ॥

अतिसारे भूनिम्बाद्यं चूर्णम्—

भूनिम्बकटुकाव्योषमुस्तकेन्द्रयवान् समान् ।
द्वौ चित्रकात्कलिङ्गत्वग्भागान् षोडश चूर्णयेत् ॥ १८५ ॥
चूर्णं मस्त्वम्बुना पीतं ग्रहणीदोषगुल्मजित् ।
कामलाज्वरपाण्डुत्वमेहारुच्यतिसारजित् ॥ १८६ ॥

अतिसार में भूनिम्बाद्य चूर्ण—चिरायता, कुटकी, व्योष ( सोंठ, पीपर, मरिच ), मोथा, इन्द्रयव—समभाग—चित्रक दो भाग, कोरैया की छाल, सोरह भाग—इन औषधों को चूर्ण बनावे। इस चूर्ण को मस्तु जल ( दही

के तोड़ ) के साथ पान करे। यह चूर्ण ग्रहणी दोष, गुल्म रोग, कामला, ज्वर, पाण्डुरोग, प्रमेह, अरुचि तथा अतिसार को जीत लेता है ॥१८५–१८६॥

ग्रहण्यां पाठाद्यं चूर्णम्—

पाठाप्रतिविषामुस्तव्योषभूनिम्बवत्सकाः ।
तिक्ताचित्रकदुस्पर्शास्तुल्यैस्तैः कुटजः समः ॥ १८७ ॥
गुडशीताम्बुना पीतो ग्रहणीहाऽग्निकारकः ।

ग्रहणी में पाठाद्य चूर्ण—पाढ़ी, अतीस, मोथा, व्योष ( सोंठ, पीपर, मरिच ), चिरायता, इन्द्रजव, कुटकी, चित्रक, यवासा—समभाग—इन द्रव्यों को चूर्ण बना कर कोरैया की छाल का चूर्ण, सबके बराबर मिला दे। यह चूर्ण गुड के रस के साथ पान करने से ग्रहणी दोष को नाश करता है और उदराग्नि को प्रदीप्त करता है ॥

ग्रहण्यां नागराद्यं चूर्णम्—

नागरातिषामुस्त भूनिम्ब सरसाञ्जनम् ।
वत्सकत्वक्फले बिल्व पाठा कटुकरोहिणीम् ॥ १८८ ॥
पिबेत्समांशक चूर्ण सक्षौद्रं तण्डुलाम्बुना ।
पैत्तिके ग्रहणीदोषे रक्त यश्चापवेश्यते ॥ १८९ ॥

ग्रहणी विकार मे नागराद्य चूर्ण—सोंठ, अतीस, मोथा, चिरायता, रसाञ्जन, कोरैया की छाल, इन्द्रयव, बेल का गूदा, पाढी, कुटकी—समभाग—इन द्रव्यों का चूर्ण बनावे। इस चूर्ण को मधु मिला कर चावल के जल ( एक तोला चावल अठगुना जल मे कम से कम एक घंटा भिगोकर छान ले, यही चावल का जल कहलाता है ) के साथ पान करे। यह पैत्तिक ग्रहणी दोष में तथा जिस ग्रहणी दोष में रक्तस्राव होता हो उसमें लाभप्रद है ॥ १८८–१८९ ॥

राजयक्ष्मणि सितोपलाद्यं चूर्णम्—

सितोपलां तवक्षीरी पिप्पलीं बहुला त्वचम् ॥ १९० ॥
अन्त्यादूर्ध्व द्विगुणित लेहयेत्क्षौद्रसर्पिषा ।
चूर्णक प्राशयेच्चैतच्छ्वासकासकफातुरम् ॥ १९१ ॥
सुप्तजिह्वारोचकिनं मन्दाग्नि पार्श्वशूलिनम् ।
हस्तपादांसदाहेषु ज्वरे रक्ते तथोर्ध्वगे ॥ १९२ ॥

राजयक्ष्मारोग में सितोपलाद्य चूर्ण—मिश्री सोलह भाग, वंशलोचन आठ भाग, पीपर चारभाग, इलायची दो भाग, दालचीनी एक भाग—इन द्रव्यों का चूर्ण बनावे। इस चूर्ण को श्वास, कास तथा कफ के रोगियों को और शून्य जिह्वा, अरुचि, मन्दाग्नि एवं पार्श्वशूल के रोगी को मधु एक भाग तथा आधा

भाग घृत के साथ चटाये। हाथ-पैर तथा अंस के दाह में ज्वर में तथा मुख से रक्त निकलने पर यह चूर्ण प्रशस्त है ॥ १९०-१९२ ॥

योनिदोषे पुष्यानुगं चूर्णम्—

पाठा जम्ब्वाम्रयोर्मज्जा शिलोद्भेदो रसाञ्जनम्।
अम्बष्ठा मोचनिर्यासः समङ्गा पद्मकेशरम् ॥ १९३ ॥
वाह्लिकातिविषे बिल्वं रोध्रो मुस्तं सगैरिकम्।
कट्फलं मरिचं शुण्ठी मृद्वीका रक्तचन्दनम् ॥ १९४ ॥
कट्वङ्गवत्सकानन्ताधातकीमधुकार्जुनम्।
पुष्येणोद्धृत्य तुल्यानि सूक्ष्मचूर्णानि कारयेत् ॥ १९५ ॥
तानि क्षौद्रेण संयोज्य पाययेत्तण्डुलाम्बुना।
अर्शःसु चातिसारेषु रक्तं यश्चोपवेश्यते ॥ १९६ ॥
दोषा दन्तकृता ये च बालानां तांश्च नाशयेत्।
योनिदोषं रजोदोषं जलं श्वेतं सपाण्डुरम् ॥ १९७ ॥
स्त्रीणां श्यावारुणं यच्च प्रसह्य विनिवर्तयेत्।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ॥ १९८ ॥

योनि रोग में पुष्यानुग चूर्ण—पाढ़ी, जामुन तथा आम की गुठली, पाषाण-भेद, रसाञ्जन ( रसौत ), अम्बष्ठा ( जूही ), सेमर का गोंद, मंजीठ, पद्मकेशर, चित्रक, अतीस, बेल, लोध, मोथा, गेरू, कायफर, मरिच, सोंठ, मुनक्का, रक्तचन्दन, सोनापाठा, कोरैया, अनन्तमूल, धाय का फूल, मुलेठी, अर्जुन—इन औषधियों को पुष्य नक्षत्र में ग्रहणकर—समभाग—लेकर सूक्ष्म चूर्ण बनावे। इस चूर्ण को मधु में मिलाकर चावल के धोवन के साथ अर्श, अतिसार तथा रक्तातिसार में पान कराये। दांत के रोग तथा बालकों के रोग को नाश करता है। स्त्रियों के योनिदोष, रजोदोष श्वेत तथा पाण्डुर वर्ण का स्राव, काला तथा रक्तवर्ण के स्राव को अवश्य ही दूर करता है। यह पुष्यानुग नामक चूर्ण आत्रेय महर्षि के द्वारा पूजित, स्त्रीसम्बन्धी रोगों में लाभप्रद है ॥ १९३-१९८ ॥

पाण्डुरोगे योगराजं चूर्णम्—

त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च।
भागश्चित्रकमूलस्य विडङ्गानां तथैव च ॥ १९९ ॥
मुस्ताकम्पिल्लयोर्भागो देयश्चापि पृथक् पृथक्।
पञ्चाश्मजतुनो भागास्तथा रूप्यमलस्य च ॥ २०० ॥
माक्षिकस्य तु शुद्धस्य लोहस्य रजसस्तथा।
अष्टौ भागाः सितायाश्च तत्सर्वं सूक्ष्मचूर्णितम् ॥ २०१ ॥

माक्षिकेणाप्लुतं स्थाप्यमायसे भाजने शुभे ।
उदुम्बरसमां मात्रां ततः खादेद्यथाग्नि ना ॥ २०२ ॥
दिने दिने प्रयोक्तव्यं जीर्णे भोज्यं यथेप्सितम् ।
वर्जयित्वा कुलत्थांश्च काकमाचीं कपोतकान् ॥ २०३ ॥
योगराजोऽयमाख्यातो योगोऽयममृतोपमः ।
रसायनमिदं श्रेष्ठं सर्वरोगहरं शिवम् ॥ २०४ ॥
पाण्डुरोगं विषं कासं यक्ष्माण विषमज्वरम् ।
कुष्ठान्यजरकं मेहान् श्वासं हिक्कामरोचकम् ॥
विशेषाद्धन्त्यपस्मार कामलां गुदजानि च ॥ २०५ ॥

पाण्डुरोग में योगराज चूर्ण—त्रिफला ( हर्रे, बहेड़ा, आँवला ) तीन भाग, त्रिकटु ( सोंठ, पीपर, मरिच ) तीन भाग, चित्रक एक भाग, विडंग, एक भाग, मोथा एक भाग, कबीला एक भाग, शिलाजीत पांच भाग, रौप्य माक्षिक पांच भाग, स्वर्णमाक्षिक पांच भाग, शु० लौहभस्म पांच भाग, शर्करा आठ भाग—इन द्रव्यों को सूक्ष्म चूर्ण बनावे और मधु में मिलाकर लोहे के स्वच्छ पात्र मे रक्खे। मनुष्य इस चूर्ण को गूलर के फल के बराबर मात्रा में भक्षण करे। प्रतिदिन भोजन करने के बाद अपनी इच्छा के अनुसार कुलथी, मकोय तथा कपोत-मांस को छोड़ कर भक्षण करना चाहिए, यह योगराज नामक चूर्ण "योग" अमृत के समान है और सभी रोगों को नाश करने वाला, कल्याणकारक, उत्तम रसायन है। यह चूर्ण पाण्डुरोग, विष, कास, यक्ष्मा, विषमज्वर, कुष्ठरोग, अजरक ( अजीर्ण ), प्रमेह, श्वास, हिक्का, ( हिचकी ), अरोचक, विशेष कर अपस्मार, कामला तथा अर्श रोगों को नाश करता है ॥ १९९–२०५ ॥

कुष्ठे त्रिफलाद्यं चूर्णम्—

त्रिफलातिविषाकटुकानिम्बकलिङ्गवचापटोलानाम् ।
मागधिकारजनीद्वयपद्मकभार्गीमूर्वाविशालानाम् ॥ २०६ ॥
भूनिम्बपलाशानां दद्याद् द्विपल त्रिवृत्त्रिगुणा ।
तैश्च समाना ब्राह्मी तच्चूर्णं सुप्तिनुत् परमम् ॥ २०७ ॥

कुष्ठ रोग में त्रिफलाद्य चूर्ण—त्रिफला ( हर्रे, बहेड़ा, आँवला ), अतीस, कुटकी, निम्ब, इन्द्रयव, वच, परोरा का पत्ता पीपर, आमाहल्दी, दारुहल्दी, पद्मकाष्ठ, भांगरा, मूर्वा ( मोरवेल ), इन्द्रायण, चिरायता, पलास दो २ पल, निशोथ छ पल, इन सभी द्रव्यों के बराबर ब्राह्मी लेकर, एकत्र कर सूक्ष्म चूर्ण बनावे। यह चूर्ण सुप्ति ( सुन्न ) कुष्ठ को अच्छी तरह दूर करता है ॥ २०६–२०७ ॥

मन्दाग्नौ व्योषाद्यं चूर्णम्—

सव्योषं क्रिमिजित्सपञ्चलवणं साजाजिकं साभयं
सक्षारं सहुताशनं सचविकं सग्रन्थिकं सत्रिवृत् ।
एतच्चूर्णमुदश्विता प्रपिबतामुष्णेन वा वारिणा
वह्निर्वृद्धिमुपैति सर्वगदजिद्भ्राजिष्णुतामावहेत् ॥ २०८ ॥

मन्दाग्नि से व्योषाद्य चूर्ण—व्योष ( सोंठ, पीपर, मरिच ), विडंग, पंच लवण ( सेन्धा, सौवर्चल, विड, सांभर, सामुद्र ), स्याहजीरा, हर्रे, यवक्षार, हुताशन ( चित्रक ), चविक ( चव्य ), पिपरामूल, निशोथ—समभाग—इन द्रव्यों को लेकर चूर्ण बनावे । यह चूर्ण, उदश्वित् ( अर्ध जल मिश्रित दही ) या गरम जल से पान करने पर जाठराग्नि को बढ़ाता है, सभी रोगों को दूर करता है तथा पाचन शक्ति को बढ़ाता है ॥ २०८ ॥

पाण्डुरोगे खण्डसमकं चूर्णम्—

त्रिफलाव्योषबिल्वाब्दपिप्पलीमूलचित्रकैः ।
त्वगेलापत्रचविकातिन्तिडीकाम्लवेतसैः ॥ २०९ ॥
समांशैर्धातुमाक्षीकं सर्वैस्तुल्य प्रदापयेत् ।
लोहचूर्णं समं तैश्च सर्वैः खण्डं समांशकम् ॥ २१० ॥
चूर्णित मधुना लेह्य वटकान् वा समाक्षिकान् ।
भक्षयित्वा यथासात्म्यमनुपानं प्रयोजयेत् ॥ २११ ॥
नाशयेत्कुष्टमालस्यं प्रमेहोदरकामलाः ।
पाण्डुरोगं तथा कासं हलीमकशिरोरुजम् ॥ २१२ ॥
प्रसेकमरुचिं मूर्च्छां हृल्लास मन्दवह्निताम् ।
रक्तपित्तं परीसर्पं श्वयथु च नियच्छति ॥ २१३ ॥

पाण्डुरोग में खण्डसमक चूर्ण—त्रिफला ( हर्रे, बहेड़ा, आंवला ), व्योष ( सोंठ, पीपर, मरिच ), बेल का गूदा, अब्द ( मोथा ), पिपरामूल, चित्रक, दालचीनी, इलायची, तेजपत्र, चविका ( चव्य ), तिन्तिडीक, अम्लवेत—समभाग—इन द्रव्यों को सूक्ष्म चूर्ण बनावे और चूर्ण के बराबर धातुमाक्षिक ( रौप्यमाक्षिक ), सभी चूर्णों के बराबर लौहभस्म एवं चूर्ण, रौप्यमाक्षिक तथा भस्म के समभाग शर्करा मिला दे । या शर्करा की चासनी बनाकर उस में चूर्ण छोड़ कर ठंढा होने पर मधु मिला कर वटक बना ले । इस चूर्ण को मधु के साथ चाटे या वटक को खाकर यथासात्म्य ( यथा अनुकूल ) अनुपान का प्रयोग करे । यह चूर्ण या 'वटक' कुष्ठ, आलस्य, प्रमेह, उदर रोग, कामला, पाण्डुरोग, कास, हलीमक ( पाण्डुरोग के बाद रोगी का वर्ण हरित, नील तथा पीत वर्ण का हो जाना ) तथा शिरःशूल को नाश करता है । और

प्रसेक ( नजला ), अरुचि, मूर्च्छा, हल्लास ( मिचली ), मन्दाग्नि, रक्तपित्त, परीसर्प ( चर्म कुष्ठ ) तथा शोथ को दूर करता है ॥ २०९-२१३ ॥

शोफे पाठाद्यं चूर्णम्—

पाठा सकृष्णा गजपिप्पली च निदग्धिका नागरचित्रकौ च।
सपिप्पलीमूलसजाजिरात्रिमुस्तं च चूर्णं सुखतोयपीतम्।
हन्यात्त्रिदोषं चिरजं च शोफं कुष्ठं च चूर्णस्य हि सुप्रयोगात् ॥२१४॥

शोथ रोग में पाठाद्य चूर्ण—पाढ़ी, पीपर, गजपीपर, छोटी कटेरी (रेंगनी), सोंठ, चित्रक, पिपरामूल, स्याहजीरा, रात्रि ( निशा-हल्दी ), मोथा—समभाग इन द्रव्यों का चूर्ण, ईषद् उष्ण जल से पान करने पर पुराना त्रिदोषज शोथ तथा कुष्ठ रोग को नाश करता है। इस चूर्ण को पथ्यपूर्वक सेवन करने से उपर्युक्त रोगों को अच्छी तरह दूर करता है ॥ २१४ ॥

कुष्ठे वाकुचिकाद्यं चूर्णम्—

वाकुची त्रिफला वह्निर्भल्लातश्च शतावरी।
सिन्दुवारोऽश्वगन्धा च निम्बः पञ्चाङ्गसंयुतः ॥ २१५ ॥
मासैकं भक्षितं हन्ति चूर्णमेषां समाशकम्।
सर्वकुष्ठानि वातांश्च रोगिणां नात्र संशयः ॥ २१६ ॥

कुष्ठरोग में वाकुचाद्य चूर्ण—वाकुची, त्रिफला ( हर्रें, बहेड़ा, आंवला ), चित्रक, शु० भल्लातक, शतावरी, सिन्दुवार, अश्वगन्धा, पत्र-पुष्प-फल-छाल सहित नीम—समभाग—इन द्रव्यों का चूर्ण एक मास तक खाने से सभी प्रकार के कुष्ठ रोग, तथा रोगियों के वात रोगों को नाश करता है। इसमे सन्देह नहीं है ॥ २१५-२१६ ॥

कुष्ठे पृथुनिम्बपञ्चकं चूर्णम्—

काले त्वक्छदसारबीजकुसुमैर्निम्बस्य तुल्यांशकैः
कृत्वा चूर्णमदः कटुत्रिकनिशाधात्र्यक्षपथ्यायुतैः।
पञ्चारिष्टमिदं पयोमधुघृतैरुष्णाम्बुना वा पुमान्
पीत्वा कासगरप्रमेहपिटिकाकुष्ठादिभिर्मुच्यते ॥ २१७ ॥

कुष्ठरोग मे पृथु निम्ब-पंचक चूर्ण—नीम की छाल-पत्र-सार-बीज तथा पुष्प यथासमय समभाग लेकर सूक्ष्म चूर्ण बनावे और सोंठ, पीपर, मरिच, आमाहल्दी, आंवला, बहेडा, हर्रें—समभाग—इन द्रव्यों के चूर्ण को मिला दे। इस पञ्चारिष्ट चूर्ण को मनुष्य—दूध, घृत, मधु या उष्ण जल से पान कर, कास, गर ( संयोगज विष ), प्रमेह-पिडका तथा कुष्ठ आदि रोगों से मुक्त हो जाता है ॥ २१७ ॥

कुष्ठे बृहत्पञ्चनिम्बकं चूर्णम्—

रसायनं प्रवक्ष्यामि ब्रह्मणाऽमिततेजसा ।
प्रोक्त यच्च्यवनादिभिरुपयुक्तं महर्षिभिः ॥ २१८ ॥
पुष्पकाले तु निम्बस्य कुसुमानि समाहरेत् ।
फलकाले फल चैव मूल पत्र त्वचं तथा ॥ २१९ ॥
चित्रकोऽथ विडङ्गानि व्याधिघातकशक्रजौ ।
भल्लातको हरीतक्यः शुण्ठी चामलकैः सह ॥ २२० ॥
श्वदंष्ट्रा लोहचूर्ण च भृङ्गस्वरसभावितम् ।
अरिष्टखदिराभ्यां च भावयेत्पञ्चनिम्बकम् ॥ २२१ ॥
भावयित्वा पुनः पिष्टमेकस्थाने च कारयेत् ।
ततः कर्षमितां मात्रां सर्पिषा माक्षिकेण वा ॥ २२२ ॥
सुखाम्बुना वा तत्पीत तत्क्षणादेव जीर्यति ।
हन्यात्कुष्ठानि सर्वाणि सप्त चैव महाक्षयान् ॥ २२३ ॥
अर्शांसि वातगुल्म च खालित्य पलितानि च ।
वातरक्त विशेषेण श्वित्रं कुष्ठं तथैव च ॥ २२४ ॥
कुष्ठनाशनमेतद्धि ब्रह्मणा गदित पुरा ।
वातातपसहो ह्येष न चात्र नियमः क्वचित् ॥ २२५ ॥
ग्राम्यधर्मं च कुर्वाणो भोजनं च यथेप्सितम् ।
मासमात्रोपयोगेन जीवेद्वर्षशतं पुमान् ॥ २२६ ॥
सर्वकामप्रसक्तोऽपि सर्वरोगैः प्रमुच्यते ।
षण्मासमुपयोगेन सर्परपि न दृश्यते ॥ २२७ ॥
वर्षमात्रोपयोगेन जीवेद्वर्षशतत्रयम् ।
नास्मात्परममस्त्यन्यत्कुष्ठरोगस्य भेषजम् ॥ २२८ ॥
साध्यानि यानि कुष्ठानि तान्येवामुं प्रकुर्वतः ।
निवर्तन्ते यथा क्रुद्धे सौपर्णे पवनाशिनः ॥ २२९ ॥

कुष्ठरोग मे बृहत्पञ्चनिम्बक चूर्ण—अतिशय तेजस्वी ब्रह्मा का कहा हुआ तथा च्यवनादि महर्षियों द्वारा प्रयुक्त रसायन को कहूँगा ।

पुष्प के समय में नीम का पुष्प तथा बीज के समय में बीज लेकर छिलका निकाल कर, और नीम की जड, पत्र तथा छाल, एकत्र कर सूक्ष्म चूर्ण बना ले, एवं चित्रक, विडंग, व्याधिघातक ( अमलतास ), इन्द्रयव, शु० भल्लातक, हर्रे, सोंठ, आंवला, गोखरू—समभाग—इन द्रव्यों को चूर्ण बनावे, तथा पूर्वोक्त निम्ब-पञ्चाग चूर्ण पांच भाग, लोह भस्म एक भाग मिलाकर, भृङ्गराज के स्वरस से भावित करे । सुखा कर पुन. नीम के क्वाथ तथा खैर के क्वाथ से

भावित कर सुखा ले और चूर्ण बनाकर रख ले। इसके बाद इस चूर्ण को एक कर्ष की मात्रा में घृत या मधु के साथ या ईषदुष्ण जल के साथ पान करने से शीघ्र ही परिपाक हो जाता है। यह चूर्ण सभी प्रकार के कुष्ठरोग, सात प्रकार के महाक्षय ( राजयक्ष्मारोग ), अर्श, वातगुल्म, खालित्य ( बाल का गिरना ), पलित ( असमय मे बाल का पकना ), वातरक्त—तथा विशेष कर श्वित्र कुष्ठ ( सफेद कोढ़ ) को नाश करता है। यह पञ्चनिम्बक कुष्ठनाशक चूर्ण को ब्रह्मा ने पहले कहा था। इस चूर्ण के सेवन-काल में वायु तथा धूप को सहन कर सकता है, कोई परहेज नहीं है। सभी ग्राम्यधर्म एवं यथेप्सित भोजन आदि को करते हुए एक—एक मास तक प्रयोग करने से एक सौ वर्ष तक मनुष्य जीवित रहता है। सभी कार्य में प्रसक्त रहने पर भी सभी रोगों से मुक्त हो जाता है। ६ मास तक प्रयोग करने पर सांप नहीं काट सकता ( अर्थात् सांप के विष का असर नहीं होता है ) एक वर्ष तक सेवन करने से तीन सौ वर्ष तक जीवित रहता है। इसको छोडकर कुष्ठ रोग की अन्य कोई औषध नहीं है। इस चूर्ण को प्रयोग करने से साध्य कुष्ठ दूर हो जाते है, जैसे गरुड़ के क्रुद्ध होने पर सर्प नष्ट हो जाते है॥ २१८–२२९ ॥

मन्दाग्नौ लवणभास्करं चूर्णम्—

पिप्पली पिप्पलीमूलं धान्यकं कृष्णजीरकम्।
सैन्धवं च बिडं चैव पत्रं तालीसकेसरम्॥ २३० ॥
एषां द्विपलिकान् भागान् पञ्च सौवर्चलस्य च।
सारिवाजाजिशुण्ठीनामेकैकस्य पलं पलम्॥ २३१ ॥
त्वगेले चार्धभागे च सामुद्रात्कुडवद्वयम्।
दाडिमात्कुडवं चैकं द्वे पले चाम्लवेतसात्॥ २३२ ॥
एतच्चूर्णीकृतं श्लक्ष्णं गन्धाढ्यममृतोपमम्।
लवणं भास्करं नाम भास्करेण विनिर्मितम्॥ २३३ ॥
जगतोऽस्य हितार्थाय वातश्लेष्मामयापहम्।
तक्रमस्तुसुराशुक्तसीधुकाञ्जिकयोजितम्॥ २३४ ॥
जाङ्गलानूपमांसेषु भक्ष्येषु विविधेषु च।
मन्दाग्नीनां खादयतां शक्तो भवति पावकः॥ २३५ ॥
अर्शांसि ग्रहणीदोषशोषकुष्ठभगन्दरान्।
हृद्रोगमामदोषांश्च विविधानुदरस्थितान्॥ २३६ ॥
प्लीहानं वातगुल्मं च श्वासकासोदरक्षयान्।
शूलं च नाशयत्येतत्तुष्टो नृप इवापदः॥ २३७ ॥

मन्दाग्नि में लवण भास्कर चूर्ण—पीपर, पिपरामूल, धनिया, स्याहजीरा,

सेन्धानमक, विडनमक, तेजपत्र, तालीसपत्र, नागकेशर—दो २ पल, सौवर्चल नमक पांच पल, सारिवा, सफेद जीरा, सोंठ—एक २ पल, दालचीनी, इलायची—आधा २ पल, सामुद्र नमक दो कुडव (आठ पल), अनार का बीज एक कुडव (चार पल), अम्लवेत दो पल—इन सभी द्रव्यों को एकत्र कर सूक्ष्म चूर्ण बनावे। इस गन्ध से युक्त अमृत के समान भास्कर नामक चूर्ण को सांसारिक मनुष्यों के हित के लिये भास्कर ने बनाया है। इस चूर्ण को तक्र, मस्तु (दही का तोड), सुरा, शुक्त, सीधु तथा काञ्जिक के साथ प्रयोग करने से वात श्लेष्म रोगों को नाश करता है। इस चूर्ण को जंगली तथा आनूपदेश के पशु-पक्षियों के मांस एवं अनेक प्रकार के भोज्य पदार्थों के साथ खाने से मन्दाग्नि के रोगियों की उदराग्नि प्रबल हो जाती है। यह चूर्ण—अर्शरोग, ग्रहणीदोष, सूखारोग, कुष्ठ, भगन्दर, हृदयरोग, आम दोष, अनेक प्रकार के उदरस्थ रोगों को एवं प्लीहावृद्धि, वातगुल्म, श्वास, कास, उरःक्षय तथा शूल को नाश करता है, जैसे संतुष्ट राजा गरीबों के आपत्तियों को नष्ट कर देता है ॥ २३०–२३७ ॥

परिणामशूले सामुद्राद्यं चूर्णम्—

सामुद्रं सैन्धवं क्षारौ रुचकं रामठं बिडम् ।
दन्ती लोहरजः किट्टं त्रिवृत्सूरणकं समम् ॥ २३८ ॥
दधिगोमूत्रतोयैश्च मन्दपावकपाचितम् ।
तं यथाग्निबलं चूर्णं किंचिदुष्णेन वारिणा ॥ २३९ ॥
जीर्णे जीर्णे तु भुञ्जीत मांसादिस्निग्धभोजनम् ।
नाभिशूलमुरःशूलं गुल्मप्लीहभवं च यत् ।
परिणामसमुत्थस्य शूलस्य च हितं परम् ॥ २४० ॥

परिणाम शूल में सामुद्राद्य चूर्ण—सामुद्रनमक, सेन्धानमक, सज्जीखार, यवक्षार, सौवर्चलनमक, हिंगु, विडलमक, दन्तीमूल, लौहभस्म, मण्डूरभस्म, निशोथ, सूरन (जिमीकन्द)—समभाग—इन द्रव्यों को चूर्ण बनावे और दधि, गोमूत्र तथा जल के साथ मन्द आँच से पकावे। शुष्क हो जाने पर पुनः चूर्ण बना दे। इस चूर्ण को कुछ उष्ण जल से अग्नि तथा बल के अनुसार पान करे। औषधि के परिपाक हो जाने पर मांस आदिक स्निग्ध भोजन करे। यह चूर्ण नाभिशूल, उरःशूल, गुल्म तथा प्लीहा का शूल, परिणामजन्य शूल के लिये अत्यन्त हितकर है ॥ २३८–२४० ॥

तुम्बर्वाद्यं चूर्णम्—

चूर्णं तदेतदिति तुम्बरुपुष्कराह्व-
पथ्याम्लवेतसबिडं रुचकं सहिङ्गु ।

सिन्धूद्भवेन सहितं यववारिपीतं
शूलापतन्त्रकविकारहरं यदुक्तम् ॥ २४१ ॥

तुम्बर्वाद्य चूर्ण—तुम्बरु, पुष्करमूल, हर्रे, अम्लवेत, विडनमक, सौवर्चल नमक, हिंगु, सेन्धानमक—समभाग—इन द्रव्यों का चूर्ण यव के जल के साथ पान करने पर शूल तथा अपतन्त्रक के विकारों को दूर करता है ॥ २४१ ॥

शूले हिङ्ग्वष्टकं चूर्णम्—

व्योषाजमोदयुतजीरकयुग्मसिन्धु-
चूर्णं सरामठविभागमिति प्रयुक्तम् ।
हिङ्ग्वष्टकं हरति हृज्जठरान्तराल-
शूलानि गुल्मगुदजग्रहणीविकारान् ॥ २४२ ॥

शूल रोग में हिंग्वष्टक चूर्ण—व्योष (सोंठ, पीपर, मरिच), अजमोदा, सफेदजीरा, स्याहजीरा, सेन्धानमक, हिंगु—इन द्रव्यों को समभाग—लेकर चूर्ण बनावे। यह हिंग्वष्टक चूर्ण हृदय, जाठराग्नि के अन्दर का शूल, गुल्म, अर्शरोग तथा ग्रहणी रोग को दूर करता है ॥ २४२ ॥

अरोचके द्वितीय हिङ्ग्वष्टकं चूर्णम्—

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः ।
प्रथमकवलभुक्तं सर्पिषा चूर्णमेत-
ज्जनयति जठराग्निं वातगुल्मं निहन्ति ॥ २४३ ॥

अरोचक रोग मे द्वितीय हिंग्वष्टक चूर्ण—त्रिकटु (सोंठ, पीपर, मरिच), अजमोदा, सेन्धानमक, सफेदजीरा, स्याह जीरा ये सातों सम (बराबर २ में धरण—तुला से तौल) चूर्ण बनावे और आठवे भाग की पूर्ति करने वाले हिंगु को घृत में भूनकर महीन बनाकर अच्छी तरह मिला दे। इस चूर्ण को भोजन करते समय सर्वप्रथम (एक मासे से तीन मासे तक) घृत के साथ मिलाकर प्रथम ग्रास अन्न के साथ भक्षण करे। यह चूर्ण उदराग्नि को बढ़ाता है और वात रोगों को नाश करता है ॥ २४३ ॥

मन्दाग्नौ रामठाद्यं चूर्णम्—

रामठं रुचकं वह्निर्वचाजीरकनागरम् ।
विडङ्गश्चित्रकः कुष्ठं कणामरिचवेतसम् ॥ २४४ ॥
दीप्यकश्चेति सर्वाणि समभागानि कारयेत् ।
चूर्णमुष्णाम्बुना पीतं वह्निवृद्धिकरं परम् ॥ २४५ ॥

मन्दाग्नि से रामठाद्य चूर्ण—हिंगु, सौवर्चलनमक, वह्नि (शु० भल्लातक), वच, स्याहजीरा, सोंठ, विडंग, चित्रक, कूठ, पीपर, मरिच, अम्लवेत, अज-

वायन—इन सभी द्रव्यों को समभाग लेकर सूक्ष्म चूर्ण बनावे। यह चूर्ण गरम जल से पान करने पर अच्छी तरह उदराग्नि को प्रदीप्त करता है ॥ २४४–२४५ ॥

सर्वाङ्गशूले चित्रकाद्यं चूर्णम्—

चित्रकः पिप्पलीमूलं पिप्पली गजपिप्पली।
हिङ्गु पुष्करमूलं च दाडिमं कृष्णजीरकम् ॥ २४६ ॥
विडङ्गहपुषाधान्यशताह्वाहिङ्गुपत्रिकाः।
चव्याम्लवेतसाजाजीबस्तगन्धाशटीवचाः ॥ २४७ ॥
तुम्बुरुश्चाजमोदा च यवानी रुचकं तथा।
समभागानि सर्वाणि सर्वस्तुल्यं तु नागरम् ॥ २४८ ॥
सूक्ष्मचूर्णं ततः कृत्वा मातुलुङ्गेन भावयेत्।
ततः कर्षमितां मात्रां पिबेदुष्णेन वारिणा ॥ २४९ ॥
मद्येन मस्तुना वापि यूषेणापि रसेन वा।
जयेत्सर्वाङ्गजं शूलं कोष्ठगं कुक्षिगं तथा ॥ २५० ॥
अर्शोजठरगुल्मघ्नं दीपनीयं विशेषतः।
चित्रकाद्यमिदं चूर्णमामवातहरं परम् ॥ २५१ ॥

सर्वाङ्ग शूल में चित्रकाद्य चूर्ण—चित्रक, पिपरामूल, पीपर, गजपीपर, हिंगु, पुष्करमूल, अनार, मंगरैल, विडंग, हाऊबेर, धनिया, सौंफ, हिंगुपत्री, चव्य, अम्लवेत, स्याहजीरा, बस्तगन्धा ( अजवायन ), शटी ( कपूरकचरी ), वच, तुम्बुरु, अजमोदा, खुरासानी अजवायन, सौवर्चलनमक—समभाग और सभी द्रव्यों के बराबर सोंठ लेकर इन सभी द्रव्यों को सूक्ष्म चूर्ण बनावे और बिजौरा नीबू के रस से भावित कर शुष्क हो जाने पर चूर्ण बना ले। इस चूर्ण को एक कर्ष की मात्रा में गरम जल, मद्य, मस्तु ( दही का तोड़ ), यूष या रस के साथ पान करे। यह चित्रकाद्य चूर्ण सर्वाङ्ग शूल, कोष्ठकगत शूल तथा उदरगत शूल को जीत लेता है। अर्शरोग, उदररोग तथा गुल्म को नाश करने वाला है। विशेष कर दीपक है एवं आमवात को अच्छी तरह दूर करने वाला है ॥ २४६–२५१ ॥

मन्दाग्नौ सैन्धवाद्यं चूर्णम्—

सिन्धुसौवर्चलव्योषपथ्याजीरकचित्रकैः।
विडङ्गयावशूकाह्वपाक्यग्रन्थिकरोमकैः ॥ २५२ ॥
त्रिवृच्चव्ययुतैश्चूर्णं तक्रेणाम्लाम्बुना पिबेत्।
कल्पितं वह्निदीप्त्यर्थं प्रातरुत्थाय मानवः ॥ २५३ ॥

मन्दाग्नि में सैन्धवाद्य चूर्ण—सिन्धु ( सेन्धानमक ), सौवर्चलनमक,

व्योष ( सोंठ, पीपर, मरिच ), हर्रे, जीरा, चित्रक, विडंग, यावशूक ( यवक्षार), पाक्य (विडनमक), ग्रन्थिक ( पिपरामूल ), रोमक (साँभरनमक), निशोथ, चव्य—समभाग—इन द्रव्यों को चूर्ण बनावे। मनुष्य इस चूर्ण को प्रातःकाल उठकर तक्र या अम्ल जल से पान करे। यह अग्नि को प्रदीप्त करने के लिये बनाया गया है ॥ २५२–२५३ ॥

वातव्याधौ सामुद्राद्यं चूर्णम्—

सामुद्रसौवर्चलसैन्धवानां क्षारो यवानामजमोदभागः।
हरीतकीपिप्पलिशृङ्गवेरं हिङ्गुर्विडङ्गं च समानि कुर्यात् ॥ २५४ ॥
एतानि चूर्णानि घृतप्लुतानि भुञ्जीत पिण्डान् प्रथमं तु पञ्च।
अजीर्णवातं ग्रहगुल्मवातं वानप्रमेहं विषमं च वातम्।
सकामले पाण्डुविसूचिके च श्वासं च कासं च हरेत्प्रयुक्तम् ॥२५५॥

वात व्याधि में सामुद्राद्य चूर्ण—सामुद्रनमक, सौवर्चलनमक, सेन्धानमक, यवक्षार, अजमोदा, हर्रे; पीपर, सोंठ, हिंगु, विडंग—समभाग लेकर चूर्ण बनावे। इस चूर्ण को घृत में मिलाकर भोजन के साथ, पहले पांच ग्रास ( कौर ) भोजन करे। यह चूर्ण इस प्रकार प्रयोग करने से अजीर्णवात, ग्रह, गुल्मवात, प्रमेहवात, विषमवात, कामला, पाण्डुरोग, विसूचिका, श्वास तथा कास को दूर करता है ॥ २५४–२५५ ॥

नारसिंहं चूर्णम्—

प्रस्थं शतावरीचूर्णं प्रस्थं गोक्षुरकस्य च।
वाराह्या विंशतिपलं गुडूच्याः पञ्चविंशतिम् ॥ २५६ ॥
प्रस्थद्वयं तु भल्लातांश्चित्रकस्य दशैव तु।
तिलानां लुञ्चितानां च प्रस्थं दद्यात्सुचूर्णितम् ॥ २५७ ॥
त्र्यूषणस्य पलान्यष्टौ शर्करायाश्च सप्ततिः।
माक्षिकं शर्करार्धेन तदर्धेन च वै घृतम् ॥ २५८ ॥
शतावरीसमं देयं विदारीकन्दचूर्णकम्।
एतानि सूक्ष्मचूर्णानि स्निग्धे भाण्डे निधापयेत् ॥ २५९ ॥
पलार्धमुपयुञ्जीत यथेष्टं चात्र भोजनम्।
एष मासोपयोगेन जरां हन्ति रुजामपि ॥ २६० ॥
वलीपलितखालित्यप्लीहव्याधींश्च पीनसान्।
भगन्दरं मूत्रकृच्छ्रमश्मरीं च भिनत्त्यपि ॥ २६१ ॥
अष्टादशैव कुष्ठानि तथाऽष्टावुदराणि च।
प्रमेहं च महाव्याधिं पञ्चकासान् सुदुस्तरान् ॥ २६२ ॥
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान्।

विंशति श्लैष्मिकांश्चैव संसृष्टान् सान्निपातिकान् ।
एताः सर्वा रुजो हन्ति वृक्षमिन्द्राशनिर्यथा ॥ २६३ ॥
सकाञ्चनाभो मृगराजविक्रमस्तुरङ्गवेगी जलदौघनिःस्वनः ।
स्त्रीणां शतं गच्छति सोऽतिरम्यः सुरूपवान् सत्त्ववतां वरिष्ठः ॥२६४॥
पुत्रान् संजनयेद्धीमान्नरसिंहनिभांस्तथा ।
नारसिंहेति विख्यातश्चूर्णो रोगगणापहः ॥ २६५ ॥

नारसिंह चूर्ण—शतावरी, गोखरू १-१ प्रस्थ, वाराहीकन्द वीस पल, गुडूची चूर्ण वीस पल, शु० भल्लातक चूर्ण दो प्रस्थ, चित्रक की छाल का चूर्ण दशप्रस्थ, शु० तिल का चूर्ण एक प्रस्थ, त्र्यूषण ( सोंठ, पीपर, मरिच ) चूर्ण आठपल, शर्करा सत्तरपल, मधु पैंतिस पल, घृत साढ़े सत्रह पल, विदारीकन्द चूर्ण, शतावरी चूर्ण के बराबर ( एक प्रस्थ )—इन सभी सूक्ष्म चूर्णों को मिलाकर घृतस्निग्ध भाण्ड मे भरकर रख दे । इस चूर्ण को आधा पल की ( दो कर्ष ) मात्रा में सेवन करे और अपनी इच्छा के अनुसार भोजन करे । यह चूर्ण एक मास तक प्रयोग करने से रोगसहित वृद्धावस्था को नाश करता है अर्थात् जराजन्य उपद्रवों को दूर करता है, वलि ( मुख में झुर्री पड़ना ), पलित ( असमय में बाल का पकना ), खालित्य ( बाल का गिरना ), प्लीहावृद्धि, पीनस ( पुराना दुर्गन्ध युक्त नासास्राव ), भगन्दर तथा मूत्रकृच्छ्र को नाश करता है और पथरी को भेदन भी करता है । अट्ठारह प्रकार के कुष्ठरोग, आठ प्रकार के उदररोग, प्रमेह, महाव्याधि ( राजयक्ष्मा ), पांच प्रकार के दुस्साध्य कास, अस्सी प्रकार के वात रोग, चालिस प्रकार के पित्तरोग, वीस प्रकार के श्लैष्मिक रोग, द्विदोष जन्य रोग तथा सान्निपातिक रोग—इन सभी रोगों को नाश करता है, जैसे इन्द्र का वज्र वृक्ष को नाश करता है । इस चूर्ण को सेवन करने से स्वर्ण के समान कान्ति, सिंह के समान पराक्रम, घोड़े के समान वेग, मेघ के समान स्वर, अत्यन्त सुन्दर स्वरूपवान, पराक्रमियों में श्रेष्ठ होता है और सैकड़ों स्त्रियों के साथ संभोग करने मे समर्थ होता है । एवं नरसिंह के समान पराक्रमी तथा बुद्धिमान् पुत्र को पैदा करता है । यह नारसिंह नामक प्रसिद्ध चूर्ण रोग-समूह को नाश करने वाला है ॥ २५६–२६५ ॥

अतिसारे गङ्गाधरं चूर्णम्—

अरलुकघनशुण्ठीधातकीबिल्वरोध्र
कुटजफलसमेतं मोचनिर्याससयुक्तम् ।
अतिविषजलपाठाः साहकारं च बीजं
मसृणमधुविमिश्रं तण्डुलाम्बुप्रपीतम् ॥ २६६ ॥

कफोद्भवं मारुतपित्तसंभवं जयेदतीसारमयं तथाऽऽमजम् ।
प्रवृद्धगङ्गाधरनाम चूर्णकं तथा हि दोषं ग्रहणीभवं च ॥ २६७ ॥

अतिसार में गंगाधर चूर्ण—अरलु ( स्योनाक ), मोचा, सोंठ, धाय का फूल, बेलका गूदा, लोध्र, इन्द्रयव, सेमर का गोंद, धमासा, नागरमोथा, ( सुगन्धवाला ), पाढ़ी, आम की गुठली—इन द्रव्यों को सूक्ष्म चूर्ण बनावे। इस सूक्ष्म चूर्ण को मधु में मिलाकर तण्डुल के जल के साथ पान करें। यह प्रवृद्ध गंगाधर नामक चूर्ण कफजन्य, वात-पित्तजन्य तथा आमदोषजन्य अतिसार को जीत लेता है। और ग्रहणीजन्य दोष को भी नाश करता है ॥ २६६-२६७ ॥

गुल्मे कटुत्रिकाद्यं चूर्णम्—

कटुत्रिकं तिक्तकरोहिणी घन किराततिक्तोऽथ शक्रतोयकाः ।
ससप्तपर्णातिविषादुरालभा पटोलमूलं सह त्रायमाणया ॥ २६८ ॥
विडङ्गचव्यं सगुडूचि निम्बकं प्रियङ्गुनीलोत्पलरोध्रमञ्जनम् ।
सधातकीमोचरसं फलत्रिकं तथा नवं बिल्वकपित्थसारिवम् ।
समाः स्युरेते द्विगुणं तु चित्रकं द्विरष्टभागं कुटजात्त्वचं ततः ॥२६९॥
सुसूक्ष्मपिष्टं शिशिराम्बुयोजितं पिबन्मनुष्योऽर्धपलं गुडान्वितम् ॥
बुभुक्षिते स्यान्मृदु भोजनं हिमं निहन्ति गुल्मान्कफपित्तसंभवान् ॥
ज्वरातिसारग्रहणीगदारुचीः प्रमेहमूत्रक्षयवर्ध्मविद्रधीन् ॥ २७० ॥
अजीर्णपाण्डुक्षतकासशोफान् सदा प्रयुक्तः सगुडः कटुत्रिकः ।

गुल्मरोग में कटुत्रिकाद्य चूर्ण—कटुत्रिक ( सोंठ, पीपर, मरिच ), कुटकी, मोथा, किराततिक्तक ( चिरायता ), इन्द्रयव, छतिवन, अतीस, धमासा, परोरा की जड़, त्रायमाणा, विडंग, चव्य, गुडूची, नीम, प्रियंगु, नीलकमल, लोध्र, अंजन ( स्रोतोञ्जन ), धाय का फूल, सेमर का गोंद, फलत्रिक ( हर्रे, बहेड़ा, आंवला ), नव ( रक्त पुनर्नवा ), बेल का गूदा, कैंथ का गूदा, सारिवा-मूल—समभाग, चित्रक दो भाग, कोरैया की छाल सोलह भाग—इन सभी औषधों को एकत्र कर सूक्ष्म चूर्ण बनावे। मनुष्य इस चूर्ण को आधा पल की मात्रा मे बराबर गुड़ मिलाकर ठंढा जल से पान ( सेवन ) करने पर, कफ-पित्तजन्य गुल्म रोग को नाश करता है। भूख लगने पर हल्का तथा ठंढा भोजन करे। यह कटुत्रिकाद्य चूर्ण गुड़ के साथ हमेशा प्रयोग करने से ज्वर, अतिसार, ग्रहणीरोग, अरुचि, प्रमेह, मूत्राघात, वर्ध्म, विद्रधि, अजीर्ण, पाण्डु-रोग, उरःक्षत, कास तथा शोथ को नाश करता है ॥

स्थौल्ये व्योषाद्यं चूर्णम्—

व्योषकट्वीवराशिग्रुविडङ्गातिविषास्थिराः ।
हिङ्गुसौवर्चलाजाजीयवानीधान्यचित्रकाः ॥ २७१ ॥

बृहत्यौ हपुषा पाठा निशे मूलं च केवुकात् ।
एषां चूर्णं समध्वाज्य तैलं चापि दशांशकम् ॥ २७२ ॥
कलाभागैस्तु सक्तूनां युक्तं पीतं निहन्ति तत् ।
नृणां स्थौल्यादिकान्दोषान् कफमेदोभवांस्तथा ॥ २७३ ॥
हृद्रोगकामलाश्वित्रश्वासकासगलग्रहान् ।
करोति बुद्धिं मेधां च सन्नस्याग्नेश्च दीपनम् ॥ २७४ ॥
अतिस्थौल्यादिकान् दोषान् रोगानन्यांश्च तद्विधान् ।

स्थूलता में व्योषाद्य चूर्ण—व्योष ( सोंठ, पीपर, मरिच ), कुटकी, वरा ( त्रिफला ), सहिजन, विडंग, अतीस, शालपर्णी, हिंगु, सौवर्चल नमक, स्याहजीरा, अजवायन, धनिया, चित्रक, वनभंटा, रेंगनी, हाऊवेर, पाढ़ी, आमाहल्दी, दारुहल्दी, केसुआ की जड़—इन द्रव्यों को समभाग लेकर चूर्ण बनावे। इस चूर्ण को मधु एक भाग, घृत आधा भाग, तैल दश भाग, सक्तु सोलह भाग मिला कर पान करे। यह चूर्ण मनुष्यों के स्थूलता आदि दोषों को, कफमेदोजन्य दोषों को तथा हृद्रोग, कामला, सफेद कोढ, श्वास, कास तथा गलग्रह को नाश करता है। बुद्धि (स्मरण शक्ति), एवं मेधा ( धारणा शक्ति ) को बढाता है, मन्दाग्नि को प्रदीप्त करता है। अत्यन्त स्थूलता आदि दोष तथा उसी प्रकार के अन्य रोगों को भी नाश करता है ॥

वातकासे विडङ्गाद्य चूर्णम्—

विडङ्गं नागरं रास्ना पिप्पली हिङ्गु सैन्धवम् ।
भार्गी क्षारश्च तच्चूर्णं पिबेद्धि घृतमात्रया ॥ २७५ ॥
सकलेऽनिलजे कासे श्वासे हिध्मानिलार्तिषु ।

वातजन्य कास में विडंगाद्य चूर्ण—विडग, सोंठ, रासन, पीपर, हिगु, सेन्धानमक, भांगरा, यवक्षार—समभाग—इन द्रव्यों का चूर्ण घृत में ( छः मासा की मात्रा ) मिलाकर, सभी प्रकार के वातविकार, कास, श्वास, हिध्मा, एवं वातजन्य उपद्रवों में पान करे। अर्थात् उपर्युक्त रोगों को नाश करता है ॥

गुल्मे वचाद्यं चूर्णम्—

वचा वत्सकबीजं च कुष्ठं चित्रकमेव च ॥ २७६ ॥
पिप्पली शृङ्गवेरं च पाठा कटुकरोहिणी ।
यवानी च पटोलं च सैन्धवातिविषे तथा ॥ २७७ ॥
हपुषा चाजगन्धा च शटी पौष्करमेव च ।
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥ २७८ ॥

तत्र कर्षसमां मात्रां पिबेदुष्णेन वारिणा ।
गुल्मान् पञ्च च हृद्रोगान् कुक्षिशूलं च नाशयेत् ॥ २७९ ॥

गुल्म रोग में वचाद्य चूर्ण—वच, इन्द्रयव, कूठ, चित्रक, पीपर, सोंठ, पाढ़ी, कुटकी, अजवायन, परोरा का पत्ता, सेन्धानमक, अतीस, हाऊबेर, अजमोदा, कपूरकचरी, पुष्करमूल—समभाग—इन द्रव्यों को सूक्ष्म चूर्ण बनावे । इस चूर्ण को एक कर्ष की मात्रा में गरम जल से पान करे । यह चूर्ण पाँच प्रकार के गुल्म, हृदयरोग तथा पेट के रोगों को नाश करता है ॥ २७६–२७९ ॥

पाण्डुरोगे किराततिक्तकाद्यं चूर्णम्—

किराततिक्तं सुरदारु दार्वी मुस्ता गुडूची कटुका पटोलम् ।
दुरालभा पर्पटकं सनिम्ब फलत्रिकं वह्निकटुत्रिकं च ॥ २८० ॥
विडङ्गसारं च समांशकानि ह्ययोरजोऽर्धेन विचूर्णितानि ।
ईषद्घृताक्तं मधुनाऽवलीढमर्शांसि शोष ग्रहणीप्रदोषम् ।
कुष्ठानि कृच्छ्राणि हलीमक च ज्वरांश्च घोरानथ पाण्डुरोगान् ॥
आमोद्भवान् वातसमुत्थितांश्च पित्तोद्भवाञ्छ्लेष्मसमुद्भवांश्च ।
दुष्टव्रणान्वै कफविद्रधींश्च श्वित्राणि हन्याच्छतशः प्रयोगः ॥ २८२ ॥

पाण्डुरोग में किराततिक्तकाद्य चूर्ण—किराततिक्त ( चिरायता ), देवदारु, दारुहल्दी, मोथा, गुडूची, कुटकी, परोरा का पत्ता, धमासा, पित्तपापड़ा, नीम, त्रिफला ( हर्रे, बहेडा, आँवला ), चित्रक, कटुत्रिक ( सोंठ, पीपर, मरिच ), विडंग, विजयसार—समभाग—इन द्रव्यों को चूर्ण बनावे और चूर्ण के आधा भाग लौहभस्म मिला दे । यह चूर्ण थोड़ा घृत तथा मधु के साथ मिलाकर चाटने से अर्श रोग, सूखा रोग, ग्रहणी दोष, कष्टसाध्य कुष्ठ रोग, हलीमक, ( पाण्डु रोग के बाद शरीर का नील वर्ण हो जाना ), ज्वर, भयंकर आमजन्य, वातजन्य, पित्तजन्य तथा कफजन्य पाण्डु रोग को नाश करता है । सैकड़ों बार प्रयोग करने से, दुष्टव्रण ( बिगडा हुआ घाव ), कफ विद्रधि तथा श्वित्र ( सफेद कोढ़ ) को भी नाश करता है ॥ २८०–२८२ ॥

कुष्ठादौ खण्डसमं चूर्णम्—

त्रिफलाव्योषबिल्वाब्दपिप्पलीमूलचित्रकैः ।
चविकात्वचपत्रैलातिन्तिडीकाम्लवेतसैः ॥ २८३ ॥
समांश धातुसाक्षीकं सर्वैस्तुल्या सिता भवेत् ।
भक्षयित्वा यथासात्म्यमनुपानं प्रयोजयेत् ॥ २८४ ॥
चूर्णितं मधुना लेह्य वटकान् वा समाक्षिकान् ।
नाशयेत्कुष्ठमालस्यं प्रमेहोदरकामलाः ॥ २८५ ॥

कर दे। शरीर के अग्नि और बल को देखकर मात्रापूर्वक तक्र के साथ प्रयोग करे और तक्र के ही साथ हितकर भोजन करे। यह ग्रहणी रोग, भयंकर अतिसार तथा प्रवाहिका को शीघ्र ही नाश करता है। जैसे इन्द्र का वज्र वृक्ष को नष्ट कर देता है ॥ २३३–२४१ ॥

अतीसारे कुटजावलेहः—

शतं कुटजमूलस्य क्षुण्णं तोयार्मणे पचेत्।
क्वाथे पादावशेषेऽस्मिन्पूते लेहं पुनः पचेत् ॥ २४२ ॥
सौवर्चलयवक्षारविडसैन्धवपिप्पली- ।
धातकीन्द्रयवाजाजीचूर्णं दत्त्वा पलद्वयम् ॥ २४३ ॥
लिह्याद्बदरमात्रं तु शीतं क्षौद्रेण संयुतम्।
पक्वापक्वमतीसारं नानावर्णं सवेदनम् ॥ २४४ ॥
दुर्वारं ग्रहणीदोषं जयेच्चैव प्रवाहिकाम्।

अतिसार में कुटजावलेह—कुटज का मूल एक सौ पल कूटकर एक द्रोण जल में पकावे। चतुर्थांशावशिष्ट छने हुए क्वाथ को पुनः लेहवत् पकावे। और उसमें सौवर्चल नमक, यवक्षार, विडनमक, सैन्धवनमक, पिप्पली, धाय का फूल, इन्द्रयव तथा स्याहजीरा—दो-दो पल मिलाकर शीत हो जाने पर मधु मिलाकर और एक बेर के बराबर चाटे। यह अवलेह आम तथा पक्व अतिसार, वेदनायुक्त, अनेक वर्णवाले, दुर्निवार ग्रहणीदोष तथा प्रवाहिका को जीत लेता है ॥

अर्शःसु कुटजावलेहः—

कुटजत्वक्तुलां द्रोणे पचेदष्टांशशेषितम् ॥ २४५ ॥
कल्कीकृत्य क्षिपेत्तत्र तार्क्ष्यशैलं कटुत्रिकम्।
रोध्रद्वयं मोचरसं बालदाडिमजां त्वचम् ॥ २४६ ॥
बिल्वं कर्कटिकां मुस्तं समङ्गां धातकीपलम्।
पलानि दश दद्याच्च कुटजस्यैव च त्वचः ॥ २४७ ॥
विंशतिं सर्पिषः पूते पलानि विंशतिं गुडात्।
तत्पक्वं लेहतां यातं धान्ये पक्षस्थितं लिहन् ॥ २४८ ॥
सवातं ग्रहणीदोषं कासश्वासं निबर्हति।

अर्शरोगों में कुटजावलेह—कुटज की छाल एक तुला एक द्रोण जल में पकावे। अष्टमांशावशिष्ट क्वाथ में, तार्क्ष्यशैल, कटुत्रिक ( सोंठ, पीपर, मरिच ), रोध्रद्वय ( लोध, पठानी लोध ), सेमर का गोंद, कच्चे अनार की छाल, बिल्व, काकड़ासिंघी। मोथा, मंजीठ तथा धाय का फूल—एक २ पल, कुटज की छाल दशपल, घृत बीस पल, गुड बीस पल, मिला दे। पककर लेह तैयार हो

जाने पर एक पक्ष तक धान्य में रक्खे। इसको खाने से वातिक ग्रहणीदोष, कास तथा श्वास दूर होता है ॥ २४५-२४८ ॥

जरायां च्यवनप्राशावलेहः—

बिल्वाग्निमन्थकट्वङ्गकाश्मर्यः पाटला बला ॥ २४९ ॥
कणा पर्ण्यश्चतस्रश्च श्वदंष्ट्रा बृहतीद्वयम्।
शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्करागुरु ॥ २५० ॥
अभया चामृता मुस्ता जीवकर्षभकौ शटी।
ऋद्धिः पुनर्नवा मेदा सैव्यं चन्दनमुत्पलम् ॥ २५१ ॥
विदारी वृषमूलानि काकोली काकनासिका।
एषां पलोन्मितान् भागान् शतान्यामलकस्य च ॥ २५२ ॥
पञ्च दद्यात्तदैकध्यं जलद्रोणे विपाचयेत्।
ज्ञात्वा गतरसान्येतान्योषधान्यथ तं रसम् ॥ २५३ ॥
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः।
पलद्वादशके भृष्ट्वा दद्याच्चार्धतुलां भिषक ॥ २५४ ॥
शुद्धमत्स्यण्डिकायास्तु लेहवत्साधु साधयेत्।
षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत् ॥ २५५ ॥
चतुष्पलं तुगाक्षीर्याः पिप्पल्या द्विपलं तथा।
पलमेकं निदध्याच्च त्वगेलापत्रकेसरात् ॥ २५६ ॥
इत्ययं च्यवनप्राशः परमुक्तो रसायनः।
कासश्वासहरश्चैव विशेषेणोपदिश्यते ॥ २५७ ॥
वृद्धानां शोषिणां चैव बालानां चाङ्गवर्धनः।
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम् ॥ २५८ ॥
पिपासां मूत्रशुक्रस्थान्दोषांश्चाप्यपकर्षति।
अस्य मात्रां प्रयुञ्जीत योपरुन्ध्यान्न भोजनम् ॥ २५९ ॥
च्यवनोऽस्य प्रयोगेण सुवृद्धोऽभूत्पुनर्युवा।
मेधां स्मृतिं कान्तिमनामयत्वमायुःप्रकर्षं बलमिन्द्रियाणाम्।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं वर्णप्रसादं पवनानुलोम्यम् ॥ २६० ॥
रसायनस्यास्य नरः प्रयोगाल्लभेत जीर्णोऽपि कुटीप्रवेशात्।
जराकृतं रूपमपास्य सर्वं बिभर्ति रूपं नवयौवनस्य ॥ २६१ ॥

जरावस्था में च्यवनप्राशावलेह—बिल्व, अग्निमन्थ, स्योनाक, गम्भारी, पाटला, बला, पिप्पली, शालपर्णी, पृश्निपर्णी, माषपर्णी, मुद्गपर्णी, गोखरू, बड़ी कटेरी, छोटी कटेरी, काकड़ासिंगी, तामलकी (भुइ आंवला), द्राक्षा, जीवन्ती, पुष्करमूल, अगरु, हर्रे, गुडूची, नागरमोथा,

जीवक, ऋषभक, शटी ( कपूरकचरी ), ऋद्धि, पुनर्नवा, मेदा, सेव्य ( खस ), रक्तचन्दन, नीलकमल का फूल, विदारीकन्द, अडूसे की जड, काकोली, काकनासिका, ये द्रव्य एक २ पल तथा आंवला पाँच सौ लेकर एकत्र कर एक द्रोण जल मे क्वाथ करे। परिपक्व इन औषधियों को जानकर उस क्वाथ को तथा आँवला को निकालकर छानकर बारह पल तैल तथा घृत में भूनकर आधा तुला शुद्ध ( मत्स्यण्डिका ) शर्करा मिलाकर अच्छी तरह लेहवत् सिद्ध कर ले। सिद्ध शीत होने पर छः पल शहद, वंशलोचन चार पल, पिप्पली दो पल, दालचीनी, इलायची, तेजपत्र, नागकेशर—एक पल—इन द्रव्यों के चूर्ण को प्रक्षेप कर दे। परम रसायन यह च्यवनप्राश कहा गया है। विशेषकर श्वास-कास को दूर करनेवाला है। वृद्ध, शोषरोगी तथा बालकों के अंग को बढ़ानेवाला है। स्वरक्षय, उरोरोग, हृद्रोग, वातरक्त, पिपासा तथा मूत्र-शुक्रस्थ दोषों को दूर करता है। इस अवलेह को उतनी ही मात्रा मे खानी चाहिए जितने से भोजन मे अरुचि न पैदा करे। च्यवन महर्षि इसके प्रयोग से वृद्ध भी युवा हो गये। इस रसायन के प्रयोग से मनुष्य मेधा, स्मृति, कान्ति, निरोगत्व, आयुवृद्धि, इन्द्रियों को बल, स्त्रीप्रसंगशक्ति, अतिशय अग्निवृद्धि, वर्णप्रसाद तथा वातानुलोमन को प्राप्त करता है। वृद्ध भी कुटीप्रवेश से जराकृत रूप को छोड़कर सभी नवयौवन का रूप प्राप्त करता है ॥ २४९–२६१ ॥

जरायां ब्राह्मरसायनावलेहः—

पञ्चानां पञ्चमूलानां भागान्दशपलोन्मितान् ।
हरीतकीसहस्रं च त्रिगुणामलकं नवम् ॥ २६२ ॥
विदारिगन्धां बृहतीं पृष्ठिपर्णीं निदिग्धिकाम् ।
विद्याद्विदारिगन्धाद्यं श्वदंष्ट्रापञ्चमं गणम् ॥ २६३ ॥
बिल्वाग्निमन्थकट्वङ्गकाश्मर्यः पाटला तथा ।
पुनर्नवा सूर्पपर्ण्यौ बला चैरण्ड एव च ॥ २६४ ॥
जीवकर्षभकौ वोरा जीवन्ती सशतावरी ।
शरेक्षुदर्भकासानां शालीनां मूलमेव च ॥ २६५ ॥
एतेषां पञ्चमूलानां पञ्चानामुपकल्पयेत् ।
भागान्यथोक्तांस्तत्सर्वं साध्यं दशगुणेऽम्भसि ॥ २६६ ॥
दशभागावशेषं तु पूतं तद्ग्राहयेद्द्रवम् ।
हरीतक्यश्च ताः सर्वाः सर्वाण्यामलकानि च ॥ २६७ ॥
तानि सर्वाण्यनस्थीनि फलान्यापोथ्य कूर्चकैः ।
विनीय तस्मिन्निर्यूहे चूर्णानीमानि दापयेत् ॥ २६८ ॥
मण्डूकपर्ण्याः पिप्पल्याः शङ्खपुष्प्याः प्लवस्य च ।
मुस्तानां सविडङ्गानां चन्दनागुरुणोस्तथा ॥ २६९ ॥

मधुकस्य हरिद्राया वचायाः कनकस्य च ।
भागान् पञ्चपलान्कृत्वा सूक्ष्मैलायास्त्वचस्तथा ॥ २७० ॥
सितोपलासहस्रं च चूर्णितं तुलयाऽधिकाम् ।
तैलं स्याद् द्व्याढकं तत्र तथा त्रीणि च सर्पिषः ॥ २७१ ॥
साध्यं ताम्रमये पात्रे तत्सर्वं मृदुनाऽग्निना ।
ज्ञात्वा लेहमदग्धं च शीतं क्षौद्रेण संसृजेत् ॥ २७२ ॥
स्नेहार्धं क्षौद्रमानं स्यात् तत्सर्वं घृतभाजने ।
तिष्ठेत्संमूर्च्छितं तस्य मात्रां काले प्रयोजयेत् ॥ २७३ ॥
आहारं नोपरुन्ध्याद्या ह्येवं मात्रा तु सा स्मृता ।
षष्टिकः पयसा चात्र जीर्णे भोजनमिष्यते ॥ २७४ ॥
वैखानसास्तथा चान्ये वालखिल्यास्तपोधनाः ।
रसायनमिदं प्राश्य बभूवुरमितायुषः ॥ २७५ ॥
मुक्त्वा जीर्णं वपुश्चाग्र्यमवापुस्तरुणं वयः ।
वीततन्द्रा-क्लम-श्वासा निरातङ्काः समाहिताः ॥ २७६ ॥
मेधास्मृतिबलोपेताश्चिरकालं तपोधनाः ।
ब्राह्मं तपो ब्रह्मचर्यं चेरुश्चात्यन्तनिष्ठया ॥ २७७ ॥
आयुष्कामः प्रयुञ्जानो ब्राह्मं हीदं रसायनम् ।
दीर्घमायुर्बलं चाग्र्यं कामाञ्छ्रेष्ठान्समश्नुते ॥ २७८ ॥

जरावस्था में ब्राह्मरसायनावलेह—पांचों पञ्चमूल दश २ पल, हरीतकी एक हजार, नवीन आँवला त्रिगुण ( तीन हजार ), विदारीगन्धा, वृहती, पृष्ठिपर्णी, छोटी कटेरी, विदारीगन्धा से लेकर श्वदंष्ट्रा पर्यन्त पंचमगण जाने। विल्व, अग्निगन्ध, स्योनाक, गम्भारी, पाटला, पुनर्नवा, सूर्पपर्णी ( सूर्यवल्ली ), वला, एरण्ड, जीवक, ऋषभक, वीरा, जीवन्ती, शतावरी, शर, इक्षु, दर्भ, कास तथा शालि का मूल, इन पञ्चमूलों को पूर्वोक्त मात्रा में लेकर दशगुने जल में सिद्ध करे। दशमांश शेषभाग को छानकर ले ले। सभी हरीतकी तथा सभी आंवला की गुठली निकाल कर कूर्चिका से मसल कर उसके सीठी में मण्डूकपर्णी ( ब्राह्मीभेद ), पिप्पली, शंखपुष्पी, प्लव ( केवटीमोथा ), मोथा, विडंग, रक्त-चन्दन, अगुरु, मुलेठी, हरिद्रा, वच तथा शु० धतूर वीज पांच २ पल, छोटी इलायची, दालचीनी—पांच पल, सितोपला ( मिश्री ) शर्करा एक हजार एक तुला से अधिक—इन सभी द्रव्यों के चूर्ण को तथा तेल दो आढक घृत तीन आढक को लेकर सभी द्रव्यों को ताम्र के पात्र में मृदु आंच से सिद्ध करे। परिपक्व लेह जानकर शीत होने पर डेढ़ आढक मधु मिलाकर घृत के पात्र में रख दे। संमूर्च्छित होने पर उसकी मात्रा समय पर प्रयोग करे। इसकी मात्रा इतनी

होनी चाहिए कि भोजन को न रोके, पुराना होनेपर दूध के साथ साठी का चावल भोजन करना चाहिए। वैखानस बालखिल्य आदि अन्य तपस्वी इस रसायन को खाकर चिरायु हुए थे और पुराने शरीर को छोड़कर युवावस्था को प्राप्त किये थे। तन्द्रा, क्लम, श्वासरहित होकर एवं रोगरहित होकर, मेधा, स्मृति, बल से युक्त तपस्वीगण बहुत कालतक अत्यन्त निष्ठा से ब्राह्मतप ब्रह्मचर्य का पालन किये, आयु को चाहनेवाला इस ब्राह्म रसायन का प्रयोग करता हुआ दीर्घ आयु, बल, यश तथा उत्तम कामनाओं को प्राप्त करता है ॥ २६२–२७८ ॥

क्षतक्षीणेऽमृतप्राशावलेहः—

जीवकर्षभकौ वीरा जीवन्ती नागर शटी।
मेदे पर्ण्यश्चतस्रश्च काकोल्यौ द्वे निदिग्धिके ॥ २७९ ॥
पुनर्नवे द्वे मधुकमात्मगुप्ता शतावरी।
ऋद्धिः परूषकं भार्गी मृद्वीका बृहती तथा ॥ २८० ॥
शृङ्गाटकस्तामलकी पयस्या पिप्पली बला।
बदराक्षोटखर्जूरवातामाभिषुकाणि च ॥ २८१ ॥
फलानि चैवमन्यानि कल्कान्कुर्वीत कार्षिकान्।
धात्रीरसविदारीक्षुच्छागमांसरसान् पयः ॥ २८२ ॥
दत्त्वा प्रस्थोन्मितान् भागान् घृतप्रस्थं विपाचयेत्।
प्रस्थार्धं मधुनः शीते शर्करार्धतुलां तथा ॥ २८३ ॥
ततो मात्रां प्रयुञ्जीत क्षीरमांसरसाशनः।
नष्टशुक्रक्षतक्षीणदुर्बलान् व्याधिकर्षितान् ॥ २८४ ॥
स्त्रीप्रसक्तान् कृशान्वर्णस्वरहीनांश्च बृंहयेत्।
कासहिक्काज्वरश्वासतृष्णादाहान् सपैत्तिकान् ॥ २८५ ॥
निहन्ति छर्दिमूर्च्छाहृद्योनिमूत्रामयापहम्।

क्षतक्षीण रोग में अमृतप्राशावलेह—जीवक, ऋषभक, वीरा ( भूम्यामलकी ), जीवन्ती, सोंठ, शटी ( कपूरकचरी ), मेदा, महामेदा, शालपर्णी, पृश्निपर्णी, माषपर्णी, मुद्गपर्णी, काकोली, छोटी कटेरी, बड़ी कटेरी, मुलेठी, केवाछ, शतावरी, ऋद्धि, परूषक ( फालसा ), भांगरा, द्राक्षा, बृहती ( वनभंटा ), सिघाड़ा, तामलकी ( क्षुद्र आँवला ), पयस्या ( क्षीरविदारी ), पिप्पली, बला, बदर, अक्षोट ( अखरोट ), खजूर, वाताम ( बादाम ), अभिषुक तथा अन्य फलों के एक २ कर्ष का कल्क, धात्रीरस, विदारी, इक्षु, छाग-मांसरस तथा दूध एक-एक प्रस्थ, सभी द्रव्यों को मिलाकर सिद्ध करे। शीत होने पर आधा प्रस्थ मधु, आधा तुला शर्करा मिला दे। इसके बाद मात्रा-

पूर्वक प्रयोग करे और दूध तथा मांसरस पान करे। यह अवलेह, क्षीणवीर्य, क्षत-क्षीण, दुर्बल, व्याधि से कृश, स्त्री-प्रसंग से दुर्बल तथा स्वर-वर्णहीन व्यक्तियों को बढ़ाता है। पैत्तिक कास, हिक्का, ज्वर, श्वास, तृष्णा तथा दाह को नाश करता है और छर्दि एवं मूर्च्छा, हृद्रोग, योनिरोग तथा मूत्ररोग को दूर करता है ॥ २७९–२८५ ॥

लघुच्यवनप्राशोऽवलेहः—

बिल्वादिपञ्चमूलाब्दबलापर्णीचतुष्टयम् ।
ऋद्धिकृष्णाशटीपथ्याजीवकर्षभकामृताः ॥ २८६ ॥
द्राक्षा पुनर्नवा मेदे जीवन्ती काकनासिका ।
उत्पलैलाजशृङ्ग्यश्च काकोली वृषचन्दनम् ॥ २८७ ॥
विदारीगोक्षुरव्याघ्रीपौष्करं च पलोन्मितम् ।
शतानि पञ्च धात्र्याश्च जलद्रोणे विपाचयेत् ॥ २८८ ॥
पलद्वादशके भृष्ट्वा धात्रीस्तास्तैलसर्पिषोः ।
सितार्धतुलया युक्ताः क्वाथं लौहे पुनः पचेत् ॥ २८९ ॥
द्वे पिप्पल्याः पले वांश्याश्चत्वारः षट् च माक्षिकात् ।
चातुर्जातपलं तस्मिन् सिद्धशीते प्रयोजयेत् ॥ २९० ॥
हृद्रोगश्वासहृत्कासवातरक्तक्षयार्तिजित् ।
सेव्योऽयं च्यवनप्राशः स्वर्यो वृष्यो रसायनः ॥ २९१ ॥

लघु च्यवनप्राशावलेह—बिल्व, गम्भारी, स्योनाक, पाढल, अरणी, मोथा, शालपर्णी, पृश्निपर्णी, माषपर्णी, मुद्गपर्णी, ऋद्धि, पिप्पली, शटी (कपूरकचरी), हर्रे, जीवक, ऋषभक, गुडूची, द्राक्षा, पुनर्नवा, मेदा, महामेदा, जीवन्ती, काकनासिका, नीलकमल, इलायची, मेढासिंगी, काकोली, क्षीरकाकोली, अडूसा, रक्तचन्दन, विदारीकन्द, गोक्षुर, व्याघ्री ( कटेरी ) तथा पुष्करमूल, एक २ पल, आंवला पांच सौ एक द्रोण जल में पकावे और आंवला को निकाल कर क्वाथ को छान ले तथा आंवला की सिट्ठी छानकर छः पल घी तथा छः पल तैल में भूनकर पुनः लौह की कड़ाही में क्वाथ तथा आधा तुला शर्करा डाल कर पाक करे। शीत होने पर पिप्पली दो पल, वंशलोचन चार पल, मधु छः पल, चातुर्जात ( दालचीनी, इलायची, तेजपत्र, नागकेसर ) एक पल—इन द्रव्यों का चूर्ण मिला दे। यह च्यवनप्राशावलेह हृद्रोग, श्वास, हृत्कास, वातरक्त को जीत लेता है। यह स्वर बनानेवाला, वृद्धि करनेवाला च्यवनप्राश रसायन सेवन करना चाहिए ॥ २८६–२९१ ॥

शोपेऽमृतप्राशोऽवलेहः—

छागमांसरसक्षीरविदारीक्षुरसाढकम् ।

धात्रीफलरसश्चैव मृद्वीकानां रसो घृतम् ॥ २९२ ॥
पृथक्प्रस्थोन्मितैरेतैः पचेत्कर्षसमैर्भिषक् ।
वाताममधुकाक्षोटशृङ्गाटककसेरुकाः ॥ २९३ ॥
परूषकं शटी भार्गी जीवन्ती च पुनर्नवा ।
खर्जूरं पिप्पली शृङ्गी ह्यात्मगुप्ता सजीवका ॥ २९४ ॥
सिंही व्याघ्रपदी स्याच्च द्राक्षा तामलकी स्थिरा ।
बदरं कदरं चैव जीवनीयानि यानि च ॥ २९५ ॥
तत्सिद्धं राजते पात्रे निधेयं साधु साधितम् ।
प्रस्थार्धं मधुनः शीते शर्करार्धतुलां तथा ॥ २९६ ॥
त्वगेलापत्रमरिचचूर्णं चार्धपलोन्मितम् ।
विनीय भक्षयेन्मात्रां लिह्यादपि यथाबलम् ॥ २९७ ॥
बलवर्णकरं वृष्यं बृंहणं स्वरबोधनम् ।
कासश्वासारुचि हन्यात्तृण्मूर्च्छासृग्दरं तथा ॥ २९८ ॥
वरं क्षीणक्षतहितं वन्ध्यापुत्रप्रदायि च ।
अमृतप्राशानामेतदमृतं देवतास्विव ॥ २९९ ॥

शोषरोग में अमृतप्राशावलेह—बकरी के मांस का रस, क्षीरविदारी, इक्षुरस—एक आढक, आंवला का रस एक प्रस्थ, घृत एक प्रस्थ—इन द्रव द्रव्यों के साथ, वाताम ( बादाम ), मुलेठी, अखरोट, सिंघाड़ा, कसेरुक, परूषक, शटी ( कपूरकचरी ), भांगरा, जीवन्ती, पुनर्नवा, खजूर, पिप्पली, काकड़ासिंघी, केवाछ बीज, जीवक, सिंही ( वनभंटा ), व्याघ्रपदी, द्राक्षा, भुइं आंवला, स्थिरा ( शालपर्णी ), बदर ( बैर ), कदर ( कृष्णगर्भक ), जीवनीय गण ( जीवक, ऋषभक, मेदा, महामेदा, काकोली, क्षीरकाकोली, माषपर्णी,, मुद्गपर्णी, जीवन्ती, मुलेठी )—एक २ कर्ष—इन द्रव्यों के चूर्ण को सिद्ध करे और चांदी के बर्तन में रक्खे। शीत होने पर आधा प्रस्थ मधु, आधा तुला शर्करा, दालचीनी, छोटी इलायची, तेजपत्र, मरिच का चूर्ण आधा २ पल मिलाकर, बल के अनुसार इसकी मात्रा भक्षण करे। यह बल-वर्ण को करनेवाला, वृष्य, बृंहण, स्वरबोधन है, और कास, श्वास, अरुचि, तृष्णा, मूर्च्छा, रक्तप्रदर को नाश करता है, क्षीणक्षत रोगियों के लिये हितकर है। वन्ध्या को पुत्र देनेवाला है, अमृतप्राशनों में यह अमृत है। जैसे देवताओं के लिये अमृत उत्तम है ॥ २९२–२९९ ॥

शोषे पिप्पल्याद्योऽवलेहः—

कृष्णाचूर्णं क्षिपेत्प्रस्थं सिताप्रस्थद्वयं तथा ।
प्रस्थार्धं गोघृतं चैव कुडवं माक्षिकं तथा ॥ ३०० ॥

दुग्धाढकेन संयुक्तं यथोक्तं विपचेद्भिषक् ।
चातुर्जातपलं चैकं चूर्णमेतद्विनिक्षिपेत् ॥ ३०१ ॥
प्रत्यूषे भक्षयेन्नित्यं ततः कार्यं समाचरेत् ।
हन्त्यष्टादश कुष्ठानि क्षयमेकादशात्मकम् ॥ ३०२ ॥
पञ्चकासाँस्तथा श्वासान् पाण्डुं प्लीहमपस्मृतिम् ।
मूत्रकृच्छ्रं तथा रक्तं शुक्रदोषं तथा जराम् ॥ ३०३ ॥
धातुक्षयं च मन्दाग्नि व्याधिं परमदुस्तरम् ।
सर्वास्तान्नशयत्याशु तमः सूर्योदयो यथा ॥ ३०४ ॥
सुभगो दर्शनीयश्च स गच्छेत्प्रमदाशतम् ।
रसायनमिदं श्रेष्ठमश्विभ्यां परिकीर्तितम् ॥ ३०५ ॥

शोषरोग में पिप्पल्यादि अवलेह—पिप्पलीचूर्ण एक प्रस्थ, शर्करा दो प्रस्थ, गोघृत आधा प्रस्थ, मधु एक कुडव, दूध एक आढक—इन सभी द्रव्यों को वैद्य अच्छी तरह सिद्ध करे और चातुर्जात ( दालचीनी, छोटी इलायची, तेजपत्र, नागकेशर), एक पल—इन द्रव्यों के चूर्ण को छोड दे। प्रातःकाल इसको भक्षण करे उसके बाद कार्य प्रारम्भ करे। यह अवलेह अट्ठारह प्रकार के कुष्ठ रोग, ग्यारह प्रकार के क्षयरोग, पांच प्रकार के कास, श्वास, पाण्डु, प्लीहा, अपस्मृति, मूत्रकृच्छ्र, वातरक्त, शुक्रदोष, जरा, धातुक्षय, मन्दाग्नि तथा परम दुस्तर इन सभों को नाश करता है जैसे सूर्योदय से अन्धकार। अश्विनीकुमार का बनाया यह उत्तम रसायन सेवन करनेवाला सुन्दर दर्शनीय होता है तथा सैकडों स्त्रियों के साथ प्रसंग करने की शक्ति प्राप्त करता है ॥ ३००–३०५ ॥

शोषे द्वितीयः पिप्पल्याद्यवलेहः—

पिप्पलीप्रस्थमादाय क्षीरं चैव चतुर्गुणम् ।
अर्धाढकं घृतं गव्यं शुद्धखण्डात्तथाऽऽढकम् ॥ ३०६ ॥
पचेन्मृद्वग्निना तावद्यावत्पाकमुपागतम् ।
शीतीभूते क्षिपेत्तस्मिंश्चातुर्जातपलत्रयम् ॥ ३०७ ॥
योजयेन्मात्रया दोषधात्वग्निबलसात्म्यतः ।
बल्यो वृष्यस्तथा हृद्यो धातुपुष्टिकरः परः ॥ ३०८ ॥
जीर्णज्वरहरश्चैव स्त्रियं चैव तु बृंहयेत् ।
छर्दितृष्णारुचिश्वासशोषहिध्माः सकासलाः ॥ ३०९ ॥
हृद्रोगं पाण्डुगुल्मं च प्रदरं च त्रिदोषजम् ।
शोणितानिलकार्श्यं च रक्तपित्तं नियच्छति ॥ ३१० ॥
सतताभ्यासंयोगेन वलीपलितवर्जितः ।

शोषरोग में द्वितीयपिप्पल्याद्यवलेह—पिप्पली एक प्रस्थ लेकर, चौगुने

दूध में एक आढक गाय का घृत और शुद्ध खाट एक आढक मिलाकर, मन्द आंच से पाक-सिद्धि तक पकावे। शीत होने पर चातुर्जात ( दालचीनी, छोटी इलायची, तेजपत्र, नागकेसर ) तीन पल का चूर्ण मिला दे। इस अवलेह को दोष, धातु, अग्नि तथा बल के अनुकूल मात्रा से प्रयोग करें। यह अवलेह बल को देनेवाला, वृष्य, हृद्य, धातुपुष्टिकारक, जीर्णज्वर दूर करनेवाला तथा स्त्रियों को बढ़ाता है। छर्दि, तृष्णा, अरुचि, श्वास, शोष, हिध्मा, कामला, हृद्रोग, पाण्डु, गुल्म, त्रिदोषज प्रदर, वातरक्त, कृशता तथा रक्तपित्त को दूर करता है। निरन्तर प्रयोग करने से वलीपलित को नाश करता है ॥२०६-३१०॥

क्षयादिरोगे रसाङ्गहरीतक्यवलेह.—

हरीतक्याः शतं द्रोणे पयसि परिसाधयेत् ॥ ३११॥
घृतावशेषमुत्तार्य निष्कुलीकृत्य च क्रमात्।
रसगन्धकलोहानां चूर्णेनापूर्य वेष्टयेत् ॥ ३१२ ॥
सूत्रेण मासमेकं तु मधुमध्ये निधापयेत्।
पथ्याशी भक्षयेदेकां सर्वरोगविमुक्तये ॥ ३१३ ॥

क्षयादिरोग में रसांग हरीतक्यवलेह—एक सौ हरीतकी को एक द्रोण दूध में परिपक्व करे, घृतावशेष उतार, गुठली निकालकर, रस (पारा), गन्धक तथा लोहे के चूर्ण से भरकर सूत्र से बांध दे, और एक माह तक मधु के बीच में रख दे, पथ्यपूर्वक खानेवाला, सम्पूर्ण रोगों की निवृत्ति के लिये एक २ हरीतकी भक्षण करे ॥ ३११-३१३ ॥

विमर्श—पारद-गन्धक की कज्जली बना लेना चाहिए।

खण्डार्द्रकावलेहः—

सुस्विन्नाच्छृङ्गवेरात्पलशतमनवं निस्तुषं संविधाय
प्रस्थे चाज्यस्य पक्त्वा पलशतसहितं शुद्धमत्स्यण्डिकायाः।
कौरङ्गी देवपुष्पं मधुकदलकणानागकिञ्जल्कभृङ्गं
शुक्लाजाजी सघनमरिचतुगा सार्धकर्षद्वयाः स्युः ॥ ३१४ ॥
तस्मिन्नीरं विदित्वा ज्वलनमुखगतं पात्रमुत्तार्य यत्नात्
कृत्वा चेषन्मदशशिसुरभितं चूर्णितेनावचूर्ण्य।
प्रातः शीतेऽतिमात्रं मधुकुडवयुगं सार्धमावाप्य सान्द्रं
तल्लीढ हन्ति जीर्णज्वरमथ कसनं राजयक्ष्माणमेव ॥ ३१५ ॥

खण्डार्द्रकावलेह—उबाले हुए पुराने अद्रक एक सौ पल लेकर छिलका निकालकर एक प्रस्थ घृत में पकाकर शु० मत्स्यण्डिका ( शक्कर ), एक सौ पल कौरङ्गी, देवपुष्प, मधु ( मुलेठी ), दल ( तेजपत्र ), पिप्पली, नागकिञ्जल्क ( नागकेशर ), भृङ्गराज, श्वेतजीरा, मोथा, मरिच तथा वंशलोचन ढाई २ कर्ष

का चूर्ण मिलावे, जल रहने पर आग पर पुनः पकाकर यत्नपूर्वक उतार कर शीतल होनेपर, मद-शशि (कस्तूरी, कपूर) से सुरभित, कर खूब ठण्ढा जानकर चार कुडव मधु के साथ गाढ़ा बनाकर भक्षण करे। यह जीर्णज्वर, कास तथा राजयक्ष्मा को नाश करता है ॥ ३१४-३१५ ॥

अतीसारेऽङ्कोलमूलावलेहः—

पलमङ्कोलमूलस्य दशांशं बिल्वमेव च ।
तद्भागो राजवृक्षस्य क्वाथ्यमष्टगुणे जले ॥ ३१६ ॥
तेन पादावशेषेण फाणितं कारयेद्भिषक् ।
शीतीभूते प्रदातव्यं मस्तुना सहितं बुधैः ॥ ३१७ ॥
फाणिते दीयमाने तु सत्वरं छर्दयेद्यदा ।
शीतलं भोजनं देयं दध्यन्नं भक्तमेव च ॥ ३१८ ॥
पक्वापक्वमतीसारं नानावर्णं सवेदनम् ।
दुर्वारं ग्रहणीदोषं जयेच्चैव प्रवाहिकाम् ॥ ३१९ ॥

अतिसार में अंकोलमूलावलेह—अंकोल (ढेरा) का मूल दश पल, अमलतास दश पल—इन द्रव्यों को अठगुने जल में क्वाथ करे, चतुर्थांशावशिष्ट रहने पर फाण्ट बना ले। शीत होने पर मस्तु के साथ पिलाये। फाणित देने पर जब शीघ्र ही छर्दि हो जाय तो दही-भात आदि शीतल भोजन देना चाहिए। यह पक्व तथा अपक्व वेदनायुक्त अनेक वर्णवाला अतिसार, दुर्जय ग्रहणीदोष तथा प्रवाहिका को जीत लेता है ॥ ३१५-३१९ ॥

अर्शसि भल्लातकावलेहः—

पर्पटावल्गुजानन्तावचाखदिरचन्दनम् ।
पाठाशुण्ठीशटीभार्गीवासाभूनिम्बवत्सकम् ॥ ३२० ॥
श्यामेन्द्रवारुणीमूर्वाविडङ्गेन्द्रयवं जलम् ।
हस्तिकर्ण्यमृताद्राक्षापटोलरजनीद्वयम् ॥ ३२१ ॥
कणारग्वधसप्ताह्वबिल्वश्योनाकपाटलाः ।
एषां द्विपलिकान् भागान् जलद्रोणे विपाचयेत् ॥ ३२२ ॥
अष्टभागावशेषं तु कषायमवतारयेत् ।
भल्लातकसहस्राणि छित्त्वा द्रोणमितेऽम्भसि ॥ ३२३ ॥
चतुर्भागावशेषं तु कषायं परिकल्पयेत् ।
तौ कषायौ समादाय वस्त्रपूतौ तु कारयेत् ॥ ३२४ ॥
गुडस्य च तुला दत्त्वा लेहवत्साधयेद्भिषक् ।
भल्लातकसहस्राणां मज्जानं तत्र दापयेत् ॥ ३२५ ॥
त्रिकटुत्रिफलामुस्तसैन्धवानां पलं पलम् ।

सौगन्धिकस्य दातव्यं चूर्णं पलचतुष्टयम् ॥ ३२६ ॥
दीप्यकस्य पलं चैव चातुर्जातं पलांशकम् ।
संचूर्ण्य प्रक्षिपेत्कोष्णे घृतभाण्डे निधापयेत् ॥ ३२७ ॥
महाभल्लातको ह्येष महादेवेन निर्मितः ।
प्राणिनां च हितार्थं वै जयेच्छीघ्रं निषेवितः ॥ ३२८ ॥
श्वित्रमौदुम्बरं सिध्मं ऋक्षजिह्वं च काकणम् ।
पुण्डरीकं च चर्माख्यं विस्फोटं रक्तमण्डलम् ॥ ३२९ ॥
कृच्छ्रं कापालिकं कृष्णं पामां चैव विपादिकाम् ।
वातरक्तमुदावर्तं पाण्डुरोगं वमिं कृमिम् ॥ ३३० ॥
अर्शांसि षट्प्रकाराणि कासं श्वासं भगन्दरम् ।
समाभ्यासेन पलितमामवातं सुदुर्जयम् ॥ ३३१ ॥
कुरुते च परां कान्तिं प्रदीप्तं जठरानलम् ।
अनुपाने प्रयोक्तव्यं छिन्नातोयं पयोऽथवा ।
भोजने च सदा त्याज्यमुष्णं चाम्लं विशेषत. ॥ ३३२ ॥

अर्शरोग में भल्लातकावलेह—पर्पट ( पित्तपापड़ा ), अवल्गुजा ( बाकुची ), अनन्तमूल, वच, खदिर, रक्तचन्दन, पाठा, सोंठ, भांगरा, अडूसा, चिरायता, कुटज, कालानिशोथ, इन्द्रवारुणी, मूर्वा ( मरोडफली ), विडंग, इन्द्रयव, मोथा, हस्तिकर्णी, गुडूची, द्राक्षा, पटोल, आमाहल्दी, दारुहल्दी, पिप्पली, अमलतास, सातला, बिल्व, स्योनाक तथा दल—दो २ पल—इन द्रव्यों को एक द्रोण जल मे पकावे और अष्टमांशावशेष क्वाथ उतार ले। एक हजार भल्लातक काटकर एक द्रोण जल में चतुर्थांशावशिष्ट कषाय बनाये। दोनों कषायों को कपड़े से छान ले और एक तुला गुड मिलाकर लेह के समान सिद्ध कर ले और एक हजार स्विन्न भल्लातक के मज्जा को मिला दे। त्रिकटु ( सोंठ, पीपर, मरिच ), त्रिफला, मोथा, सेन्धानमक एक २ पल, सौगन्धिक चार पल, अजमोदा एक पल, चातुर्जात ( दालचीनी, छोटी इलायची तेजपत्र, नागकेशर ) एक पल—इन द्रव्यों के चूर्ण को मिला दे और थोड़ा गरम घृत के वर्तन मे रख दे। यह महाभल्लातक प्राणियों के हित के लिये महादेव जी का बनाया है। यह सेवन करने से शीघ्र ही श्वित्र, औदुम्बर, सिध्म, ऋक्षजिह्व काकण, पुण्डरीक, चर्मरोग, विस्फोट, रक्तमण्डल, कृच्छ्रकापालिक, कृष्ण, पामा, विपादिका, वातरक्त आदि कुष्ठभेद, उदावर्त, पाण्डुरोग, वमि, कृमि, छः प्रकार के अर्श, कास, श्वास, भगन्दर, पलित तथा दुर्जय आमवात को अच्छी तरह प्रयोग करने से जीत लेता है। उत्तमकान्ति को देता है और जाठराग्नि को दीप्त करता है। अनुपान में गुडूची-स्वरस या पय देना चाहिए। भोजन में

सदा विशेषकर उष्ण तथा अम्ल पदार्थ को त्याग देना चाहिए ॥ ३२०-३३२ ॥

अतीसारे कुटजाष्टकावलेहः—

तुलामथार्द्रां गिरिमल्लिकायाः संक्षुद्य पक्त्वा रसमाददीत ।
तस्मिन् सुपूते पलसंमितानि श्लक्ष्णानि पिष्ट्वा सह शाल्मलेन ॥३३३॥
पाठासमङ्गातिविषाः समुस्ता बिल्वं च पुष्पाणि च धातकीनाम् ।
प्रक्षिप्य भूयो विपचेत्तु तावद्दर्वीप्रलेपं सुरसं च यावत् ॥ ३३४ ॥
पीतस्त्वसौ कालविदा जलेन मण्डेन वाऽजापयसाऽथवाऽपि ।
निहन्ति सर्वं त्वतिसारमुग्रं कृष्णासितं लोहितपीतकं वा ॥ ३३५ ॥
दोषं ग्रहण्या विविधं च रक्तपित्तं तथाऽर्शांसि सशोणितानि ।
असृग्दरं चैवमसाध्यरूपं निहन्त्यवश्यं कुटजाष्टकोऽयम् ॥ ३३६ ॥

अतिसार में कुटजाष्टकावलेह—आर्द्र कुटज एक तुला कूटकर और पकाकर रस निकाल ले। इसमें सेमर के गोंद का चूर्ण, पाठा, मंजीठ, अतीस, मोथा, विल्व तथा धाय का पुष्प—एक २ पल—इन द्रव्यों के चूर्ण को मिलाकर पुनः सुरस, द्रवीलेप पाक करे। इसको समय को जाननेवाला जल, मण्ड अथवा बकरी के दूध से पान करने पर यह कुटजाष्टक अवलेह सभी प्रकार के भयंकर, कृष्ण, सित, लोहित, पीतक अतिसार, अनेक प्रकार के ग्रहणीदोष, रक्तपित्त, रक्तातिसार और असाध्य रक्तप्रदर को निश्चय ही नष्ट करता है ॥ ३३३-३३६ ॥

धातुक्षये मधुपक्वामलकी—

धात्रीफलानि भव्यानि तीक्ष्णलोहेन वेधयेत् ।
विश्वावरणपत्रैश्च फलैश्च स्वेदयेद् भृशम् ॥ ३३७ ॥
उष्णदुग्धेन संस्वेद्य पानीयेन ततः परम् ।
मधुमध्ये क्षिपेद्भाण्डे स्थापयेद्दिनविंशतिम् ॥ ३३८ ॥
विनष्टं मधु संत्यज्य मधुमध्ये पुनः क्षिपेत् ।
अधस्तु शर्करां धात्रीफलान्युपरि च न्यसेत् ॥ ३३९ ॥
सिताधात्रीफलान्येवमुपर्युपरि धारयेत् ।
दिनाष्टकमतो दद्याद्धातुक्षीणे बलक्षये ॥ ३४० ॥
वाजीकरणमत्युग्रं फलानां सेवनं सदा ।
वीर्यवृद्धिकराण्याहुर्वह्निवृद्धिकराणि च ॥ ३४१ ॥
त्वग्दोषं पित्तकोपं च शमयन्ति न संशयः ।

धातुक्षय में मधुपक्वामलकी—भव्य धात्रीफल को तीक्ष्ण लोहे ( कांटा ) से छेद दें, और विश्वावरण ( कपास ) के पत्र तथा फल से स्वेदन करे। इसके बाद उष्ण दूध तथा बाद में उष्ण जल से संस्वेदनकर मधु के वर्तन में

रखकर बीस दिन तक रक्खे। पहले के मधु को निचोड़ कर पुनः मधु के बीच में रक्खे, और नीचे शर्करा ऊपर आंवला रक्खे। इसी प्रकार नीचे २ शर्करा, ऊपर २ आंवला रखते जाय इसके बाद इसमें से धातुक्षीण तथा बलहीन व्यक्ति को आठ दिन तक दे। सदा इन फलों का सेवन करे। यह उत्तम वाजीकरण है। यह वीर्यवर्द्धक तथा अग्निवर्द्धक है और चर्मरोग तथा पित्त प्रकोप को निःसंदिग्ध शान्त करता है॥ ३३७–३४१॥

स्वरभङ्गे कुलिञ्जनाद्योऽवलेहः—

कुलिञ्जनं समानीय नवीनं पलविंशतिम्।
तुलाद्वये जले क्वाथ्यं तुलार्धमवशेषयेत्॥ ३४२॥
वस्त्रपूते जले तस्मिन् चूर्णान्येषां प्रदापयेत्।
कट्फलं पौष्करं भार्गी पञ्चकोलं कटुत्रिकम्॥ ३४३॥
त्रिफला च विडङ्गं च धान्यकं जीरकद्वयम्।
करञ्जः शिखरी वासा प्रत्येकं च पलद्वयम्॥ ३४४॥
सर्वार्धा प्रक्षिपेच्छुद्धां शर्करां गुडमेव च।
हन्त्ययं पञ्चकासांश्च हिक्का अपि सवेदनाः॥ ३४५॥
स्वरभङ्गं महाघोरं कण्ठरोगं मुखामयम्।
मन्दाग्निं च प्रतिश्यायं स्वरभङ्गं विशेषतः॥ ३४६॥

स्वरभंग में कुलिञ्जनाद्य अवलेह—नवीन कुलिञ्जन बीस पल लेकर दो तुला जल में क्वाथकर आधा तुला शेष रहने पर वस्त्र से छानकर कट्फल, पुष्करमूल, भांगरा, पञ्चकोल ( पिप्पली, पिपरामूल, चव्य, चित्रक, सोंठ ), कटुत्रिक ( सोंठ, पीपर, मरिच ), त्रिफला, विडंग, धनिया, सफेदजीरा, स्याहजीरा, करंज, अपामार्ग, अडूसा प्रत्येक दो २ पल चूर्ण, सबसे आधा शर्करा या गुड़ मिला दे और अवलेह सिद्ध कर ले। यह अवलेह पांच प्रकार के कास, वेदनायुक्त हिक्का, महाघोर स्वरभंग, कण्ठरोग, मुखरोग, मन्दाग्नि, प्रतिश्याय तथा विशेषकर स्वरभंग को नाश करता है॥ ३४२–३४६॥

कासे भार्ग्याद्यवलेहः—

भार्गीं हरीतकीं वासां कण्टकारीं तथैव च।
प्रत्येकं प्रस्थमादाय द्रोणेऽपां साधयेद्भिषक्॥ ३४७॥
क्वाथे पादावशेषे तु गुडं प्रस्थमितं क्षिपेत्।
ततः पाकघनीभूते शीतेऽर्धकुडवं मधु॥ ३४८॥
पिप्पलीं कट्फलं शृङ्गी मधुयष्टिं लवङ्गकम्।
त्वक्क्षीरीं रजनी चैव पलार्धप्रमितां क्षिपेत्॥ ३४९॥
एषोऽवलेहः शमयेत् पञ्च कासान् सुदारुणान्।

कासरोग में भार्ग्याद्यवलेह—भांगरा, हर्रे, अडूसा, कण्टकारी-प्रत्येक एक २ प्रस्थ लेकर एक द्रोण जल में क्काथ करे। चतुर्थांशावशिष्ट क्काथ में एक प्रस्थ गुड़ छोड़ दे। पुनः पाक करने से गाढ़ा होने पर ठंढा कर एक कुडव मधु, पीपर, कट्फल, काकड़ासिंघी, जेठीमधु, लवंग, वंशलोचन तथा हल्दी प्रत्येक आधा २ पल के चूर्ण को मिला दे। यह अवलेह पांच प्रकार के भयंकर कास को शान्त करता है॥

हृद्रोगे चन्दनावलेहः—

मातुलुङ्गरसप्रस्थः प्रस्थार्धो दाडिमाद्रसः॥ ३५०॥
तत्तुल्यं नारिकेलाम्बु शर्करा कुडवद्वयम्।
पाकं कृत्वा यथान्यायं सिद्धे शीते समावपेत्॥ ३५१॥
चन्दनं च तुगाक्षीरीं धान्यकं सारिवां तथा।
कङ्कोलकमुशीरं च कुङ्कुमं शतपत्रिकाम्॥ ३५२॥
गुडूच्याश्च तथा सत्त्वं कर्षमानं पृथक् पृथक्।
लेह एष तु हृद्रोगं भ्रमं मूर्च्छां वमिं तथा॥ ३५३॥
दाहं च सुमहाघोरं शमयेन्नात्र संशयः।

हृद्रोग में चन्दनावलेह—बिजौरे नीबू का रस एक प्रस्थ, अनार का रस आधा प्रस्थ, दोनों के बराबर नारियल का जल डेढ़ प्रस्थ, शर्करा दो कुडव, मिलाकर, नियमपूर्वक पाक बनावे और सिद्ध-शीत होने पर चन्दन, वंशलोचन, धनिया, सारिवा, कंकोल ( शीतलचीनी ), खस, केशर, गुलाब का फूल तथा गुडूची का सत्त्व एक २ कर्ष का चूर्ण मिला दें। यह अवलेह, हृद्रोग, भ्रम, मूर्च्छा, वमि तथा महाघोर दाह को निःसन्देह शान्त करता है॥

धातुक्षये गोक्षुराद्यवलेहः—

गोक्षुरश्चाश्वगन्धा च शतवीर्या विदारिका॥ ३५४॥
बलाबीजानि यष्ट्याह्वं बीजानीक्षुरकस्य च।
कपिकच्छोश्च बीजानि शाल्मलीमूलकं तथा॥ ३५५॥
वृद्धदारुकबीजानि लवङ्गं जातिपत्रिका।
केशरं च फलं जात्यास्त्वक् पत्रं वशरोचना॥ ३५६॥
गुडूचीसत्त्वमेले द्वे तथा काश्मीरजन्म च।
एतेषां कर्षमादाय मधुनः कुडवत्रयम्॥ ३५७॥
कृत्वा लेहं ततो मात्रां यथायोग्यां प्रदापयेत्।
धातुक्षयं तथा वातं ध्वजभङ्गं नियच्छति।
अनेनाशीतिवर्षोऽपि युवेव च वृषायते॥ ३५८॥
इति श्रीवैद्यसोढलग्रथिते गदनिग्रहे पञ्चमोऽवलेहाधिकारः।

धातुक्षय में गोक्षुराद्यवलेह—गोखरू, अश्वगन्धा, शतवीर्या ( शतावरी ), विदारीकन्द, बरियार का बीज, यष्ट्याह्व ( जेठीमधु ), इक्षुरक बीज ( तालमखाना ), केवाछ का बीज, सेमर का मूल, विधारा का बीज, लवंग, जातिपत्री ( जावित्री ), जायफल, चमेली की छाल, दालचीनी, पल, वंशलोचन, गुडूची का सत्व, बड़ी इलायची, छोटी इलायची, तथा केशर चूर्ण एक २ कर्ष, मधु तीन कुडव मिलाकर लेह बनावे। इस लेह को उचित मात्रा में उपयोग करे। यह अवलेह धातुक्षय, वात तथा ध्वजभंग को दूर करता है। इस अवलेह के उपयोग से अस्सी वर्ष का बूढ़ा भी युवा के तरह बलवान् हो जाता है॥ ३५४-३५८॥

इति वैद्य शोढल-ग्रथित गदनिग्रह में पञ्चम अवलेह अधिकार

---

## अथातः षष्ठ आसवाधिकारः प्रारभ्यते

कुमार्यासवः—

द्रोणमानं कुमार्यास्तु रसं भाण्डे निधापयेत्।
तुलार्धं दशमूलं तु तदर्धां पौष्करीं जटाम्॥ १॥
तत्समं धन्वयासं च चित्रार्धं च परिक्षिपेत्।
प्रस्थार्धममृता ज्ञेया तदर्धमभया तथा॥ २॥
लोध्रमामलकं पथ्यं मञ्जिष्ठा च कलिद्रुमः।
चव्यं च कुष्टयष्ट्याह्वे कपित्थं सुरदारुकम्॥ ३॥
कृमिशत्रुः कणा चैव भार्गी स्यादष्टवर्गकः।
जीरकं क्रमुको रास्ना शटी रेणकमेव च॥ ४॥
शृङ्गी निशा प्रियङ्गुश्च मांसी मुस्ता च सारिवा।
शक्रबीजं वरी वासा नागकेसरमेव च॥ ५॥
पुनर्नवा समांशानि षड्भिर्द्रोणैर्जलस्य तु।
क्वाथयेदनया रीत्या चतुर्थांशं जलं नयेत्॥ ६॥
त्रिंशत्पला च मृद्वीका दन्तसंख्यापलं मधु।
गुडात्तुलाचतुष्कं च तदर्धा धातकी भवेत्॥ ७॥
एलाद्वयं लवङ्गानि कङ्कोलं मलयोद्भवम्।
चातुर्जातं तथा कृष्णा मरिचं जातिपत्रकम्॥ ८॥
आकल्लकं फलं जात्याः कपिकच्छुश्च दीप्यकम्।
वचा खदिरसारश्च दहनो जीरकं तथा॥ ९॥
यवानी वालकं विश्वा मुस्ता धान्यं हरीतकी।

हपुषा तिन्तिडीकं च चूर्णमेषां प्रयोजयेत् ॥ १० ॥
भाण्डे पुराणे सुस्निग्धे धूपिते गन्धभेषजैः ।
कोष्ठसारे तथा तप्ते भूमौ मासं विनिःक्षिपेत् ॥ ११ ॥
यो रोगी प्रातरुत्थाय पलमेकं तु भक्षयेत् ।
धातुक्षय जयेत्कासं श्वासं पञ्चविधं तथा ॥ १२ ॥
अर्शांसि वातारोगांश्च ग्रहणीपाण्डुकामलाः ।
हलीमकमुदावर्तं गुल्मं पञ्चविधं जयेत् ॥ १३ ॥
आध्मानं कुक्षिशूलं च प्रत्याध्मानं गुदग्रहम् ।
अष्ठीलिकां च हृद्रोगानेतान् व्याधीन्विनिर्जयेत् ॥ १४ ॥
कुमार्यासव इत्येष कथितः शूलपाणिना ।

अवलेहप्रकरणके बाद छठा आसवाधिकार प्रारम्भ करते है ।

कुमार्यासव—कुमारी का रस एक द्रोण भाण्ड मे रख दे और उसमें दशमूल (बिल्व, गम्भारी, स्योनाक, पाढल, अरणी, शालपर्णी, पृश्निपर्णी, बृहती, कण्टकारी, गोखरू ) आधा तुला, पुष्करमूल चौथाई तुला (पचीस पल), धमासा चौथाई तुला ( पच्चीस पल ), चित्रक अष्टमांश तुला ( साढ़े बारह पल ) छोड दे । गुडूची आधा प्रस्थ, हर्रे चौथाई प्रस्थ ( चार पल ), लोध्र, आमलक, हर्रे, मंजीठ, बहेडा, चव्य, कुष्ठ, मधुयष्टी, कपित्थ, देवदारु, विडग, पिप्पली, भांगरा, अष्टवर्ग (जीवक, ऋषभक, ऋद्धि, वृद्धि, मेदा, महामेदा, काकोली, क्षीरकाकोली), जीरा, सुपारी, रास्ना, शटी ( कपूरकचरी ), रेणुक ( सम्भालू के बीज ), काकडासिंघी, हल्दी, प्रियंगु, जटामांसी, मोथा, सारिवा, इन्द्रयव, शतावरी, अडूसा, नागकेशर तथा पुनर्नवा समभाग चार २ पल छः द्रोण जल में क्वाथ करे और इसी प्रकार चतुर्थांश क्वाथ को छोड कर पुनः उसमें द्राक्षा तीस पल, मधु बत्तीस पल, गुड चार तुला, धाय का फूल दो तुला, बड़ी इलायची, छोटी इलायची, लवग, शीतलचीनी, मलयागिर चन्दन, चातुर्जात ( त्वक्, इलायची, तेजपत्र, नागकेशर ), पिप्पली, मरिच, जावित्री, आकल्लक ( अकरकरा ), जायफर, केवाछ बीज, अजमोदा, वच, खदिरसार, चित्रक, जीरा, अजवायन, बालक ( सुगन्धवाला ), सोंठ, मोथा, धनिया, हरीतकी, हाऊवेर तथा तिन्तिडीक ( वृक्षाम्ल )—इन द्रव्यों के चूर्ण को मिलाकर गन्ध द्रव्यों से धूपित स्निग्ध पुराने भाण्ड में भरकर कोष्ठसार ( कोठार ) तथा गरम जमीन पर एक मास तक रक्खे । जो रोगी प्रातःकाल उठ कर एक पल पान करता है वह धातुक्षय, कास, पांच प्रकार के श्वास को जीत लेता है । अर्श, वातरोग, ग्रहणी, पाण्डु, कामला, हलीमक, उदावर्त तथा पांच प्रकार के गुल्म को जीत लेता है । आध्मान, अम्लगत वातसंचय (पेट फूलना), उदरशूल, प्रत्याध्मान

( आमाशयगत वातसंचय ), गुदग्रह, अष्ठीलिका ( शूकदोष ), हृद्रोग—इन व्याधियों को दूर करता है। इस कुमार्यासव को शूलपाणि ने कहा है ॥

आसवारिष्टप्रकरणपरिभाषा—

द्रवेषु चिरकालस्थं द्रव्यं यत्संहितं भवेत्।
आसवारिष्टभेदैस्तत्प्रोच्यते भेषजोचितम् ॥

काष्ठादि औषधियाँ पुरानी होने पर न्यून गुणवाली होकर थोड़े ही दिन में नष्ट हो जाती हैं। एवं वनौषधियों के रस तथा क्वाथ भी थोड़े ही समय में बिगड़ जाते हैं। अतः इन के गुणों को दीर्घकाल तक अवस्थित रखने के लिये आसव-अरिष्ट बनाये जाते है।' आसुतत्वादासवसंज्ञा—अर्थात् जो आसुत-पद्धति ( संयोगज मूर्च्छा-प्रक्रिया ) से तैयार हो, उसे आसव कहते है। ये आसव, अरिष्ट वर्षों तक खराब नहीं होते, वल्कि गुण में दिन प्रतिदिन वृद्धि होती जाती है। अतः औषधियों के गुण-संरक्षणार्थ आसव, अरिष्ट-विधि व्यवहार में आई है। आसव, अरिष्ट दीर्घ काल तक अवस्थित रहने मे मद्यार्क ( अलकोहल ) कारण होता है और उसकी उत्पत्ति आसुत प्रक्रिया से होती है। आसव-अरिष्ट मद्य के भेद है। वस्तुतः मद्य के आसव, अरिष्ट, सीधु, वारुणी, सुरा तथा मैरेय छ भेद है।

( १ ) आसव—यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः। अर्थात् अपक्व औषधियों को मधुर द्रव्य और धाय के फूल आदि के साथ जल में मिला बिना क्वाथ किये पात्र में भर मुख बन्द कर कुछ काल बन्द रखकर जो मद्य सिद्ध किया जाय उसे आसव कहते हैं।

( २ ) अरिष्ट—अरिष्टः क्वाथसिद्धः स्यात् सम्पक्वो मधुरद्रवैः। अर्थात् औषधियों का क्वाथ कर फिर मधुर द्रव्य और धाय के फूल आदि मिलाकर मद्य तैयार किया जाय वह अरिष्ट कहलाता है।

( ३ ) सीधु—सीधुः इक्षुरसैः पक्वैः—अर्थात् ईख के रस को कुछ काल तक बन्द रखकर जो द्रव्य सिद्ध किया जाता है उसे सीधु ( सिरका ) कहते हैं। गन्ने ( ईख ) के समान द्राक्षा या जामुन के रस को किसी वर्तन में भर कर संधान उठाने पर भी सीधु तैयार होता है। इसमे पक्वरस, शीतरस, गुड़, शर्करा, आक्षिक और जाम्बव भेद माने गये है।

( ४ ) वारुणी—यत्तालखर्जूररसैरासुतं सैव वारुणी। अर्थात् ताल या खर्जूर के शिखर प्रदेश पर कुल्हाडी से तिरछे घाव करने से कटे हुए भाग मे से जो रसस्राव होता है उसे वर्तन मे भरकर रख देने से थोड़े ही देर में खमीर आकर मद्योत्पत्ति हो जाती है वह वारुणी ( ताड़ी ) कहलाती है। इस तरह पुनर्नवा मूल और चावलों को पीस पिट्ठी वना जल में घोल देने से खमीर आकर मद्य वन जाता है उसे भी वारुणी कहते हैं।

( ५ ) सुरा—परिपक्वान्नसंन्धानसमुद्भूता सुरा मता। अर्थात् जो चावल आदि को पका मीठा मिला खमीर उठाकर तैयार की जाय उसे सुरा ( शराब ) कहते हैं। इसके गौढी ( गुड़ मिलाकर बनाई हुई ), माध्वी ( महुआ के फूल मिलाकर तैयार की हुई ), पैष्टी ( चावल आदि अन्न के सन्धानजन्य ), और निर्यास ( ईख में रस और फलों के रस में तैयार की हुई ) ये चार भेद है। ये सब सुरा नलिका यन्त्र द्वारा वाष्प में से स्वच्छ वर्णरहित तैयार करायी जाती है।

( ६ ) मैरेय—

आसवस्य सुरायाश्च द्वयोरेकत्र भाजने।
संधानं तद्विजानीयाद् मैरेयमुभयात्मकम् ॥

अर्थात्—आसव द्रव्य और सुरा ( अन्न या फल रस आदि ) मिलाकर संधान कराया जाय उसे मैरेय कहते हैं। एवं बबूल या बेर की छाल और गुड, शक्कर आदि को जल में मिलाकर मद्य बनाया जाय वह भी मैरेय कहलाता है।

मद्य और आसव दोनों की क्रिया में भेद है। घटक (अवयव) तथा गुण से भी भेद है। मद्यमम्लेषु च श्रेष्ठम्, तथा 'आसवो विनष्टोऽम्लतां याति' इस प्रकार से शास्त्रकारों ने भेद दर्शाया है। तथापि सारग्राही दृष्टि से व मद्यार्कपन की दृष्टि से सुरा तथा आसवारिष्ट की एक ही जाति है। सुरा में मद्यार्क तथा जल रहते हैं और आसवारिष्ट मे मद्यार्क और जल के अतिरिक्त विविध औषध द्रव्यों का सत्त्व भी रहता है एवं मद्यार्क की मात्रा अति न्यून होती है। शराब में मादक गुण प्रधान है और आसवारिष्ट में औषध गुणों का ही प्राधान्य है। यह-इन दोनों द्रव्यों में अन्तर है। आसवारिष्ट में औषध गुणों का प्राधान्य होने से मर्यादित मात्रा में ही सेवन किया जाता है।

यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः।
अरिष्टः क्वाथसिद्धः स्यात्तन्मानं द्विपलोन्मितम् ॥

बिना क्वाथ किये बनाये मद्य को 'आसव' तथा क्वाथ कर बनाये हुए मद्य को 'अरिष्ट' कहते हैं। किन्तु कितने ही विद्वान् आचार्य चरक, सुश्रुतादि वचनों के आधार से निर्मूल दिखाते हैं। लोध्रासव, दुरालभासव, द्राक्षासव आदि अनेक आसवों की मुख्य औषधियों का क्वाथ करने की आज्ञा शास्त्रकारों ने की है। एवं चरक संहिता के चिकित्सा स्थान में तक्रारिष्ट, अष्टशतारिष्ट, त्रिफलारिष्ट और अनेक अरिष्टों में क्वाथ करने का विधान नहीं है। इसके अतिरिक्त सुश्रुत संहिता में भी अनेक अरिष्टों में क्वाथ करने का विधान नही है। इसके अतिरिक्त सुश्रुतसंहिता में भी अनेक अरिष्टों में क्वाथविधि नहीं कही

है अतः आसव और अरिष्ट दोनों पर्याय शब्द हैं ऐसा भी अनेक विद्वानों का मत है। इसकी मात्रा सामान्यतः एक २ पल की है किन्तु अग्नि-बल के अनुसार न्यूनाधिक मात्रा से भी सेवन कराया जाता है।

निर्माण-विधि—आसव बनाने में संधान-क्रिया अत्यावश्यक मानी जाती है। जल, औषध द्रव्य, मधुर द्रव्य आदि को मिला अमृतवान के मुख पर ढक्कन लगा संधिस्थान पर लेपन (संधान) करने को संधान-विधि कहते है। आधुनिक समय में अमृतवान के जगह लकड़ी का ढोल उपयोग में लाये जाते है। तथा उसका ढक्कन भी लेप के बजाय कपड़े से बांधकर पक्का बन्द किया जाता है। आधुनिक पद्धति की निर्माण-प्रक्रिया सामान्यतः इस प्रकार प्रचलित है।

जो भी आसव बनाना हो उसकी विधि के अनुसार मूल द्रव्यों को जव-कुटकर लेवे। जल को हिलाकर गुड़ को पूर्णतया मिश्रित कर ले। बाद मे जवकुट मुख्य द्रव्य जल में डाल दे। ढोल को ढकने लगा कपड़े से बांध ऊपर वर्तन रख देवें, इस प्रकार करने से उसमें आसवीकरण क्रिया प्रारम्भ होकर खमीर उठने लगेगा। खमीर उठते समय ढोल के अन्दर एक प्रकार की 'सूं, सूं, सी' उठने लगती है। विशेष निश्चय करने के लिये ढोल के मुख पर जलती दियासलाई रखे यदि खमीर बैठ गया होगा तो दियासलाई जलती रहेगी और खमीर बनता होगा तो दियासलाई बुझ जायगी। जल पर फेन चक्ररूप मे आ जायेंगे। खमीर में एक प्रकार के कीटाणु (किण्व) उत्पन्न होंगे जो मद्यांश को पैदा करेंगे। जल का उष्ण तापमान इस समय सामान्यतः ३० से ३५ सेन्टीग्रेड तक (८२ से ८५ फेरनहीट तक) होना चाहिए। उष्ण तापमान पर यह क्रिया अच्छी तरह होती है इससे अधिक उष्णता तथा शीतलता होने पर आसवक्रिया बन्द हो जाती है। आसवक्रिया प्रारम्भ में प्रबल होती है जैसे २ मद्यार्क अधिकाधिक तैयार होता जाता है वैसे २ यह क्रिया मन्द होती जाती है। १५ प्रतिशत मद्यार्क बन जाने पर उस में कीटाणु जीवित नही रह सकते। कीटाणु नष्ट होते ही क्रिया बन्द हो जाती है। ऐसे समय निवाया जल मिलाया जाय तो क्रिया फिर प्रारम्भ हो जाती है। यदि ठण्ढा जल मिलाया जाय तो आसव में फुंफुदी आने की सम्भावना है। परिवर्तनक्रिया में अम्ल परिवर्तन इष्ट नहीं है। अलकोहल परिवर्तन अपेक्षित है। अम्ल अधिक होने पर आसव बिगड़ जाता है। अम्लत्व यह मद्य का सहज गुण है और मधुर यह आसव का रस है। अम्लता बढ़ने से आसव मद्य बन जायगा। आसव खट्टा होकर शुक्त बन जाता है। आसव का पहला सन्धान बन्द होने पर छानकर दूसरे ढोल में भर लेना चाहिए। कपरौटी जो वर्तन के मुख बन्द

किये जाते हैं उसमें प्राणवायु के प्रवेश की जगह न होने से कार्वोलिक गैस को बाहर जाने की जगह नहीं रहती और वह अन्दर ही धूमायित होकर आसव को अम्ल बना देती है। अतः पात्र से ढकने में थोड़ी-सी वायु आने-जाने का रास्ता रहना आवश्यक है।

आसवारिष्ट में द्रव्य-परिमाणविधि—

अनुक्तमानारिष्टेषु द्रवद्रोणे गुडात्तुलाम्।
क्षौद्रं दद्याद् गुडादर्धं प्रक्षेपं दशमांशिकम्॥

जिस आसव या अरिष्ट की निर्माण प्रक्रिया में द्रव्यों का मान नहीं बताया गया है वहां जल एक द्रोण, गुड़ एक तुला, मधु गुड़ के आधा तथा प्रक्षेप द्रव्य, धाय के पुष्प आदि गुड के दशमांश यानी बीस पल मिलाना चाहिए। पहले आसव या अरिष्ट की वस्तुओं के क्वाथ या स्वरस तैयार करे। पुनः शक्कर, गुड या शहद मिलाकर चीनी मिट्टी के बर्तन में भरे। पश्चात् मुँह तक कुछ भाग खुला रखकर ऊपर कपड़ा बांध कर एकान्त स्थान में दश-पन्द्रह दिन तक खमीर आकर शान्त हो जाने तक रहने दे। प्रारम्भ में कार्वोलिक गैस उत्पन्न होकर बाहर निकलती रहती है। इस गैस को यदि अरिष्ट के पात्र को मुख बन्द कर रोक दी जाय तो आसव में अम्लता बढ़ेगी। और आसव के स्थानपर शुक्त बन जायगी। खमीर उठाने के समय 'सूं, सूं', की जैसी आवाज पात्र के पास कान लगाकर सुनने में आती है। खमीर शान्त होने पर आवाज सुनने में नहीं आती। विशेष निश्चय करने के लिये माचिस जलाकर परीक्षा करते है। यदि खमीर शान्त हो गया होगा तो दियासलाई जलती रहेगी अन्यथा बुझ जायगी। इस प्रकार खमीर शान्त होने पर प्रक्षेप ( धाय का फूल, जायफर, जावित्री आदि के चूर्ण या कल्क ) डालना चाहिए। यह अनेक विद्वानों का मत है। कुछ प्राचीन विद्वान् प्रक्षेप को तुरन्त मिला देते हैं। आधुनिक प्रथा के अनुसार खमीर आने पर ऊपर स्थित पूड़ी के समान पपड़ी को निकाल कर फेक देते हैं और छान कर प्रक्षेप द्रव्य मिलाकर चौथाई हिस्सा छोड़ कर भर देते हैं। चौथाई खाली अवश्य रखना चाहिए अन्यथा अमृतवान फूटने का डर रहता है। प्रक्षेप डालने के बाद अच्छी तरह एक मास से तीन मास तक रखना चाहिए। अरिष्ट या आसव-पात्र को एकान्त तथा उष्ण प्रदेश में रखना चाहिए जिस से आसवीकरण शीघ्र प्रारम्भ हो कर आसव शीघ्र तैयार हो जाय। द्राक्षारिष्ट बनाने पर तल में जो गाढ़ा पदार्थ रह जाता है, उसको सुराबीज कहते हैं। उसको सुखा कर जामन के तरह अरिष्ट बनाने में प्रयोग करते हैं, इसके मिला देने से किण्वीकरण शीघ्र ही प्रारम्भ हो जाता है और आसव के बिगड़ने का भय नहीं रहता है। आसव, अरिष्ट में कषाय रस प्रधान

धातकी पुष्प, बबूल छाल, बैर छाल, महुआ का फूल, सुपारी, नागकेसर आदि द्रव्य मिलाये जाते हैं उसे भी 'सुराबीज' कहते हैं। और वे सब सबल होने से सफलतापूर्वक शीघ्र ही कार्य करते हैं।

शीत काल में आसव-अरिष्ट नियत-समय से बाद में तथा ग्रीष्म ऋतु में नियत समय से चार-आठ रोज पहले तैयार हो जाते है। जब औषधियों के जाति भेद तथा ऋतु भेद से तैयार हो जाने का अनुमान हो तो अमृतवान को खोलकर परीक्षा कर लेनी चाहिए।'

यदि सुवर्ण, लोह आदि धातु को मिलाना हो तो इन धातुओं का लवण बनाकर प्रयोग करना चाहिए क्योंकि लवण पदार्थ शीघ्र घुलनशील होते हैं।

सुवर्ण लवण बनाने की विधि :—नमक का तेजाब तीन औंस ( तीन ड्राम ), शोरे का तेजाब चार औंस मिश्रित करे। उसे आतसी शीशी में डाल उसके भीतर में शु० सुवर्ण के पतले पतर तीन तोला डाल कर चार दिन तक रहने दे। फिर आतसी शीशी को स्प्रिट लैम्प पर रख कर गरम करे। अच्छी तरह गरम हो जाने पर दश तोला सेन्धा नमक डाल कर मिलावे सूंघने पर सुवर्ण का रंग नारियल के सदृश प्रतीत होने लगे तब शीशी उतार लेवे। स्वांग शीतल होने पर सुवर्ण लवण को निकाल लेवे। इस लवण को डाक्टरी में ओरम क्लोराइड कहते हैं।

कस्तूरी, केशर- कर्पूर आदि सुगन्धित द्रव्यों को मिलानी हो तो आसव, अरिष्ट तैयार हो जाने पर मद्यार्क में घोल शीशी में कुछ बूंदों की मात्रा में डालकर अच्छी तरह कार्क बन्द कर रख मिला देनी चाहिए। पहिले छोड़ने से गन्ध उड़ जाता है। आसव, अरिष्ट प्रायः प्रातः काल भोजन के बाद सवा तोला से लेकर ढाई तोले तक पान कराना चाहिए, अग्निबल के अनुसार इसकी मात्रा में न्यूनाधिक किया जा सकता है।

आसव, अरिष्ट सामान्यतः दीपन, पाचन, मलशोधक और पौष्टिक है। आसव अरिष्ट जितने पुराने होते हैं उतने लाभदायक होते हैं। आसव-अरिष्ट कच्चे रहने से खराब हो जाते हैं।

कुछ विशेप—

( १ ) आसव-अरिष्ट वर्षा ऋतु में नहीं तैयार करनी चाहिए। थोड़ी सी असावधानी से खराब होने की सम्भावना होती है।

( २ ) जल स्वच्छ एवं छानकर या गरम कर मिलाना चाहिए। खारा जल का प्रयोग नहीं करना चाहिए।

( ३ ) आसव, अरिष्ट की औषधियों का मोटा चूर्ण लेवे। सूक्ष्म चूर्ण से गाढा होने का डर रहता है और गाढ़ापन आसव-प्रक्रिया में बाधक है।

ओषधि को जवकुट कर शाम को ही भिगो दे और दूसरे दिन क्वाथ बनाने की प्रक्रिया से क्वाथ बनावे।

( ४ ) आसव-अरिष्ट बनाने के पात्र को साफ कर ले और उसको जटामांसी, चन्दन, अगर, गुग्गुलु, कर्पूर, कालीमिर्च, शक्कर आदि की धूप देकर दुर्गन्ध को दूर कर ले। इसके बाद आसव-अरिष्ट-द्रव भरे। मधुर द्रव और क्वाथ शीतल होने पर मिलावे। अच्छी तरह मिल जाने पर चूर्णादि प्रक्षेप द्रव्य मिश्रण कर अच्छी तरह चला दे।

( ५ ) धाय का फूल ताजा ग्रहण करे। मुनक्का नया लेकर अच्छी तरह धोकर उपयोग में ले। गुड़ तथा शहद पुराना, दुर्गन्ध-रहित लेना चाहिए। काला-खारा तथा खट्टा गुड़ एवं मधु को उपयोग में नहीं लेना चाहिए।

( ६ ) आसव-अरिष्ट तैयार होने पर पहले मोटे कपड़े से या बांस की टोकरी से छान लेना चाहिए। फिर दूसरे अमृतबान मे बन्द कर दश, या पन्द्रह दिन रहने दे फिर ऊपर २ का निथरा स्वच्छ आसव-अरिष्ट को बोतलों में भरकर अच्छी तरह कार्क लगाकर रख दे। और चार माह बाद प्रयोग में लावे। आसव-अरिष्ट को बोतल में पूरा नहीं भरे थोड़ा सा जगह खाली रक्खे अन्यथा बोतल फूटने का भय रहता है। आसव-अरिष्ट भरते समय बोतल में पानी न रहे अन्यथा दूषित होने का डर रहता है और बर्तन के नीचे जमे भाग को बोतल में नहीं जाने दे।

( ७ ) आसव-अरिष्ट गाढ़ा, पचन काल में दाह उत्पन्न करनेवाला, दुर्गन्धयुक्त, कृमियुक्त, गुरुपाकी, नवीन, तीक्ष्ण, उष्ण, मैला, दूषित पात्र मे रक्खे हुए तथा स्वादहीन को प्रयोग मे नही लाना चाहिए।

द्वितीयः कुमार्यासव —

कन्यारसस्तुलार्धं वै तदर्धगुडमिश्रितः।
चतुर्जातलवङ्गानां सैन्धवस्य निशाद्वयात् ॥ १५ ॥
कृष्णोषणकुबेराणां धातकीनां पलं पलम्।
पथ्याचूर्णं पलद्वन्द्वं पलं चाकल्लकस्य तु ॥ १६ ॥
उग्रगन्धाविडङ्गानां जातीपत्र्याः पलं पलम्।
एकीकृत्य शुचौ भाण्डे पक्षमेकं निधापयेत् ॥ १७ ॥
पलार्धं भक्षयेन्नित्यं गुल्मोदावर्तनाशनः।
आध्मानं पार्श्वशूलं च जठरार्तिं कफं हरेत् ॥ १८ ॥
मन्दाग्निं शमयेच्छ्वासं कासं हिक्कां क्षयं तथा।
प्लीहानं यकृतं शोफं नाशयत्येष सेवितः ॥ १९ ॥

द्वितीय कुमार्यासव—कुमारी-स्वरस आधा तुला, गुड़ चौथाई तुला

( पच्चीस पल ) मिश्रित कर, चातुर्जात ( त्वक्, इलायची, तेजपत्र, नागकेशर ), लवंग, सेन्धानमक, आमाहल्दी, दारुहल्दी, पिप्पली, मरिच, कुबेर ( नन्दीवृक्ष ) तथा धाय का फूल—एक २ पल, हरीतकी चूर्ण—दो पल, आकल्लक—एक पल, उग्रगन्धा ( वच ), विडंग, जावित्री—एक २ पल, —इन सभी द्रव्यों को एकत्र कर स्वच्छ भाण्ड में एक पक्ष तक रक्खे। इसको आधा पल की मात्रा से पान करे, यह गुल्म तथा उदावर्त को नाश करता है। आध्मान, पार्श्वशूल, जठररोग तथा कफरोग को दूर करता है। मन्दाग्नि, श्वास, कास, हिक्का तथा क्षय को शान्त करता है और नित्य सेवन करने से यह प्लीहा, यकृत् तथा शोथ को नाश करता है ॥ १५-१९ ॥

नवविधा आसवयोनिः—

त्वक्पत्रकाण्डपुष्पाणि सारमूलफलानि च ।
धान्यानि च सिता चापि नव ह्यासवयोनयः ॥ २० ॥
द्रव्यसंयोगतः संख्यातीताः पथ्यतमाश्च ते ।
द्रव्याणां भेदतो वेदवसु ( ८४ ) संख्याः प्रकीर्तिताः ॥ २१ ॥
तद्यथा—

नवविध आसवयोनि—त्वक्, पत्र, काण्ड, पुष्प, सार, मूल, फल, धान्य और शर्करा ये नव आसव के उत्पत्ति-स्थान हैं। ये द्रव्य संयोग से पथ्यतम असंख्य है। द्रव्यों के भेद से चौरासी भेद बताया गया है। जैसे—॥२०-२१॥

षड् धान्यासवाः—

सुरासौवीरमैरेयधान्यकाम्लतुषोदकाः ।
सभेदा रससंख्यास्ते ह्यासवा धान्यतो मताः ॥ २२ ॥

छः धान्यासव—सुरा, सौवीर, ऐरेय, धान्यकाम्ल, तुषोदक, सभेदा, ये छः धान्यासव माने गये हैं ॥ २२ ॥

षड्विंशतिफलासवाः—

द्राक्षाखर्जूरकाश्मर्यजम्बामलबिभीतकैः ।
धन्वराजादनैः पथ्यातृणशून्यपरूषकैः ॥ २३ ॥
कपित्थमृगलिण्डीस्नुक्कर्कन्धूबदरीफलैः ।
प्रियालपनसप्लक्षन्यग्रोधोदुम्बरैः सह ॥ २४ ॥
कपीनपीलुबकुलाजमोदाशङ्खिनीफलैः ।
शृङ्गाटाश्वत्थसंयुक्ताः षड्विंशाः फलनो मताः ॥ २५ ॥

षड्विंशति ( छब्बिस ) फलासव—१. द्राक्षा, २. खजूर, ३. गम्भारी, ४. जम्बू, ५. आंवला, ६. बहेड़ा, ७. धन्व ( भल्लातक ), ८. राजादन

( खिरिणी ), ९. दर्भ, १०. तृणशून्य[1] ( केवडाफल ), ११. परूषक (फालसा), १२. कपित्थ ( कैथ ) मृगलिण्डी ( बहेड़ा ), ( स्नुक् ( सेहुंड ), १३. कर्कन्धु (झरबेर), १४. बदरीफल ( मध्यमबेर ), १५ प्रियाल ( चिरौंजी ), १६ पनस (कटहल), १७. प्लक्ष ( पाकड़ ), १८. न्यग्रोध (वट), १९. गूलर, २० कपीन ( आंमड़ा ), २१. पीलु ( जंगलीफल ), २२, बकुल ( मौलेसरी ), २३. अजमोदा, २४. शंखिनीफल ( चोरपुष्पी ), २५. शृङ्गाटक ( सिंघाड़ा ), २६. अश्वत्थ ( पीपल ) इन छब्बिस फलों के आसव होते हैं। अर्थात् इन छब्बिस द्रव्यों के फलों से जो आसव तैयार किये जाते है उन्हें फलासव कहते हैं।

विमर्श—चरक में कुवल ( बड़ी बेर ) लिया गया है, गदनिग्रह में बकुल ( मौलेसरी ) का पाठ है। आसवों की गणना चरक के अनुसार ही गदनिग्रहकार ने भी की है अतः प्राचीनतम होने से चरक के अनुसार मानना उपयुक्त है। साथ ही प्रमादवश एवं अक्षर-व्यतिक्रम होने से कुवल के स्थान पर बकुल पढ़ दिया गया हो यह सम्भव है। चरक में 'स्नुक्' का पाठ नहीं है। गदनिग्रहकार ने बहेड़ा को "विभीतक' शब्द से तथा 'मृगलिण्डी' शब्द से दो बार पढ़ा है। अतः चरक के अनुसार गदनिग्रह में भी छब्बिस फलासव माना जाना चाहिए। अन्यथा गदनिग्रहकार के अनुसार स्नुक् को लेकर सत्ताइस फलासव हो जाते हैं॥ २३–२५॥

एकादश मूलासवाः—

अश्वगन्धास्थिरादन्तीकृष्णगन्धाशतावरी- ।
श्यामैरण्डद्रवन्तीभिर्बिल्ववह्नित्रिवृत्समैः ॥ २६॥
मूलैरेकादशैते तु मुनिभिर्मूलतो मताः।

ग्यारह मूलासव—१. अश्वगन्धा ( असगन्ध ), २. स्थिरा ( सरिवन ), ३. दन्ती, ४. कृष्णगन्धा ( सहिजन ), ५. शतावर, ६ श्यामा ( कालानिशोथ ), ७. एरण्ड, ८. द्रवन्ती, ९. बेल, १०. वह्नि ( चित्रक ), ११, त्रिवृत् ( सफेद निशोथ ) इनके मूल से बनाये गये ग्यारह आसवों का नाम मूलासव है।

विंशतिः सारासवाः—

शालप्रियङ्गुस्यन्दनचन्दनखदिरार्जुनैश्च कदरयुतैः।
असनाश्वकर्णसप्तपर्णशमीशिंशिपासहितैः ॥ २७॥

---

१. तृणशून्यं तु मल्लिकायां तथा स्यात् केतकीफले। ( मल्लिका शतभीरुश्च, गवाक्षी भद्रमल्लिका। शतभीरुर्मदयन्ती भूपदी तृणशून्यकम् )।

अरिमेदतिन्दुकिणिहीशुक्तिशिरीषैश्च वञ्जुलसमेतैः ।
धन्वनमधूकसारैर्विंशतिरात्रेयमुनिनोक्ताः ॥ २८ ॥

बीस सारासव—१. शाल ( सागौन ), २. प्रियंगु, ३, स्यन्दन (तिनिश), ४. श्वेतचन्दन, ५. खदिर, ६. अर्जुन, ७. कदर ( श्वेत खदिर ), ८. असन ( विजयसार ), ९. अश्वकर्ण ( साल 'साखू' ), १०. सप्तपर्ण ( छतिवन ), ११. शमी, १२, शिंशपा ( शीशम ), १३. अरिमेद ( विट्खदिर ), १४, तिन्दु ( तेंदू ), १५. किणिही ( चिचिड़ी 'अपामार्ग' ), १६. शुक्ति ( बेर ), १७. शिरीष, १८. वञ्जुल, १९. धन्वन ( भल्लातक ), २०. मधूकसार ( महुआ )—इनके सार से बनाये हुए बीस आसवों का नाम सारासव है ॥ २७–२८ ॥

दश पुष्पासवाः—

पद्मोत्पलनलिनकुमुदसौगन्धिकपौण्डरीकशतपत्रैः ।
पुष्पैर्मधूकजातैः प्रियङ्गुना धातकीकुसुमैः ॥ २९ ॥
दश पुष्पासवाः पूर्वं मुनिभिः परिकीर्तिताः ।

दशपुष्पासव—१ पद्म, २ उत्पल ( नीलकमल ), ३ नलिन, ४ कुमुद ( कोंई ), ५ सौगन्धिक, ६ पौण्डरीक (श्वेतकमल), ७ शतपत्र (लालकमल), ८ महुआ, ९ प्रियंगु, १० धाय का फूल—इनके फूल से बनाये हुए दश आसवों का नाम पुष्पासव है ॥

चत्वारः काण्डासवाः—

चत्वारः काण्डकैः पुण्ड्रेक्षुकाण्डेक्ष्विक्षुबालिकैः ॥ ३० ॥

चार काण्डासव—१. पुण्ड्र ( पुण्ड्रक ), २. इक्षु, ३. काण्डेक्षु, ४. इक्षुबालिका—ये चार ईख के भेद है। इनके काण्ड से बनाये हुए चार आसवों का नाम काण्डासव है ॥ ३० ॥

द्वौ पत्रासवौ—

पटोलकतमालाभ्यां द्वौ हि पत्रासवौ मतौ ।

दो पत्रासव—१. पटोल, २. तमाल ( तमाल वृक्ष का पत्ता )—इन दोनों के पत्र से बनाये हुए आसवों का नाम पत्रासव है। चरक ने तमाल के स्थान पर ताडक पत्र लिखा है ॥

चत्वारस्त्वगासवाः—

क्रमुकैलेयलोध्रैश्च सतिल्वैस्त्वक्कृता हिताः ॥ ३१ ॥

चार त्वगासव—१. क्रमुक ( सोपारी ), २. ऐलेय ( एलवालु ), ३. लोध्र ( लोध ), ४. तिल्व ( तिल्वक )—इन चारों की छाल से बनाये हुए आसव का नाम त्वगासव है ॥ ३१ ॥

शर्करासवः—

शर्करासव एवैकः,

एक शर्करासव—१. शर्करा से बनाये हुए आसव का नाम शर्करासव है। द्रव्यों के संयोग-भेद से, तथा संस्कार-भेद से बहुत प्रकार के आसव होते हैं। अपने २ योनि-द्रव्य से सिद्ध अपने २ गुण के अनुसार कार्य करते हैं। संयोग (अनेक द्रव्यों का संयोग), सस्कार (निर्माण प्रकार), देश, काल, मात्रा, तथा स्वभाव से उनके गुणों को जान कर कार्य में प्रयोग करें। दो श्लोकों में आत्रेय मुनि ने इन आसवों के गुणों को कहा है।

आसवानां विकल्पसंस्कारगुणाः—

द्रव्यसंयोगभावतः।
विकल्पा बहुधा ज्ञेयाः संस्कारश्च यथाविधि ॥ ३२ ॥
स्वयोनिसस्कृता ह्येते स्वं स्वं कर्म प्रकुर्वते।
सयोगसंस्कृतेर्देशकालमात्रस्वभावतः ॥ ३३ ॥
पृथक्तेषां स्वभावास्तु ज्ञात्वा कार्ये प्रयोजयेत्।
श्लोकद्वयमिहार्थे तु मुनिरात्रेय उक्तवान् ॥ ३४ ॥
मनःशरीराग्निबलप्रदानामस्वप्नशोकारुचिनाशनानाम्।
हर्षप्रदानां प्रवरासवानामशीतिरुक्ता चतुरुत्तरैषा ॥ ३५ ॥
शरीररोगप्रकृतौ मतानि तत्त्वेन चाहारविनिश्चयाय।
उवाच यज्ञःपुरुषादिकेऽस्मिन्मुनिस्तथाऽग्र्याणि वरासवांश्च ॥ ३६ ॥

आसव के गुण—मन, शरीर तथा अग्नि को बढ़ानेवाले, अनिद्रा, शोक एवं अरुचि को नष्ट करनेवाले और मनको प्रसन्न करनेवाले चौरासी उत्तम आसवों का वर्णन यहाँ किया गया है।

भगवान पुनर्वसु ने इस चरक के यज्ञःपुरुषीयाध्याय में शरीर, रोग एवं उसकी प्रकृति ( कारण ) के सम्बन्ध में ऋषियों के मत, तत्त्वपूर्वक आहार विनिश्चय का 'श्रेष्ठ' ( अग्र्य द्रव्य ) तथा उत्तम आसवों का वर्णन किया है ॥ ३२-३६ ॥

वातव्याधौ विडङ्गासवः—

विडङ्गं पिप्पलीमूलं पाठाधात्र्येलवालुकम्।
कुटजत्वक्फलं रास्नां भार्गीं पञ्चपलोन्मिताम् ॥ ३७ ॥
अष्टद्रोणेऽम्भसः पक्त्वा द्रोणशेषं तु कारयेत्।
पूते शीते क्षिपेत्तस्मिन्माक्षिकस्य शतत्रयम् ॥ ३८ ॥
धातक्या विंशतिपलं चूर्णं कृत्वा तु दापयेत्।
व्योषस्य तु पलान्यष्टौ त्रिजातद्विपलान्यपि ॥ ३९ ॥

फलिनीहैमतोयानां सरोध्राणां पलं पलम् ।
घृतभाण्डे समाधाय मासमेकं विधारयेत् ॥ ४० ॥
एष योगो हरत्येव प्रत्यष्ठीलाभगन्दरान् ।
ऊरुस्तम्भाश्मरीमेहं गण्डमालां सविद्रधिम् ॥ ४१ ॥
आढ्यवातं हनुस्तम्भं विडङ्गाख्यो महासवः ।

वातव्याधि में विडङ्गासव—विडंग, पिपरामूल, पाठा, आंवला, एलवालु, कुटज छाल, इन्द्रयव, रास्ना, भांगरा—पांच २ पल आठ द्रोण जल में क्वाथ करे, अष्टमांशावशिष्ट क्वाथ ( एक द्रोण ) को छानकर शीत होने पर माक्षिक ( मधु ) तीन सौ पल, धाय का फूल बीस पल, त्र्योष ( सोंठ, पीपर, मरिच ) आठ पल, त्रिजात ( त्वक्, तेजपत्र, इलायची ) दो पल, प्रियंगु, हैमतोय ( भड़भाड़ ), लोध्र—एक २ पल का चूर्ण प्रक्षेप कर घृत के बर्तन में एकत्र कर एक मास तक रख दे । यह महासव विडंगाख्य योग प्रत्यष्ठीला ( एक प्रकार की वातव्याधि जो अधोवायु, मल और मूत्र को रोकनेवाली वाता-ष्ठीला ग्रन्थि को पीडा देनेवाली ) और भगन्दर, ऊरुस्तम्भ, पथरी, प्रमेह, गण्डमाला, विद्रधि, आढ्यवात, अधोःशाखाघात तथा हनुस्तम्भ को दूर करता है ॥

प्रमेहे रोध्रासवः—

रोध्रं शटीं पुष्करमूलमेलां मूर्वां विडङ्गं त्रिफलां यवानीम् ।
चव्यं प्रियङ्गु क्रमुकं विशालां किराततिक्तं कटुरोहिणीं च ॥ ४२ ॥
भार्गीं नतं चित्रकपिप्पलीनां मूलं सकुष्ठातिविषां च पाठाम् ।
कलिङ्गकान् केशरमिन्द्रसाह्वं नखं सपत्रं मरिचं प्लवं च ॥ ४३ ॥
द्रोणेऽम्भसः कर्षसमं हि पक्त्वा पूते चतुर्भागजलावशेषे ।
रसेऽर्धभागं मधुनः प्रदाय पक्षं निधेयो घृतभाजनस्थः ॥ ४४ ॥
रोध्रासवोऽयं कफपित्तमेहान्क्षिप्रं निहन्याद् द्विपलप्रयोगात् ।
पाण्ड्वामयार्शांस्यरुचिं ग्रहण्या दोषं किलासं विविधं च कुष्ठम् ॥४५॥

प्रमेहरोग में रोध्रासव—लोध्र, शटी ( कपूरकचरी ), पुष्करमूल, इलायची, मूर्वा (मोरवेल), विडंग, त्रिफला, अजवायन, चव्य, प्रियंगु, क्रमुक ( सुपारी ) । विशाला ( इन्द्रायण ), किराततिक्त ( चिरायता ), कटुरोहिणी ( कटुकी ), भांगरा, नत ( तगर ), चित्रक तथा पिप्पली का मूल, कुष्ठ ( कूठ ), अतीस, पाठा, कलिंग ( कुटज ), नागकेशर, इन्द्रयव, नख ( व्याघ्रनख ), तेजपत्र, मरिच तथा प्लव ( केवटीमोथा )—एक २ कर्ष—इन द्रव्यों को एक द्रोण जल मे क्वाथ कर तथा चतुर्भागावशिष्ट क्वाथ में छानकर आधा भाग मधु मिलाकर घृत के पात्र में एकत्रकर एक पक्ष तक रक्खे । इसके बाद छानकर प्रयोग करे । यह रोध्रासव, दो पल की मात्रा में प्रयोग करने से कफ पित्त-

प्रमेह, पाण्डुरोग, अर्श, अरुचि, ग्रहणीदोष, किलास तथा अनेक प्रकार के कुष्ठों को नाश करता है ॥ ४२–४५ ॥

प्रमेहे देवदार्वासवः—

देवदारोस्तुलार्धं तु वासायाः पलविंशतिः ।
दन्ती शक्राह्वमञ्जिष्ठास्तगरं रजनीद्वयम् ॥ ४६ ॥
रास्ना मुस्तं शिरीषश्च कृमिघ्नः खदिरार्जुनौ ।
भागान्दशपलानेषां गुडूच्याश्चित्रकस्य च ॥ ४७ ॥
चन्दनस्य यवान्याश्च रोहिण्या वत्सकस्य च ।
भागान् पञ्चपलानेषामष्टद्रोणेऽम्भसः पचेत् ॥ ४८ ॥
द्रोणशेषे कषाये तु पूते शीते प्रदापयेत् ।
धातक्याः षोडशपलं माक्षिकस्य तुलात्रयम् ॥ ४९ ॥
चतुष्पलं त्रिजाताच्च व्योषस्य च पलद्वयम् ।
केसरस्य पलद्वन्द्वं प्रियङ्गोश्च पलद्वयम् ॥ ५० ॥
घृतभाण्डे निदध्याच्च मासमेकं प्रयत्नतः ।
प्रमेहान्मूत्रकृच्छ्रांश्च वातरोगान् सुदारुणान् ॥ ५१ ॥
ग्रहण्यर्शोविकारांश्च देवदार्वासवो जयेत् ।

प्रमेहरोग में देवदार्वासव—देवदारु आधा तुला, अडूसा बीस पल, दन्ती, शक्राह्व (इन्द्रवारुणी), मंजीठ, तगर, आमाहल्दी, निशा (हल्दी), रास्ना, मोथा, शिरीष, विडङ्ग, खदिर, अर्जुन—ये द्रव्य दश २ पल, गुडूची, चित्रक, चन्दन, अजवायन, रोहिणी (मांसरोहिणी), कुटज—ये द्रव्य पांच २ पल आठ द्रोण जल में क्वाथ कर एक द्रोण अवशिष्ट परिस्रावित शीतकषाय में धाय का फूल सोरह पल, मधु तीन तुला, त्रिजात (त्वक् इलायची, तेजपत्र) चार पल, व्योष (सोंठ, पीपर, मरिच) दो पल, नागकेशर दो पल, प्रियंगु दो पल, मिला दे। घृत के भाण्ड में एकत्र कर एक माह तक प्रयत्नपूर्वक रक्खे। इसके बाद छान कर प्रयोग करे। यह देवदार्वासव प्रमेह, मूत्रकृच्छ्र, भयंकर वातरोग, ग्रहणी तथा अर्श-विकारों को दूर करता है ॥ ४६–५१ ॥

कुष्ठे कनकारिष्टः—

खदिरकषायद्रोणं कुम्भे घृतभाविते समावाप्य ।
पलिकां मात्रां दद्यां कृत्वा तामेव सूक्ष्मचूर्णं तु ॥ ५२ ॥
त्रिफलात्रिकटुकरजनीकतकत्वगवाकुचीगुडूच्यश्च ।
सविडङ्गमत्र मधुपलशतद्वयं प्रक्षिपेत्सर्वम् ॥ ५३ ॥
धातकीपलान्यष्टौ क्वाथे चास्मिन्प्रदेयानि ।
प्रातः प्रातस्तु पिबेन्नाशयति चिरोत्थितं कुष्ठम् ॥ ५४ ॥

मासेन सर्वरोगान्निहन्ति च शोफमेहांश्च ।
निर्जितकासश्वासो गुदकीलभगन्दरैर्विनिर्मुक्तः ॥ ५५ ॥
कनकारिष्टं प्रपिबन्भवति पुमान्कनककान्तिश्च ।

कुष्ठरोग में कनकारिष्ट—खदिर का कषाय एक द्रोण घृतभावित घड़े में रखकर खदिर चूर्ण एक पल छोड़ दे, और त्रिफला, त्रिकटु ( सोंठ, पीपर, मरिच ), हल्दी, कतक ( निर्मली ), दालचीनी, बाकुची, गुडूची, विडंग तथा मधु दो सौ पल, इन द्रव्यों को प्रक्षेप करे। इसी क्वाथ में धाय का पुष्प आठ पल डाल दे। एक मास बाद प्रातःकाल पान करने से पुराने कुष्ट को नाश करता है। एक मास सेवन करने से शोफ, प्रमेह आदि सभी रोगों को नाश करता है। मनुष्य इस कनकारिष्ट का पान करने से श्वास, कास को जीत लेता है, गुदकील ( अर्श ) और भगन्दर से मुक्त हो जाता है और कनक के समान कान्तिवाला हो जाता है ॥

अर्शसि द्वितीयकनकारिष्टः—

नवस्यामलकस्यैकां कुर्याज्जर्जरितां तुलाम् ।
कुडवांशश्च मागध्या विडङ्गं मरिचानि च ॥ ५६ ॥
यवासः पिप्पलीमूलं क्रमुकं चव्यचित्रकौ ।
मञ्जिष्ठैल्वालुकं रोध्रं पलिकान्युपकल्पयेत् ॥ ५७ ॥
कुष्ठं दारुहरिद्रां च सुराह्वं सारिवाद्वयम् ।
मुस्तमिन्द्रयवांश्चैव कुर्यादर्धपलोन्मितम् ॥ ५८ ॥
चत्वारि नागपुष्पस्य पलान्यभिनवस्य च ।
जलद्रोणद्वयेनैतत्साधयित्वाऽवतारयेत् ॥ ५९ ॥
द्रोणावशेषपूते च शीते तस्मिन्प्रदापयेत् ।
मृद्वीकाद्व्याढकद्रावं शीतं निर्यूहसाधितम् ॥ ६० ॥
शर्करायाश्च शुद्धाया दद्याद् द्विगुणितां तुलाम् ।
कुसुमस्वरसस्यैवमर्धप्रस्थं नवस्य च ॥ ६१ ॥
त्वगेलाप्लवपत्राम्बुसेव्यक्रमुककेसरान् ।
मतिमांश्चूर्णयित्वा तु कार्षिकान्संप्रदापयेत् ॥ ६२ ॥
तत्सर्वं स्थापयेत्पक्षं सुचौक्षे घृतभाजने ।
प्रलिप्ते सर्पिषा किंचिच्छर्करागुरुधूपिते ॥ ६३ ॥
पक्षादूर्ध्वमरिष्टोऽयं कनको नाम विश्रुतः ।
पेयः स्वादुरसो हृद्यः प्रयोगाद्भक्तरोचकः ॥ ६४ ॥
अर्शांसि ग्रहणीदोषमानाहमुदरं ज्वरम् ।
हृत्पाण्डुरोगशोथांश्च गुल्मवर्चोनिलग्रहान् ॥ ६५ ॥

कासान्कफामयांश्चोग्रान्सर्वानेवापकर्षति ।
वलीपलितखालित्यं दोषजं तु व्यपोहति ॥ ६६ ॥

अर्शरोग में द्वितीय कनकारिष्ट—नवीन आंवला कूटा हुआ एक तुला, पिप्पली एक कुडव, और विडंग, मरिच, जवासा, पिपरामूल, सुपारी, चव्य, चित्रक, मंजीठ, एलवालु, लोध्र—एक २ पल, कुष्ठ ( कूठ ), दारुहरिद्रा, सुराह्व ( देवदारु ), श्वेतसारिवा, रक्तसारिवा, मोथा, इन्द्रयव—आधा २ पल, नवीन नागकेशर चार पल, दो द्रोण जल में सिद्ध करें। परिस्नावित द्रोणावशेष शीत क्वाथ में, शीत निर्यूहसाधित द्राक्षारस ( अंगूर को मसल कर निकाला हुआ रस या मुनक्का को ठंढे जल में भिगोकर तथा मसल कर निकाला हुआ रस) दो आढक, स्वच्छ शर्करा दो तुला, नवीन धाय के फूल का स्वरस आधा प्रस्थ, दालचीनी, इलायची, प्लव ( केवटीमोथा ), तेजपत्र, अम्बु ( सुगन्धवाला ), सेव्य ( खश ), सुपारी, केसर—एक २ कर्ष—इन द्रव्यों के चूर्ण को बुद्धिमान व्यक्ति डाल दे। इन सभी द्रव्यों को पवित्र थोड़े शर्करा तथा अगरु आदि से धूपित घृतस्निग्ध भाण्ड मे भरकर एक पक्ष तक रक्खे। एक पक्ष के बाद यह कनकारिष्ट तैयार हो जाता है। यह कनकारिष्ट पीने योग्य, स्वादुरस तथा हृद्य है और प्रयोग करने से भोजन मे रुचि पैदा करता है, यह अर्श, ग्रहणीदोष, आनाह, उदररोग, ज्वर, हृद्रोग, पाण्डुरोग, शोथ, गुल्म, वर्चोग्रह ( विड्विबन्ध ), अनिलग्रह ( वातविबन्ध ), सभी भयंकर कास तथा कफ रोगों को दूर करता है। दोषज वली-पलित तथा खालित्य को नष्ट करता है ॥ ५६–६६ ॥

ग्रहण्यां दुरालभारिष्टः—

दुरालभाया द्विप्रस्थं प्रस्थमामलकस्य च ।
मुष्टी चित्रकदन्त्योर्द्वे प्रत्यग्रं चाभयाशतम् ॥ ६७ ॥
चतुर्द्रोणेऽम्भसः क्वाथ्यं शीतं द्रोणावशेषितम् ।
गुडस्य द्विशतं पूतं मधुनः कुडवान्वितम् ॥ ६८ ॥
तद्वत्प्रियङ्गोः पिप्पल्या विडङ्गानां च चूर्णकम् ।
कुडवं घृतकुम्भस्थं पक्षादूर्ध्वं पिबेन्नरः ॥ ६९ ॥
ग्रहणीपाण्डुरोगार्शःकुष्ठवीसर्पमेहनुत् ।
स्वरवर्णकरश्चैव रक्तपित्तकफापहः ॥ ७० ॥

ग्रहणीरोग मे दुरालभारिष्ट—दुरालभा ( धमासा ) दो प्रस्थ, आंवला एक प्रस्थ, चित्रक तथा दन्ती दो मुष्टि ( एक पल ), हरीतकी एक सौ पल चार द्रोण जल में क्वाथ कर शीत द्रोणावशेष क्वाथ में गुड़ दो सौ पल शु० मधु एक कुडव, प्रियंगु, पिप्पली, विडंग—एक कुडव इन द्रव्यों के चूर्ण को मिलाकर

घृतस्निग्ध भाण्ड में रख कर एक पक्ष बाद पान करे। ग्रहणी, पाण्डुरोग, अर्श, कुष्ठ, वीसर्प तथा प्रमेह को नष्ट करता है। स्वर-वर्ण को देनेवाला, रक्तपित्त तथा कफ को नष्ट करनेवाला है ॥ ६७–७० ॥

अर्शसि दन्त्यरिष्टः—

दन्तीचित्रकमूलानामुभयोः पञ्चमूलयोः।
प्रत्येकं पलमापोथ्य जलद्रोणे विपाचयेत् ॥ ७१ ॥
त्रिपलं त्रिफलायाश्च दलानां तत्र दापयेत्।
रसे चतुर्थशेषे तु पूते शीते प्रदापयेत् ॥ ७२ ॥
तुलां गुडस्य तत्तिष्ठेन्मासार्धं घृतभाजने।
तन्मात्रया पिबन्नित्यमर्शोभ्यः स विमुच्यते ॥ ७३ ॥
ग्रहणीपाण्डुरोगघ्नं वातवर्चोनुलोमनम्।
दीपनं रुचिदं चैव दन्त्यरिष्टमिमं विदुः ॥ ७४ ॥

अर्शरोग में दन्त्यरिष्ट—दन्तीमूल, चित्रकमूल, दोनों पञ्चमूल ( बिल्व, गम्भारी, स्योनाक, पाढल, अरणी, शालपर्णी, पृश्निपर्णी, बृहती, कण्टकारी, गोखरू), प्रत्येक एक २ पल एक द्रोण जल में पकाकर त्रिफला का दल (गुठिली निकाला हुआ) तीन पल मिला दे। परिस्रावित चतुर्थभागावशिष्ट शीत क्वाथ में एक तुला गुड़ डालकर घृत के पात्र में पन्द्रह दिन तक रक्खे। इस अरिष्ट को मात्रापूर्वक पान करने से अर्श रोग से मुक्त हो जाता है। यह दन्त्यरिष्ट ग्रहणी तथा पाण्डुरोग को नाश करता है वायु तथा विट् का अनुलोमन करता है, अग्निदीपक तथा रुचिप्रद कहा गया है ॥ ७१–७४ ॥

अर्शसि अभयारिष्टः—

पथ्यार्धं तु हरीतक्याः प्रस्थमामलकस्य च।
दशपलं कपित्थानां ततोऽर्धं चेन्द्रवारुणी ॥ ७५ ॥
विडङ्गं पिप्पली रोध्रं मरिचं सैलवालुकम्।
द्विपलांशं जलस्यैतच्चतुर्द्रोणे विपाचयेत् ॥ ७६ ॥
द्रोणशेषे रसे तस्मिन्पूते शीते प्रदापयेत्।
गुडस्य द्विशतं तिष्ठेत्तत्सर्वं घृतभाजने ॥ ७७ ॥
पक्षादूर्ध्वं भवेत्पेया ततो मात्रा यथाबलम्।
अस्याभ्यासादरिष्टस्य गुदजा यान्ति सङ्क्षयम् ॥ ७८ ॥
ग्रहणीपाण्डुहृद्रोगप्लीहगुल्मोदरापहः।
कुष्ठशोफारुचिहरो बलवर्णाग्निवर्धनः ॥ ७९ ॥
सिद्धोऽयमभयारिष्टः कामलाश्वित्रनाशनः।
कृमिग्रन्थ्यर्बुदव्यङ्गराजयक्ष्मज्वरान्तकृत् ॥ ८० ॥

अर्शरोग में अभयारिष्ट—हरीतकी आधा प्रस्थ, आंवला एक प्रस्थ, कपित्थ दश पल, इन्द्रवारुणी पांच पल, विडंग, पिप्पली, लोध्र, मरिच, एलवालु—दो २ पल—इन द्रव्यों को चार द्रोण जल में क्वाथ करे। परिस्रावित शीत एक द्रोण अवशिष्ट क्वाथ में गुड़ दो सौ पल मिलाकर सभी द्रव्यों को घृत के भाण्ड में रख दे। एक पक्ष बाद अरिष्ट तैयार हो जाता है। बल के अनुसार मात्रापूर्वक इस अरिष्ट को पान करने से अर्शरोग नष्ट हो जाते हैं। यह अरिष्ट ग्रहणी, पाण्डु, हृद्रोग, प्लीह, गुल्म तथा उदररोग को नाश करता है। और कुष्ठ, शोफ, अरुचि को दूर करता है। यह सिद्ध अभयारिष्ट, कामला तथा श्वित्र को भी नाश करता है। कृमिग्रन्थि ( पलक ( वर्त्म ) तथा शुक्ल भाग की सन्धि में होनेवाला नेत्ररोग ), अर्बुद, व्यंग (अस्वाभाविक अंगवृद्धि), राजयक्ष्मा तथा ज्वर को नाश करता है ॥ ७५–८० ॥

ग्रहण्यां द्वितीयोऽभयारिष्टः—

हरीतकीदलप्रस्थं प्रस्थमामलकस्य च।
विशालायाः कपित्थस्य पाठाचित्रकमूलयोः ॥ ८१ ॥
द्वे द्वे पले समापोथ्य द्विद्रोणे साधयेदपाम्।
पादशेषे च पूते च रसे तस्मिन्प्रदापयेत् ॥ ८२ ॥
गुडस्यैकां तुलां वैद्यः संस्थाप्य घृतभाजने।
पक्षस्थितं पिबेन्नित्यं ग्रहण्यर्शोविकारनुत् ॥ ८३ ॥
प्लीहहृत्पाण्डुरोगघ्नः कामलाविषमज्वरान्।
कासं श्वासमुदावर्तं फलारिष्टो व्यपोहति ॥ ८४ ॥

ग्रहणीरोग में द्वितीय अभयारिष्ट—हरीतकी एक प्रस्थ, आंवला एक प्रस्थ, इन्द्रायण, कपित्थ, पाठा, चित्रकमूल—दो २ पल—इन द्रव्यों को यवकुट कर दो द्रोण जल में सिद्ध करे। परिस्रावित शीत चौथाई रस में एक तुला गुड़ मिलाकर घृत के पात्र में एक पक्ष तक रक्खे। इसके बाद मात्रापूर्वक पान करे। यह ग्रहणी तथा अर्श-विकार दूर करता है। यह फलारिष्ट (अभयारिष्ट), प्लीहा, हृद्रोग तथा पाण्डुरोग को नाश करता है। और कामला, विषमज्वर, कास, श्वास तथा उदावर्त को दूर करता है ॥ ८१–८४ ॥

ग्रहण्यां तृतीयोऽभयारिष्टः—

अष्टौ पलानि वर्षाभूदशमूलार्कचित्रकात्।
दन्तीश्यामात्रिवृद्द्राक्षाश्चैव स्युस्त्रिफलाढकम् ॥ ८५ ॥
अम्बुद्रोणाष्टके पक्त्वा पादशेषे रसे स्थिते।
द्वे गुडस्य तुले पूते तत्पश्चाद्धटके क्षिपेत् ॥ ८६ ॥
गवां मूत्राढकं प्रस्थौ द्वावयोरजसस्तथा।

विडङ्गं कुटजं कुष्ठं चित्रकं मरिचं वचाम् ॥ ८७ ॥
संचूर्ण्य द्विपलान्यस्मिन्दत्त्वा मासस्थितं पिबेत् ।
अभयारिष्टनामायं मेहार्शःकुष्ठशोफहा ॥ ८८ ॥
प्लीहपाण्ड्वामयान् गुल्मान् जठराणि च नाशयेत् ।

ग्रहणीरोग में तृतीय अभयारिष्ट—पुनर्नवा, दशमूल ( विल्व, गम्भारी, श्योनाक, पाढल, अरणी, शालपर्णी, बृहती, कटेरी, गोखरू ), मदार, चित्रक, दन्ती, कालानिशोथ, रास्ना—आठ २ पल, त्रिफला एक आढक आठ द्रोण जल में पकाकर चतुर्थांश रस में दो तुला गुड मिलाकर घृतस्निग्ध भाण्ड में छोड़ दे और उसमें गाय का मूत्र एक आढक, लौहभस्म दो प्रस्थ, विडंग, कुटज, कुष्ठ ( कूठ ), चित्रक, मरिच, वच—दो २ पल—इन द्रव्यों को चूर्ण कर मिला दे और एक मास तक रक्खे। एक मास बाद उसको पान करे। यह अभयारिष्ट प्रमेह, अर्श, कुष्ठ तथा शोफ को दूर करता है। प्लीहा, पाण्डु, गुल्म तथा जठर रोगों को नाश करता है ॥

पाण्डुरोगे मण्डूरारिष्टः—

मण्डूरस्य तु शुद्धस्य तुलार्धं परिकल्पितम् ॥ ८९ ॥
तद्वल्लोहस्य पत्राणि तिलोत्सेधप्रमाणतः ।
गुडाज्जीर्णात्तु पञ्चाशत्कोलप्रस्थत्रयं तथा ॥ ९० ॥
निकुम्भचित्रकाभ्यां च पले द्वे द्वे सुचूर्णिते ।
पिप्पलीनां विडङ्गानां कुडवं कुडवं पृथक् ॥ ९१ ॥
त्रींश्चापि त्रिफलाप्रस्थान् जलद्रोणे विपाचयेत् ।
अर्धमासस्थितो धान्ये पेयोऽरिष्टः प्रमाणतः ॥ ९२ ॥
ऊर्ध्वाधोदोषनिर्हर्ता पाण्डुरोगं नियच्छति ।
कृमीनर्शांसि कुष्ठं च कासश्वासकफामयान् ॥ ९३ ॥
एषोऽरिष्टस्तु माण्डूरः शोफपाण्ड्वामयापहः ।

पाण्डुरोग मे मण्डूरारिष्ट—मण्डूर आधा तुला, तिलोत्सेध ( तिलके समान मोटा ) लौहपत्र आधा तुला, पुराना गुड़ पचास पल, बदर तीन प्रस्थ, निकुम्भ ( दन्तीवृक्ष ) तथा चित्रक दो २ पल, पिप्पली तथा विडंग एक २ कुडव, त्रिफला तीन प्रस्थ एक द्रोण जल में पकावे और धान्यराशि में एक पक्ष तक रखकर मात्रापूर्वक पान करे। इससे ऊर्ध्व तथा अधोदोष को वमन-विरेचन द्वारा निकलता है जिससे पाण्डुरोग नष्ट हो जाता है। यह मण्डूरारिष्ट कृमि, अर्श, कुष्ठ, कास, श्वास तथा कफ रोगों को दूर करता है तथा शोफ और पाण्डुरोग को नाश करता है ॥ ८९–९३ ॥

क्षयरोगे पिप्पल्यरिष्टः—

मरिचपिप्पलीरोध्रपाठाधात्र्येलवालुकम् ॥ ९४ ॥
चव्यचित्रकजन्तुघ्नक्रमुकोशीरचन्दनम् ।
प्रियङ्गुलवलीमुस्तहरिद्रामिशिपेलवम् ॥ ९५ ॥
नतं पत्रं त्वचं कुष्टं नागकेसरसंयुतम् ।
एषामर्धपलान् भागान् द्राक्षां षष्टिपलां क्षिपेत् ॥ ९६ ॥
पलानि दश धातक्या गुडस्य च शतत्रयम् ।
तोयद्रोणद्वये सिद्धो भवत्येष सुखावहः ॥ ९७ ॥
ग्रहणीपाण्डुरोगार्शःकासगुल्मोदरापहः ।
पिप्पल्यादिररिष्टोऽयं ज्वरारुचिविनाशनः ॥ ९८ ॥

क्षयरोग में पिप्पल्यरिष्ट—मरिच, पिप्पली, लोध्र, पाठा, आंवला, ( एलवालु ) चव्य, चित्रक, विडंग, सुपारी, खस, रक्तचन्दन, प्रियंगु, लवली (हर्फारेवडी), मोथा, हरिद्रा, मिशि (सौंफ), प्लव (केवटमोथा), तगर, तेजपत्र, दालचीनी, कुष्ट ( कूठ ), नागकेशर—आधा २ पल—इन द्रव्यों को तथा द्राक्षा साठ पल, धाय का फूल दश पल, गुड़ तीन पल दो द्रोण जल में छोड़कर सिद्ध करे। यह [1]सुखावह ( निरोग करने वाला) है। ग्रहणी, पाण्डुरोग, अर्श, वात, गुल्म तथा उदररोग को नाश करता है। यह पिप्पल्यादि अरिष्ट ज्वर तथा अरुचिनाशक है ॥ ९०–९८ ॥

शोऽफेऽष्टशतारिष्टः—

काश्मर्यधात्रीमरिचाभयाक्षक्षुद्राफलानां तु सपिप्पलीनाम् ।
शतं शतं क्षौद्रगुडात् पुराणात्तुलां च कुम्भे मधुना प्रलिप्ते ॥ ९९ ॥
सप्ताहमुष्णे द्विगुणं तु शीते स्थितं जलद्रोणयुतं पिबेन्ना ।
शोफान्विबन्धान्कफवातजांश्च निहन्त्यरिष्टोऽष्टशतोऽग्निकृच्च ॥१००॥

शोफरोग में अष्टशतारिष्ट—गम्भारी, आंवला, मरिच, हर्रे, बहेड़ा, क्षुद्रा फल ( कण्टकारी फल ), पिप्पली—एक २ सौ पल, पुराना गुड़ तथा मधु एक तुला एक द्रोण जल में मिलाकर, मधु से लिप्त घटे में संधान कर गर्मी के दिन में एक सप्ताह, शीतऋतु में दो सप्ताह तक रक्खे। उसके बाद पान करे। यह अष्टशत अरिष्ट वात-कफजन्य शोथ तथा विबन्ध को नष्ट करता है और जाठराग्नि को बढाता है।

विमर्श—यह योग चरक से विपरीत है चरक में 'बहेड़ा' नहीं है और 'क्षुद्रा' के स्थान पर 'द्राक्षा' दिया गया है। वस्तुतः यह अष्टशत, मधु तथा गुड़

1. 'सुखसंज्ञकमारोग्यम्' इति चरकः ।

को एक द्रव्य मानकर लिखा गया है। चरक के अनुसार चरेटा छोड़ देने से अष्टशत योग बन जाता है ॥ ९९–१०० ॥

तक्रारिष्टः—

हपुषा सुपवी धान्यमजाजी कारवी शटी।
पिप्पली पिप्पलीमूलं चित्रको गजपिप्पली ॥ १०१ ॥
यवानी चाजमोदा च तच्चूर्णं तक्रसंयुतम्।
मन्दाम्लकटुकं विद्वान् स्थापयेद् घृतभाजने ॥ १०२ ॥
व्यक्ताम्लकटुकं जातं तक्रारिष्टं सुखप्रियम्।
पाययेन्मात्रया कालेष्वन्नस्य तृषित त्रिषु ॥ १०३ ॥
दीपनो रोचनो बल्यः कफवातानुलोमनः।
गुदश्वयथुकण्ठार्तिनाशनो बलवर्धनः ॥ १०४ ॥

तक्रारिष्ट—हाऊवेर, सुपवी ( रास्ना ), धनिया, स्याहजीरा, कारवी ( कलजीरी ), शटी ( कपूरकचरी ), पिप्पली, पिपरामूल, चित्रक, गजपिप्पली, अजवायन, अजमोदा—समभाग—इन द्रव्यों के चूर्ण को, किंचिदम्ल, कटु तक्र के साथ मिलाकर घृत के भाण्ड में 'विद्वान्' रक्खे। अम्ल, कटु स्पष्ट मालूम होने पर सुखप्रिय तक्रारिष्ट तैयार हो जाता है। मात्रापूर्वक तीनों समय अन्न खाने की इच्छा करनेवाले को पान कराये। यह तक्रारिष्ट दीपन, रोचन, बल्य, कफ तथा वात को अनुलोम करनेवाला, गुदरोग ( अर्श ), शोथरोग, कण्ठरोग को नाश करनेवाला तथा बलवर्धक है ॥ १०१–१०४ ॥

अरोचके लघुचुक्रसन्धानम्—

गुडक्षौद्रारनालानां समस्तूनां यथोत्तरम्।
शंसन्ति द्विगुणान्भागान्सम्यक्चुक्रस्य सिद्धये ॥ १०५ ॥
यन्मस्त्वादि शुचौ भाण्डे सक्षौद्रगुडकाञ्जिकम्।
धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ॥ १०६ ॥

अरोचक मे लघु चुक्र सन्धान—गुड मधु, आरनाल, मस्तु—इनके यथोत्तर द्विगुणित भाग ( गुड एक भाग, मधु दो भाग, आरनाल चार भाग, मस्तु आठ भाग ) के संमिश्रण को सम्यक् चुक्र-सिद्धि कहते है। जिस मस्तु आदि को पवित्र पात्र मे, मधु, गुड़, काञ्जी मिलाकर धान्य की राशि मे तीन रात्रि रक्खा जाता है उसको शुक्त-चुक्र कहते है ॥ १०५–१०६ ॥

मन्दाग्नौ बृहच्चुक्रसन्धानम्—

प्रस्थं तण्डुलतोयतस्तुषजलात्प्रस्थत्रयं चाम्लतः
प्रस्थार्धं दधितोऽथ मूलकपलान्यष्टौ गुडान्मानिका।

मान्यौ शोधितशृङ्गवेरशकलाद् द्वे सिन्धुजातात्पले
द्वे कृष्णोपणयोर्निशापलयुगं निक्षिप्य भाण्डे दृढे ॥ १०७ ॥
स्निग्धे धान्ययवादिराशिनिहितं त्रीन्वासरान्वासयेद्
ग्रीष्मे तोयधरात्यये च चतुरो वर्षासु पुष्पागमे ।
षट् शीतेऽष्टदिनान्यतः परमिदं विस्राव्य संचूर्णितै-
श्चातुर्जातपलैः सुसंहितमिदं शुक्तं च चुक्रं तथा ॥ १०८ ॥
हन्याद्वातकफामदोषजनितान्नानाविधानामयान्
दुर्नामानिलशूलगुल्मजठरान्हत्वाऽनलं दीपयेत् ॥ १०९ ॥

मन्दाग्नि में बृहत् चुक-सन्धान—चावल का धोवन एक प्रस्थ, तुष (धान के छिलका) का क्वथित जल एक प्रस्थ, इमली का जल तीन प्रस्थ, दधि आधा प्रस्थ, मूलक आठ पल, गुड़ एक मानी, शोधित अद्रक का टुकड़ा दो मानी, सेन्धा नमक दो पल, पिप्पली तथा मरिच दो पल, हल्दी चार पल—इन द्रव्यों को मिलाकर स्निग्ध तथा दृढ भाण्ड में रखकर, धान्य, यव आदि की राशि में तीन दिन तक रक्खे। बुद्धिमान् व्यक्ति ग्रीष्म तथा वर्षा के अन्त में तीन दिन, वर्षा ऋतु में चार दिन, वसन्तऋतु में छः दिन, शीतऋतु में आठ दिन रक्खे। इसके बाद छानकर चातुर्जात ( त्वक्, इलायची, तेजपत्र, नागकेशर ) के चूर्ण को मिला दे। यह शुक्त-चुक सिद्ध हो जाता है। यह वात, कफ तथा आम दोषजनित अनेक प्रकार के रोगों को तथा दुर्नाम ( अर्श ), वातशूल, गुल्म तथा जठररोग को नाश कर अग्नि को प्रदीप्त करता है ॥ १०७–१०९ ॥

लवङ्गासवः—

लवङ्गपिप्पलीलोहमरिचं सैलवालुकम् ।
द्विपलांशं जलस्यैतच्चतुर्द्रोणे विपाचयेत् ॥ ११० ॥
द्रोणशेषे रसे तस्मिन्पूते शीते प्रदापयेत् ।
गुडस्य द्विशतं तिष्ठेत्तत्सर्वं घृतभाजने ॥ १११ ॥
पक्षादूर्ध्वं रसे जाते दद्यान्मात्रां यथाबलम् ।
अस्याभ्यासादरिष्टस्य गुदजा यान्ति संक्षयम् ॥ ११२ ॥
ग्रहणीपाण्डुहृद्रोगप्लीहगुल्मोदरापहः ।
अरुचिकुष्ठशोफघ्नो बलवर्णाग्निवर्धनः ॥ ११३ ॥
सद्यः क्षयहरोऽरिष्टः कामलाश्वित्रनाशनः ।
कृमिग्रन्थ्यर्बुदव्यङ्गराजयक्ष्मज्वरान्तकृत् ॥ ११४ ॥

लवंगासव—लवंग, पिप्पली, लोह ( मंजीठ ), मरिच, एलवालु—दो २ पल, इन द्रव्यों को चार द्रोण जल में क्वाथ करे। एक द्रोण शेष छाने हुए शीत क्वाथ में गुड़ दो सौ पल मिलाकर सब को घृत के वर्तन में रक्खे। एक

पक्ष के बाद आसव सिद्ध हो जाने पर बल के अनुसार मात्रापूर्वक पान कराये। इस अरिष्ट के प्रयोग से गुदज (अर्शरोग) नष्ट हो जाते हैं। यह अरिष्ट ग्रहणी, पाण्डु, हृद्रोग, प्लीहा, गुल्म तथा उदररोगों को नाश करता है। अरुचि, कुष्ठ तथा शोफ का नाश करनेवाला है, बल तथा वर्ण को बढ़ानेवाला है। शीघ्र ही क्षय को दूर करता है, कामला तथा श्वित्र को नष्ट करता है। कृमि ग्रन्थि ( पलक वर्त्म तथा शुक्ल भाग में होनेवाला रोग ) या नीलिका, व्यङ्ग (छाही), राजयक्ष्मा तथा ज्वर का अन्त करता है ॥ ११०–११४ ॥

प्लीह्नि रोहीतकासवः—

रोहीतकशतमेकं क्वथितं द्रोणे चतुर्थशेषे तु।
तस्मिन्गुडशतमेकं योज्यं शेषैः सुचूर्णितैरभिः ॥ ११५ ॥
पलमेक त्रिफलाया देयं त्रिपल च धातकीपुष्पात्।
पलिकं च पञ्चकोलाद् घृतभाण्डे स्थापयेत्पक्षम् ॥ ११६ ॥
ज्वरगुल्मार्शःप्लीहरुगस्थिग्रहपाण्डुरोगघ्नः ।

प्लीहारोग में रोहीतकासव—रोहीतक ( रोहेड़ा ) एक सौ पल एक द्रोण जल में पकाने से चतुर्थांश शेष क्वाथ में एक सौ पल गुड मिला दे और त्रिफला एक पल, धाय का फूल तीन पल, पञ्चकोल ( पिप्पली, पिपरामूल, चव्य, चित्रक, सोंठ )—एक पल—इन द्रव्यों के चूर्ण को मिलाकर घृत के भाण्ड में एक पक्ष तक रक्खे। यह अरिष्ट ज्वर, गुल्म, अर्श, प्लीहारोग, अस्थिग्रह ( हड्डियों का जकड़ना ) तथा पाण्डु रोग को नाश करनेवाला है ॥

अर्शस्सु गण्डिकाद्रोणः—

दद्यात्सलिलद्रोण कृतमन्थेक्षुगण्डिकाद्रोणम् ॥ ११७ ॥
धान्ययवानीदीप्यकपृथ्वीकाश्चेति कुडवांशाः।
द्विपलीनाः स्युर्देयास्तेजस्वतीचव्यचित्रकाजाज्य. ॥ ११८ ॥
मधुनः कुडवं दत्त्वा घृतरूढे भाजने स्थाप्यः।
एष काञ्जिकराजो लवणयुतः कटतृणार्द्रकसुगन्धः ॥ ११९ ॥
दशरात्रात्पातव्यः सलिल च पुनः पुनर्देयम्।
अर्शोभगन्दरगदग्रहणीमेदःप्रमेहदोषांश्च ॥ १२० ॥
नाशयति सेव्यमानो वह्निकरो गण्डिकाद्रोणः।

अर्शरोग में गण्डिका द्रोण—जल एक द्रोण, कृतमन्थेक्षुगण्डिका ( गन्ने का रस ) एक द्रोण, धनिया, अजवायन, अजमोदा, बड़ी इलायची एक-एक कुडव ( चार पल ), तेजबल, चव्य, चित्रक, स्याहजीरा—दो २ पल, मधु एक कुडव ( चार पल )—इन द्रव्यों को एकत्र कर घृतलिप्त, गन्धतृण, अद्रक आदि गन्ध द्रव्यों के लेप से सुगन्धित भाण्ड में भरकर सेन्धानमक मिलाकर

दशरात्रि रक्खे। दशरात्रि बाद, इस काञ्जिकराज को पान करे, पान करते समय प्रत्येक बार जल मिला ले।

यह गण्डिकाद्रोण, सेवन करने से अर्श रोग, भगन्दररोग, ग्रहणीदोष, मेदोरोग तथा प्रमेहरोग को नाश करता है और जाठराग्नि को प्रदीप्त करता है।

कुष्ठे खदिरासवः—

खदिरस्य तुलार्धं तु तत्तुल्यं देवदार्वपि ॥ १२१ ॥
वराया विंशतिर्दार्व्याः पलानां पञ्चविंशतिम्।
वाकुच्या द्वादशपलान्यष्टद्रोणेऽम्भसः पचेत् ॥ १२२ ॥
द्रोणशेषे कषाये तु पूते शीते विनिक्षिपेत्।
माक्षिकस्य शतद्वन्द्वं धातक्याः पलविंशतिम् ॥ १२३ ॥
शर्करायास्तुलामेकां चूर्णानीमानि दापयेत्।
कक्कोलकं लवङ्गं च ह्येला जातीफलं त्वचम् ॥ १२४ ॥
केसरं मरिचं पत्रं पलिकान्युपकल्पयेत्।
कुडवं पिप्पलीनां तु स्थापयेद् घृतभाजने ॥ १२५ ॥
मासादूर्ध्वं पिबेन्मात्रामपेक्ष्याग्निबलाबलम्।
सर्वकुष्ठहरो ह्येष पाण्डुहृद्रोगकासनुत् ॥ १२६ ॥
कृमिग्रन्थ्यर्बुदग्रन्थिगुल्मप्लीहोदरान्तकृत्।
एष वै खदिरारिष्टः कृष्णात्रेयेण पूजितः ॥ १२७ ॥

कुष्ठरोग में खदिरासव—खदिर आधा तुला, देवदारु आधा तुला, वरा (त्रिफला) बीस पल, दारुहल्दी पच्चीस पल, बाकुची बारह पल—इन द्रव्यों को आठ द्रोण जल में पकावे। एक द्रोण अवशिष्ट क्वाथ को छानकर शीत होने पर माक्षिक 'मधु' दो सौ पल, धाय का फूल पच्चीस पल, शर्करा एक तुला मिला दे और कंकोल (शीतलचीनी), लवंग, इलायची, जायफर, दालचीनी, नागकेशर, मरिच, तेजपत्र—एक २ पल, पिप्पली एक कुड़व—इन द्रव्यों के चूर्ण को मिलाकर घृतस्निग्ध भाण्ड में अनुसन्धान कर एक मास तक रक्खे। एक मास के बाद अग्नि तथा बलाबल को देखकर उचित मात्रा में पान करे। कृष्णात्रेय से प्रशंसित यह खदिरारिष्ट सभी प्रकार के कुष्ठ को दूर करता है। पाण्डु, हृद्रोग तथा कास को दूर करता है। कृमिग्रन्थि, (वर्त्मगत रोग) अर्बुदग्रन्थि, गुल्म, प्लीहा तथा उदररोग को नाश करता है ॥ १२१-१२७ ॥

कुष्ठे द्वितीयः खदिरारिष्टः—

खदिरस्य तुलामम्भसि विपचेच्चतुर्द्रोणसंमिते शेषम्।

पादं विगृह्य शीते दद्यान्मधुनस्तुलां सार्धाम् ॥ १२८ ॥
वस्त्रविपूते चूर्णं व्योपत्रिफलापिण्डखर्जूरी- ।
स्वर्णत्वग्बाकुचिकामृताविडङ्गपलांशानाम् ॥ १२९ ॥
धातकीं दशपलां दत्त्वा प्रविलोडितं नित्यम् ।
यावत्षोडशदिवसाः पोडशके मधुतुलां दद्यात् ॥ १३० ॥
मासात्परतः पेयो दत्त्वा मृगनाभिमापकं पटे बद्धम् ।
कर्पूरमापद्वयमेप खदिरासवो महाकुष्ठे ॥ १३१ ॥

कुष्ठरोग मे द्वितीय खदिरारिष्ट—खदिर एक तुला चार द्रोण जल में पकावे एक द्रोण शेप क्वाथ को छानकर शीत होने पर, मधु डेढ़ तुला, व्योप ( सोंठ, पीपर, मरिच ), त्रिफला, पिण्डखजूर ( छोहाड़ा ), स्वर्ण, दालचीनी, बाकुची, गुडूची, विडंग—एक २ पल—इन द्रव्यों के चूर्ण को तथा धाय के फूल दश पल मिलाकर सोलह दिन तक चलावे। सोलहवें दिन एक तुला मधु देकर, एक मास रखने के बाद छानकर कस्तूरी कपड़ा में बांधकर छोड दे, तथा कपूर दो मासा मिला दे। इस खदिरासव को महाकुष्ठ रोग में पान करना चाहिए ॥१२८–१३१॥

क्षयरोगे बब्बूल्यासवः—

तुलाद्वयं तु बब्बूल्याश्चतुर्द्रोणेऽम्भसः पचेत् ।
द्रोणशेषे रसे शीते गुडस्य त्रिशत क्षिपेत् ॥ १३२ ॥
धातक्याः प्रस्थमेकं तु पिप्पलीनां पलद्वयम् ।
जातीलवङ्गकङ्कोलमेलात्वक्पत्रकेसरम् ॥ १३३ ॥
मरिचेन समायुक्तं पलिकं तत्र कल्पयेत् ।
मासमात्रं स्थितो ह्येप बब्बुल्यासबसंज्ञितः ॥ १३४ ॥
क्षयं कुष्ठं प्रमेहांश्च कासश्वासांश्च नाशयेत् ।

क्षयरोग में बब्बूल्यासव—बब्बूल की छाल दो तुला जल चार द्रोण में पकावे, एक द्रोण शेष शीत क्वाथ में गुड़ तीन सौ पल छोड़ दे तथा धाय का फूल एक प्रस्थ, पिप्पली दो पल, जायफर, लवग, कंकोल ( शीतलचीनी ), इलायची, दालचीनी, तेजपत्र, नागकेशर, मरिच—एक २ पल के चूर्ण मिला कर संधान करे, एक मास तक रखने के बाद सिद्ध यह बब्बूल्यासव नामक आसव, क्षय, कुष्ठ, प्रमेह कास तथा श्वास को नाश करता है ॥

क्षयरोगे पुष्करमूलासवः—

तुलां पुष्करमूलस्य तदर्धं तु दुरालभा ॥ १३५ ॥
तदर्धेन तु धान्याकं व्योषाच्च पलविंशतिः ।
मञ्जिष्ठाकुष्ठमरिचं कपित्थं देवदारु च ॥ १३६ ॥

विडङ्गं चविका रोध्रं पिप्पलीमूलमेव च।
काश्मर्यं च तथोशीरं रास्ना भार्ङ्गी च नागरम् ॥ १३७ ॥
एषां द्विपलिकान्भागांश्चतुर्द्रोणेऽम्भसः पचेत्।
द्रोणशेषे कषाये तु पूते शीते प्रदापयेत् ॥ १३८ ॥
गुडस्य त्रिशतं तत्र धातक्याः पलविंशतिम्।
मरिचं केसरं श्यामासेलात्वक्पत्रकं पलम् ॥ १३९ ॥
कुडवं पिप्पलीनां तु चूर्णीकृत्य प्रदापयेत्।
घृतभाण्डे स्थित मासं पिबेन्मात्रां यथाबलम् ॥ १४० ॥
क्षयापस्मारकासासृक्शोफगुल्मभगन्दरान्।
पुष्करासव इत्येष प्रयोगादेव नाशयेत् ॥ १४१ ॥

क्षयरोग में पुष्करमूलासव—पुष्करमूल एक तुला, दुरालभा ( धमासा ) आधा तुला, धनिया चौथाई तुला तथा त्र्योष ( सोंठ, पीपर, मरिच ) पच्चीस पल, मजीठ, कूठ, मरिच, कपित्थ ( कैथ ), देवदारु, विडंग, चव्य, लोध्र, पिपरामूल, गम्भारी, खस, रास्ना, भांगरा, सोंठ—इन द्रव्यों को दो २ पल लेकर चार द्रोण जल में पकावे। एक द्रोण शेष क्वाथ को छानकर ठंढा होने पर गुड़ तीन सौ पल, धाय के फूल पच्चीस पल, मरिच, नागकेशर, कालानिशोथ, इलायची, दालचीनी, तेजपत्र—एक २ पल, पिप्पली एक कुडव—इन द्रव्यों को चूर्ण कर मिला दे और घृत के पात्र में संधान कर एक मास तक रक्खे। इसको बल के अनुसार उचित मात्रा में पान करे। यह पुष्करासव, प्रयोग करने मात्र से ही क्षय, अपस्मार, कास, रक्त, शोफ गुल्म तथा भगन्दर को नाश करता है ॥ १३५–१४१ ॥

क्षयरोगे माचिकासवः—

माचिकायाः शतार्धं तु द्रोणेऽपां च विपाचयेत्।
तस्मिंश्चतुर्थशेषे तु पूते शीते प्रदापयेत् ॥ १४२ ॥
गुडस्य द्विशतं दत्त्वा तत्सर्वं घृतभाजने।
विडङ्गपिप्पलीकृष्णात्वगेलापत्रकेसरैः ॥ १४३ ॥
मरिचैश्च तथा चूर्णं सम्यक्कृत्वा विचक्षणः।
क्षिपेच्च पालिकैर्भागैर्घटनीयं समन्ततः ॥ १४४ ॥
ततो यथाबलं पीत्वा कासश्वासगलामयान्।
हन्ति यक्ष्माणमत्युग्रमुरःसन्धानकारकः ॥ १४५ ॥
माचिकासव इत्येष ब्रह्मणा निर्मितः पुरा।

क्षयरोग मे माचिकासव—माचिका ( मकोय ) पचास पल, जल एक द्रोण में पकावे चौथाई शेष क्वाथ को छान कर शीतल होने पर गुड़ दो सौ

पल, विडंग, पिप्पली, कृष्णा ( मंगरैल ), दालचीनी, इलायची, तेजपत्र, नागकेशर, मरिच—एक २ पल—इन द्रव्यों का अच्छी तरह चूर्ण बनाकर तथा सभी द्रव्यों को एकत्र कर घृत के भाण्ड में छोड़ दे तथा सभी प्रकार से संघटित करे। इसके बाद बल के अनुसार पान करे। यह आसव कास, श्वास तथा कण्ठ रोग को नाश करता है। पहले समय में ब्रह्मा का बनाया हुआ यह माक्षिकासव, अति भयंकर यक्ष्मा को नाश करता है तथा उरःसंधान, ( फुफ्फुसगत-व्रण संधान ) कारक है॥

शोफे पुनर्नवासवः—

पुनर्नवे द्वे च पले सपाठे दन्तीं गुडूचीं सह चित्रकेण।
निदिग्धिकां च त्रिपलां विपाच्य द्रोणावशेषे सलिले ततस्तु॥१४६॥
पूत्वा रस द्वे च तुले पुराणाद् गुडान्मधुप्रस्थयुतं सुशीते।
मासं निदध्याद् घृतभाजनस्थं पल्ले यवानां परतश्च मासात्॥१४७॥
चूर्णीकृतैरर्धपलांशकैस्तं हेमत्वगेलामरिचाम्बुपत्रैः।
गन्धान्वितं क्षौद्रघृतप्रदिग्धं जीर्णे पिबेद् व्याधिबलं समीक्ष्य॥१४८॥
हृत्पाण्डुरोगं श्वयथुं प्रवृद्धं प्लीहभ्रमारोचकमेहगुल्मान्।
भगन्दरार्शोजठराणि कासश्वासग्रहण्यामयकुष्ठकण्डूः॥१४९॥
शाखानिलं बद्धपुरीषतां च हिक्कां किलासं च हलीमकं च।
क्षिप्रं जयेद्वर्णबलायुरोजस्तेजोन्वितो मांसरसान्नभोजी॥१५०॥

शोफरोग में पुनर्नवासव—दोनों पुनर्नवा (श्वेतगदहपूरना, रक्तगदहपूरना), दो पाठा—दो २ पल, दन्तीमूल, गुडूची, चित्रक, निदिग्धिका ( रेंगनी ) तीन २ पल—इन द्रव्यों को चार द्रोण जल में पकावे, एक द्रोण शेष क्वाथ को छानकर शीत होने पर पुराना गुड़ दो तुला, मधु एक प्रस्थ मिलाकर घृतलिप्त घड़े में रख मुंह बन्द कर एक मास तक यव की राशि में रक्खे। एक माह बाद छानकर हेम ( नागकेशर ), दालचीनी, छोटी इलायची, मरिच, अम्बु ( सुगन्धवाला ), तेजपत्र आधा पल—इन द्रव्यों के चूर्ण से सुगन्धित बनाकर मधु-घृतभावित पात्र मे रक्खे। इसके बाद, रोग-बल के अनुसार मात्रा मे भोजन के पच जाने के बाद सेवन करे और सेवनकाल में मांसरस के साथ अन्न का सेवन करे। यह अरिष्ट सेवन करने से हृदयरोग, पाण्डुरोग, तीव्र शोथ, प्लीहा. भ्रम, अरोचक, प्रमेह, गुल्मरोग, भगन्दर, अर्श, जठररोग, कास, श्वास, ग्रहणीरोग, कुष्ठ, कण्डू, शाखागत वातविकार, विबन्ध, हिचकी, किलास नामक कुष्ठ तथा हलीमक को दूर करता है। सेवन करनेवाला वर्ण, बल, आयु तथा तेज से युक्त होता है॥ १४६–१५०॥

विमर्श—चरक के अनुसार 'पले' के स्थान में 'बले' पाठ है उनके मत से

दोनों बला ( बरियारा, तथा ककही ) लेते हैं और सभी द्रव्यों की मात्रा तीन पल है। घृत भावित तथा क्षौद्र-घृतभावित भाण्ड का दो वार विधान आया है,प्रथम वार क्वाथ्य तथा प्रक्षेप द्रव्याधान के लिये, द्वितीय वार सुगन्धित द्रव्याधान के लिये। अतः प्रथम संधान काल एक साल का तथा द्वितीय एक सप्ताह का मानना चाहिए। क्योंकि अरिष्ट किसी द्रव्य को मिलाकर पीने का कहीं भी विधान नहीं है और क्वाथ अनिर्णीत काल तक रखने से पूति-सड़न होने की सम्भावना है। अतः एक सप्ताह के बाद पुनः छान कर बोतल में रख लेनी चाहिए।

शोफे त्रिफलारिष्टः—

फलत्रयं पिप्पलिचित्रकौ च सदीप्यक लोहरजो विडङ्गम् ।
चूर्णीकृतं कौडविकं, द्विरंश क्षौद्रं, पुराणस्य तुलां गुडस्य ।
मासं निदध्याद् घृतभाजनस्थं यवेषु तानेव निहन्ति रोगान् ॥१५१॥

शोफरोग में त्रिफलारिष्ट—त्रिफला ( आंवला, हर्रे, बहेड़ा ), पीपर, चित्रक, अजमोदा, लौहभस्म, विडंग—एक कुडव—इन द्रव्यों के चूर्ण को चौगुने जल में क्वाथ कर चौथाई शेष रहने पर कपड़े से छान ले। शीत होने पर दो कुडव मधु एक तुला गुड़ मिलाकर मुख बन्द कर एक मास तक यव की राशि में रक्खे। एक मास के बाद प्रयोग में लाये। यह अरिष्ट पुनर्नवा अरिष्ट से नाश होनेवाले सभी रोगों को नाश करता है ॥ १५१ ॥

सर्वशोफे वासकासवः—

वासकस्य तुले द्वे तु द्विद्रोणेऽपां विपाचयेत् ।
कृत्वा द्रोणार्धशेषं तु पूते शीते प्रदापयेत् ॥ १५२ ॥
गुडस्यैकां तुलां तत्र धातक्यास्तु पलाष्टकम् ।
क्षिपेच्चूर्णीकृतं तस्मिन् त्वगेलापत्रकेसरम् ॥ १५३ ॥
कङ्कोलव्योषतोयानि पलिकान्युपकल्पयेत् ।
सम्यक्पक्वं ततो ज्ञात्वा पक्षादूर्ध्वं पिबेदमुम् ॥ १५४ ॥
वासकासव इत्येष सर्वश्वयथुनाशनः ।

सभी प्रकार के शोफ ( शोथ ) में वासकासव—अडूसे की जड़ दो तुला, दो द्रोण जल में पकावे आधा द्रोण क्वाथ शेष रहने पर कपड़ा से छान कर शीत होने पर गुड़ एक तुला धाय का फूल आठ पल, तथा दालचीनी, छोटी इलायची, तेजपत्र, नागकेशर, शीतलचीनी, व्योष ( सोंठ, पीपर, मरिच ), तोय ( सुगन्धवाला ), एक २ पल—इन द्रव्यों के चूर्ण को प्रक्षेप कर दे और मुख बन्द कर पन्द्रह दिन तक उष्ण स्थान पर रक्खे। एक पक्ष के बाद अच्छी तरह तैयार होने पर छानकर पान करे। यह श्वास, कास, सभी प्रकार के शोथ रोग को नाश करता है ॥

अर्शस्सु शर्करासवः—

प्रस्थं दुरालभायास्तु चित्रकस्य वृषस्य च ॥ १५५ ॥
पथ्यामलकयोश्चैव पाठाया नागरस्य च ।
दद्याद् द्विपलिकान्भागाञ्जलद्रोणे विपाचयेत् ॥ १५६ ॥
पादशेषे रसे पूते सुशीते शर्कराशतम् ।
दत्त्वा कुम्भे दृढे स्थाप्यं मासार्धं घृतभाजने ॥ १५७ ॥
प्रलिप्ते पिप्पलीचव्यप्रियङ्गुमधुसर्पिषा ।
तस्य मात्रां पिबेत्काले शार्करस्य यथाबलम् ॥ १५८ ॥
अर्शांसि ग्रहणीरोगमुदावर्तमरोचकम् ।
शकृन्मूत्रानिलोद्गारविबन्धानग्निमार्दवम् ॥ १५९ ॥
हृद्रोगं पाण्डुरोगं च सर्वमेतत्प्रणाशयेत् ।

अर्शरोग में शर्करासव—दुरालभा ( धमासा ) एक प्रस्थ, चित्रक, अडूसा, हर्रे, आंवला, पान, सोंठ—दो २ पल—इन द्रव्यों को एक द्रोण जल में क्वाथ करे, शेष चतुर्थांश भाग को छानकर ठंढा होने पर एक सौ पल शर्करा मिलाकर पिप्पली, चव्य, प्रियंगु, मधु तथा घृत से प्रलिप्त मजबूत मिट्टी के घृतपात्र में मुख बन्द कर आधा मास तक रक्खे। इसके बाद छानकर बोतल मे भर ले और बल के अनुसार मात्रा में समय पर पान करे। यह अरिष्ट अर्श, ग्रहणी रोग, उदावर्त, अरोचक, मल-मूत्र तथा वायु का उद्गार, विबन्ध, अग्निमान्द्य, हृद्रोग तथा पाण्डुरोग आदि सभी रोगों को नाश करता है ॥

ग्रहण्यां द्राक्षासवः—

मृद्वीकायास्तुलामेकां चतुर्द्रोणेऽम्भसः पचेत् ॥ १६० ॥
द्रोणशेषे सुशीते च पूते तस्मिन्प्रदापयेत् ।
द्वे शते क्षौद्रखण्डाभ्यां धातक्याः प्रस्थमेव च ॥ १६१ ॥
कङ्कोलकलवङ्गे च जातीफलमथैव च ।
पलांशकानि मरिचत्वगेलापत्रकेसरम् ॥ १६२ ॥
पिप्पली चित्रकं चव्यं पिप्पलीमूलरेणुकम् ।
घृतभाण्डे स्थितं चेदं चन्दनागुरुधूपिते ॥ १६३ ॥
कर्पूरवासितो ह्येष ग्रहणीदीपनः परः ।
अर्शसां नाशनः श्रेष्ठ उदावर्तास्रपित्तनुत् ॥ १६४ ॥
जठरक्रिमिकुष्ठानि व्रणांश्च विविधांस्तथा ।
अक्षिरोगशिरोरोगगलरोगविनाशनः ॥ १६५ ॥
ज्वरं हन्ति महाव्याधिं पाण्डुरोगं सकामलम् ।
नाम्ना द्राक्षासवो ह्येष बृंहणो बलवर्णकृत् ॥ १६६ ॥

ग्रहणीरोग में द्राक्षासव—मुनक्का एक तुला चार द्रोण जल में पकावे। एक द्रोण शेष रहने पर कपड़ा से छानकर शीत होने पर दो सौ पल मधु तथा शर्करा ( एक सौ पल मधु, एक सौ पल शर्करा ), धाय का फूल एक प्रस्थ, शीतलचीनी, लवंग, जायफर, मरिच, दालचीनी, इलायची, तेजपत्र, नागकेशर, पीपर, चित्रक, चव्य, पिपरामूल, सरभालू के बीज एक २ पल, इन द्रव्यों को चूर्ण बनाकर मिला दे और चन्दन, अगर से धूपित घृत के भाण्ड में एक मास रक्खे उसके बाद छानकर कर्पूर से सुगन्धित कर पान करे। यह ग्रहणी रोग के लिये उत्तम अग्निदीपक है। अर्श को नाश करता है, उदावर्त ( मल-मूत्र तथा वायु का अवरोध और उदरशूल ) तथा रक्तपित्त को दूर करता है। ज्वर, कृमि, कुष्ठ तथा अनेक प्रकार के व्रण को दूर करता है। आंख का रोग, शिरोरोग, तथा गला के रोग को नाश करता है। महाव्याधि ज्वर, पाण्डु तथा कामला ( पीलिया ) को नाश करता है। यह द्राक्षासव नामक अरिष्ट शरीर को मोटा करने वाला बृंहण तथा बल, वर्ण को देने वाला है ॥ १६०–१६६ ॥

अर्शसि द्वितीयो द्राक्षासवः—

द्राक्षापलशतं दत्त्वा चतुर्द्रोणेऽम्भसः पचेत् ।
द्रोणशेषे रसे तस्मिन् पूते शीते प्रदापयेत् ॥ १६७ ॥
शर्करायास्तुलां दत्त्वा तत्तुल्यं मधुनस्तथा ।
पलानि सप्त धातक्याः स्थापयेदाज्यभाजने ॥ १६८ ॥
जातीलवङ्गकक्कोललवलीफलचन्दनम् ।
कृष्णां त्रिगन्धसंयुक्तां भागानर्धपलांशकान् ॥ १६९ ॥
त्रिःसप्ताहाद्भवेत्पेयस्तस्य मात्रा यथाबलम् ।
नाम्ना द्राक्षासवो ह्येष नाशयेद् गुदकीलकान् ॥ १७० ॥
शोफारोचकहृत्पाण्डुरक्तपित्तभगन्दरान् ।
गुल्मोदरकृमिग्रन्थिक्षतशोषज्वरान्तकृत् ॥ १७१ ॥
वातपित्तप्रशमनः शस्तश्च बलवर्णकृत् ।

अर्शरोग में द्वितीय द्राक्षासव—मुनक्का सौ पल चार द्रोण जल में पकावे एक द्रोण क्वाथ को छानकर शीत होने पर शर्करा एक तुला, मधु एक तुला, धाय का फूल सात पल—इन सभी द्रव्यों को एकत्र कर घृतस्निग्ध घड़े में रक्खे और उसमें जायफर, लवंग, शीतलचीनी, लवलीफल ( हर्फारेवड़ी ), चन्दन, पीपर, त्रिगन्ध ( इलायची, दालचीनी, तेजपत्र ) आधा २ पल—इन द्रव्यों के चूर्ण को मिला दे। और मुह बन्द कर तीन सप्ताह तक रक्खे। इसके बाद पान करने योग्य हो जाता है। बल के अनुसार इसको मात्रा से पान करे। यह द्राक्षासव नामक आसव अर्श के अंकुरों को तथा शोफ, अरोचक,

हृद्रोग, पाण्डुरोग, रक्तपित्त तथा भगन्दर का नाश करता है। गुल्मरोग, उदररोग, कृमिग्रन्थि, ( वर्त्म तथा शुक्लगत नेत्ररोग ), क्षत, सूखारोग तथा ज्वर को दूर करने वाला है। वातपित्त को शान्त करने वाला तथा बल, वर्ण को देने वाला है॥

ग्रहण्यां बीजकासवः—

बीजकात्प्रस्थमेकं तु त्रिफलायाश्च विंशतिः॥ १७२॥
द्राक्षायाः पञ्च लाक्षायाः सप्त द्रोणे तथाऽम्भसि।
साध्यं पादावशेषे च पूतशीते प्रदापयेत्॥ १७३॥
शर्करायास्तुलां प्रस्थं क्षौद्रं दद्याच्च कार्षिकम्।
व्योषव्याघ्रनखोशीरं क्रमुकं सैलवालुकम्॥ १७४॥
मधुकं कुष्ठमित्येतच्चूर्णितं घृतभाजने।
यवेषु दशरात्रस्थं ग्रीष्मे, द्विः शिशिरे स्थितम्॥ १७५॥
पिबेत्तद्ग्रहणीपाण्डुरोगार्शःशोफगुल्मनुत्।
मूत्रकृच्छ्राश्मरीकुष्ठकामलासन्निपातनुत्॥ १७६॥

ग्रहणीरोग मे बीजकासव—बीजक ( विजयसार ) एक प्रस्थ, त्रिफला ( हर्रे, बहेड़ा, आंवला ) बीस पल, मुनक्का पांच पल, लाक्षा सात पल, एक द्रोण जल में पकावे, चौथाई भाग शेष क्वाथ को छान शीत होने पर शर्करा एक तुला, मधु एक प्रस्थ, तथा व्योष, ( सोंठ, पीपर, मरिच ), व्याघ्रनख, खश, सुपारी, एलवालु, मुलेठी, कूठ—एक २ कर्ष इन द्रव्यों के चूर्ण को मिलाकर घृतभावित भाण्ड मे भरकर यव की राशि मे गर्मी के दिन में दश दिन तथा शिशिर मे बीस दिन तक रक्खे और सिद्ध हो जाने पर पान करे। यह बीजकासव ग्रहणी रोग, पाण्डुरोग, अर्श तथा गुल्म रोग को दूर करता है। और मूत्रकृच्छ्र, पथरी, कुष्ठ, कामला तथा सन्निपात को नाश करता है॥१७२–१७६॥

अर्शसि पीलवासवः—

द्रोण पीलुरसस्य वस्त्रगलित न्यस्त हविर्भाजने
युञ्जीत द्विपलैर्मदामधुफलाखर्जूरधात्रीफलैः।
पाठामाद्रिदुरालभाम्लविदुलव्योषत्वगेलोल्लकैः
स्पृक्काकोलतवङ्गवेल्लचपलामूलाग्निकैः पालिकैः॥ १७७॥
गुडशतविनियोजितं निवाते निहितमिदं प्रपिबेच्च पक्षमात्रात्।
प्रशमयति गुदाङ्कुरान्सगुल्माननलबलं प्रबलं च संविधत्ते॥ १७८॥

अर्शरोग मे पीलवासव—पीलुका ( पीलु वृक्ष की छाल को कूटकर वस्त्र से छान ), एक द्रोण रस लेकर घृत के भाण्ड मे रक्खे और उसमें धाय का फूल, मधुफल ( महुआ ), खजूर, आंवला—दो २ पल, पाठा ( पाढी ), माद्रि

( पिप्पली ), दुरालभा ( धमासा ), अम्लविदुल ( अम्लवेत ), व्योष ( सोंठ, पीपर, मरिच ), दालचीनी, इलायची, उशक ( ढेरा ), स्पृक्का ( गठिवन—सुगन्धित द्रव्य विशेष ), चैर, लवंग, देश ( वायविडंग ), चपलामूल (पिपरा-मूल ), अग्निक ( चित्रक )—एक २ पल—इन द्रव्यों का चूर्ण मिला दे और एक सौ पल गुड़ मिलाकर मुह बन्द कर बन्द स्थान पर एक पक्ष ( पन्द्रह दिन ) तक रक्खे उसके बाद छानकर पान करें। यह अर्शांकुरों तथा गुल्म रोगों को शान्त करता है और अग्नि-बल को तीव्र बनाता है ॥ १७७-१७८ ॥

रक्तपित्ते उशीरासवः—

उशीरं पद्मकं रोध्रं प्रियगुं नीलमुत्पलम् ।
प्रपौण्डरीकं काश्मरी ह्रीवेरं धन्वयासकम् ॥ १७९ ॥
सेव्यं किराततिक्तं च पटोलं काञ्चनारकम् ।
पद्मं शाल्मलिनिर्यासं न्यग्रोधोदुम्बरं शटी ॥ १८० ॥
मञ्जिष्ठा पर्पटं जम्ब्वर्भागानेषां पलोन्मितान् ।
सूक्ष्मचूर्णीकृतान् दद्याद् द्राक्षायाः पलविंशतिम् ॥ १८१ ॥
धातक्याः प्रस्थमेकं तु तोयद्रोणे विनिक्षिपेत् ।
शर्करायास्तुलां दत्त्वा माक्षिकस्य तुलां तथा ॥ १८२ ॥
उशीरासव इत्येष रक्तपित्तविनाशनः ।
पाण्डुकुष्ठप्रमेहार्शःकृमिशोफहरस्तथा ॥ १८३ ॥

रक्तपित्त में उशीरासव—उशीर ( खश ), पद्मकाठ, पठानी लोध, प्रियंगु ( फूलप्रियंगु ), नीलकमल फूल, प्रपौण्डरीक, गम्भारी, [1]हाऊवेर ( नेत्रवाला ), धमासा, सेव्य ([2]खस), किराततिक्तक (चिरायता), पटोलपत्र, कांचनार की छाल, श्वेत कमल का पुष्प, सेमर का गोंद, न्यग्रोध ( वटांकुर ), गूलर, कपूरकचरी, मंजीठ, पित्तपापड़ा तथा जामुन की गुठली—एक २ पल—इन द्रव्यों के सूक्ष्म चूर्ण, मुनक्का बीसपल, धाय का फूल एक प्रस्थ—इन सभी द्रव्यों को एक द्रोण जल में छोड़ दे और उसमें शर्करा एक तुला तथा मधु एक तुला मिलाकर घृतलिप्त भाण्ड में भरकर एक मास तक उष्ण स्थान में रक्खे। एक मास बाद छान ले। यह उशीरासव रक्तपित्त को नाश करने वाला है। पाण्डुरोग, कुष्ठरोग, प्रमेह, अर्श, कृमि तथा शोथ को दूर करता है ॥ १७९-१८३ ॥

श्वासकासयोस्त्रायमाणासवः—

त्रायन्ती कट्फलं दन्ती पौष्कर कण्टकारिका ।
दुरालभाऽञ्जनं सिंही पिप्पलीमूलमेव च ॥ १८४ ॥

---

१. नेत्रवाला ।

२. भैषज्यरत्नावल्यां सेव्य-स्थाने-पाठा-इति पठितम् ।

धात्री कृमिहरं भार्ङ्गी माचिका चैलवालुकम् ।
पथ्या शटी विशाला च भागानष्टपलोन्मितान् ॥ १८५ ॥
चतुर्द्रोणेऽम्भसः पक्त्वा शृतं द्रोणावशेषितम् ।
शतत्रयं माक्षिकस्य धातक्याः पलत्रिंशतिम् ॥ १८६ ॥
श्यामापलानि चत्वारि ह्येलात्वक्पत्रकेसरम् ।
भागान्द्विपलिकानेषां चूर्णं कृत्वा विनिःक्षिपेत् ॥ १८७ ॥
त्रायमाणासवो ह्येष कासश्वासामयप्रणुत् ।
पाण्डुहृद्रोगगुल्मार्शःसन्निपातज्वरापहः ॥ १८८ ॥

श्वास तथा कास में त्रायमाणासव—त्रायमाणा, कायफर, दन्तीवृक्ष, पुष्करमूल, बड़ी कटेरी, धमासा, अञ्जन, सिंही ( छोटी कटेरी ), पिपरामूल, आंवला, विडंग, भांगरा, माचिका ( मकोय ), एलवालु, हर्रे, कपूरकचरी, इन्द्रायण—आठ २ पल—इन द्रव्यों के चूर्ण को चार द्रोण जल में पकाकर एक द्रोण अवशेष क्वाथ में मधु तीन सौ पल, धाय का फूल बीस पल, काला निशोथ चार पल, इलायची, दालचीनी, तेजपत्र नागकेशर दो पल—इन द्रव्यों के चूर्ण को छोड़ दे, और घृतलिप्त भाण्ड में भरकर मुह बन्द कर उष्ण स्थान में एक मास तक रक्खे। एक मास बाद निकाल कर छान ले। यह त्रायमाणासव कास तथा श्वास रोग को दूर करता है और पाण्डुरोग, हृद्रोग, गुल्म, अर्श तथा सन्निपात ज्वर को नष्ट करता है ॥ १८४–१८८ ॥

गुल्मे चविकासवः—

तुलार्धं चविकायास्तु तदर्धं चित्रकस्य च ।
वाष्पिका पौष्करं मूलं षड्ग्रन्था हपुषा शटी ॥ १८९ ॥
पटोलमूलत्रिफलायवानीकुटजत्वचः ।
विशाला धान्यकं रास्ना दन्ती दशपलोन्मिताः ॥ १९० ॥
कृमिघ्नमुस्तमञ्जिष्ठादेवदारुकटुत्रिकात् ।
भागान्पञ्चपलानेतानष्टद्रोणेऽम्भसः पचेत् ॥ १९१ ॥
द्रोणशेषे सुशीते च देयं गुडशतत्रयम् ।
धातक्या विंशतिपलं चातुर्जातपलाष्टकम् ॥ १९२ ॥
लवङ्गव्योषकङ्कोलं पलिकानि प्रकल्पयेत् ।
निदध्यान्माससेकं तु घृतभाण्डे सुसंस्कृते ॥ १९३ ॥
चतुष्पलां पिबेन्मात्रां प्रातः पीतो नियच्छति ।
सर्वान्गुल्मविकारांश्च प्रमेहांश्चैव विंशतिम् ॥ १९४ ॥
प्रतिश्यायं क्षयं कासमष्ठीला वातशोणितम् ।
उदराण्यन्त्रवृद्धिं च चविकाख्यो महासवः ॥ १९५ ॥

गुल्मरोग में चविकासव—चव्य आधा तुला ( पचास पल ), चित्रक पच्चीस पल, वाप्पिका ( नाडी हिंगु ), पुष्करमूल, पड्ग्रन्था ( वच ), ह्राऊवेर, कपूरकचरी, परोरा की जड़, त्रिफला ( हर्र, वहेड़ा, आंवला ), अजवायन, कोरैया की छाल, इन्द्रायण, धनिया, रास्ना, दन्तीमूल—दश २ पल, विडंग, मोथा, मंजीठ, देवदारु, कटुत्रिक ( सोंठ, पीपर, मरिच )—पांच २ पल—इन द्रव्यों के चूर्ण को आठ द्रोण पानी में पकावे, एक द्रोण शेष क्वाथ को छानकर शीत होने पर गुड तीन सौ पल, धाय का फूल बीस पल, चातुर्जात ( दालचीनी, इलायची, तेजपत्र, नागकेशर ) आठ पल, लवंग, व्योष ( सोंठ, पीपर, मरिच ), कंकोल (शीतलचीनी)—एक २ पल—इन द्रव्यों के चूर्ण को मिलाकर सुगन्धित द्रव्यों से संस्कृत घृतस्निग्ध भाण्ड में भरकर एक मास तक उष्ण स्थान में रक्खे। एक मास बाद छानकर चार पल की मात्रा में प्रातः काल पान करे। यह महाचविका आसव सभी प्रकार के गुल्मविकारों को, बीस प्रकार के प्रमेह, प्रतिश्याय, क्षय, कास, अष्ठीला ( अष्ठीलावृद्धि ), वातरक्त, आठ प्रकार के उदररोग तथा आन्त्रवृद्धि को दूर करता है ॥ १८९–१९५ ॥

ग्रहण्या मूलासवः—

द्विपञ्चमूलरजनीजीवकर्षभजीरकम् ।
पृथक्पञ्चपलैर्भागैश्चतुर्द्रोणेऽम्भसः पचेत् ॥ १९६ ॥
द्रोणशेषे रसे पूते गुडस्य द्विशतं तथा ।
चूर्णितान्कुडवार्धांशान्दत्त्वा चात्र समाक्षिकान् ॥ १९७ ॥
प्रियङ्गुमुस्तमञ्जिष्ठाविडङ्गमधुकप्लवान् ।
रोध्रं सावरकं चैव मासार्धं स्थापयेद् भृशम् ॥ १९८ ॥
एष मूलासवः सिद्धो दीपनो रक्तपित्तहा ।
आमहृत्कफहृद्रोगपाण्डुरोगाङ्गसादनुत् ॥ १९९ ॥

ग्रहणीरोग में मूलासव—दोनों पंचमूल ( बिल्व, गम्भारी, स्योनाक, पाढल, अरणी, शालपर्णी, पृश्निपर्णी वनभंटा, रंगनी, गोखरू ), हल्दी, जीवक, ऋषभक, स्याहजीरा—अलग २ पांच २ पल—इन द्रव्यों के यवकुट चूर्ण को चार द्रोण जल में पकावे। एक द्रोण शेष क्वाथ को छानकर उसमें गुड दो सौ पल, मधु आधा कुडव, प्रियंगु, मोथा, मंजीठ, विडंग, मधुक (मुलेठी), प्लव ( केवटी मोथा ), लोध्र, सावरक—आधा २ कुडव (दो २ पल)—इन द्रव्यों के चूर्ण को घृतस्निग्ध भाण्ड में भरकर मासार्द्ध ( पन्द्रह दिन ) तक उष्ण स्थान में रक्खे और पन्द्रह दिन बाद छान ले। यह सिद्ध मूलासव दीपन, अग्नि को प्रदीप्त करने वाला—तथा रक्तपित्त को नाश करने वाला है और आमदोषजन्य

हृद्रोग, कफजन्य हृद्रोग; पाण्डुरोग तथा अंगसाद को दूर करता है ॥ १९६–१९९ ॥

क्षयरोगे वृहन्मूलासवः—

महावृक्षवटार्काणां विना मूलैः परैः शुभैः ।
अष्टोत्तरशतैरम्भस्त्रिशद्घटमितं पचेत् ॥ २०० ॥
तुलात्रयप्रमाणं च दशमूल्यास्तथैव च ।
अष्टावशेषमुत्तार्य गुडस्यानु दिनद्वयम् ॥ २०१ ॥
पलानां विंशतिशत क्षिपेत्तच्च दृढे घटे ।
आतपे तं विनिक्षिप्य धारयेत्त्रिदिनं ततः ॥ २०२ ॥
उद्धृत्य धूपिते पात्रे वस्त्रपूतं क्षिपेद्भिषक् ।
पलाष्टकं हरीतक्या धातक्याः पलविंशतिम् ॥ २०३ ॥
पूगानां विंशतिपलं पिप्पल्याः पलपञ्चकम् ।
एलालवङ्गकङ्कोलजातीत्वक्पत्रकेसरम् ॥ २०४ ॥
पलं पल समरिचं चूर्णीकृत्य भिषग्वरः ।
आसवे निक्षिपेत्तत्र मधुनः कुडवद्वयम् ॥ २०५ ॥
संजातेऽष्टदिने तस्मादुद्धृत्यान्यत्र तं न्यसेत् ।
आसवे सकषाये तु गुडमन्यं प्रदापयेत् ॥ २०६ ॥
निष्कास्य पूर्वचूर्णं तु नवं तत्र नियोजयेत् ।
नाम्ना मूलासवो ह्येष रोगराजनिकृन्तनः ॥ २०७ ॥
श्वासामवातविध्वंसी पाण्डुप्लीहोदरापहः ।
कृमिगुल्मप्रमेहाणां नाशनो वह्निदीपनः ॥ २०८ ॥

क्षयरोग में बृहन्मूलासव—महावृक्ष ( पीपल ), वड़, मदार—इन वृक्षों के मूल को छोड़कर, अन्य छाल, पत्र, आदि स्वच्छ अवयवों को एक सौ आठ पल लेकर तीस घट ( द्रोण ) जल में पकावे, और उसमें दशमूल ( बिल्व, गम्भारी, अरलू, पाढल, अरणी, शालपर्णी, पृश्निपर्णी, वनभंटा, रेंगनी, गोखरू) तीन तुला डाल दे। आठवां भाग अवशेष रहने पर दो दिन के बाद गुड बीस सौ पल छोडकर मजबूत, घडे में भरकर धूप में तीन दिन तक रक्खे। इसके बाद धूपितपात्र में वस्त्र से छान कर भर दे और हरीतकी आठ पल, धव का फूल बीस पल, सुपारी बीस पल, पीपर पांच पल, इलायची, लवंग, शीतलचीनी, जायफर, दालचीनी, तेजपत्र, नागकेशर तथा मरिच—एक २ पल इन द्रव्यों के चूर्ण को आसव में छोड़ दे तथा दो कुड़व मधु मिला दे। आठ दिन के बाद वहां से निकाल-छानकर दूसरे पात्र मे रक्खे। आसव के कषाय होने पर पुनः और गुड़ छोड़ दे। और पुराने चूर्ण को निकाल कर नवीन

चूर्ण मिला दे। यह मूलासव नामक आसव रोगराज (क्षयरोग) को नष्ट करने वाला है। श्वास, आमवात को नाश करने वाला, पाण्डु, प्लीहा तथा उदररोग को दूर करने वाला, कृमि, गुल्म, प्रमेह को नाश तथा अग्नि को दीप्त करने वाला है॥ २००-२०८॥

धातुक्षये भृङ्गराजासवः—

भृङ्गराजरसद्रोणं गुडस्य द्वितुलां तथा।
प्रस्थार्धं तु हरीतक्याः स्निग्धे भाण्डे निवेशयेत्॥ २०९॥
पक्षादूर्ध्वं पिबेदेनं मात्रया च यथाबलम्।
जाते ह्यस्मिन्पुनर्दत्त्वा पिप्पल्याश्च पलद्वयम्॥ २१०॥
जातीफलं लवङ्गानि त्वगेलापत्रकेसरम्।
धातुक्षयं जयेत्पीतः कासं पञ्चविधं तथा॥ २११॥
कृशानां च महापुष्टिं कुरुते च महाबलम्।
कामवृद्धिं करोत्येष वन्ध्यानां पुत्रदो भवेत्॥ २१२॥

धातुक्षय में भृङ्गराजासव—भृङ्गराज का रस एक द्रोण गुड़, दो तुला, हरीतकी एक प्रस्थ, घृतस्निग्ध भाण्ड में रक्खे। फिर इसमें पीपर दो पल, जायफर, लवंग, दालचीनी, इलायची, तेजपत्र, नागकेशर—दो पल छोड़कर मुह बन्द कर एक पक्ष तक रक्खे। एक पक्ष (पन्द्रह दिन) बाद छानकर रख ले और बल के अनुसार मात्रा में पान करे। यह आसव पान करने से धातुक्षय को जीत लेता है। और पांच प्रकार के कास को जीत लेता है। दुर्बलों को महापुष्टि तथा महाबल देता है। काम की वृद्धि करता है और वन्ध्या को पुत्र देने वाला है॥ २०९-२१२॥

भगन्दरे गुग्गुल्वासवः—

शतं हरीतकीनां तु बिभीतकशतं तथा।
प्रस्थमामलकानां च गुग्गुलोश्च चतुष्पलम्॥ २१३॥
त्वगेलापिप्पलीमूलचव्यचित्रकदीप्यकम्।
व्योषं तालीसपत्रं च मुस्तकेसरकट्फलम्॥ २१४॥
जलद्रोणे विपक्तव्यं पादशेषे जले ततः।
धातक्याः प्रस्थमेकं तु तथा गुडशतद्वयम्॥ २१५॥
द्राक्षादाडिमखण्डानां भागान्दशपलोन्मितान्।
सर्वमेतत्समालोड्य स्थापयेद्भाजने शुभे॥ २१६॥
यदा युक्तरसः स्याच्च सुजातो गन्धवर्णतः।
तं पूरयेत्तदा भाण्डे शुक्तस्येक्षुरसस्य तु॥ २१७॥
षण्मासंसंयुतो ह्येष द्रवः पेयः प्रयोगतः॥ २१८॥

गुग्गुल्वासव इत्येष देयः सर्वेषु रोगिषु।
प्राग्भक्तं मध्यभक्तं वा ग्रासे ग्रासान्तरे तथा ॥ २१९ ॥
दद्यात्क्रमेण योगं तु वयः सात्म्यमपेक्ष्य च।
नाशयेदुदरं प्लीहामूरुस्तम्भं सकामलम् ॥ २२० ॥
चिरोत्थितमपि श्वासं कासशोफभगन्दरान्।
कृमिकुष्ठप्रमेहेषु हितश्चैवाग्निदीपनः ॥ २२१ ॥

भगन्दर रोग में गुग्गुल्वासव—हर्रे एक सौ पल, बहेड़ा सौ पल, आंवला एक प्रस्थ, गुग्गुलु चार पल, दालचीनी, इलायची, पिपरामूल, चव्य, चित्रक, अजमोदा, व्योष ( सोंठ, पीपर, मरिच ), तालीसपत्र, मोथा, नागकेशर, कायफर—एक २ पल—इन द्रव्यों के चूर्ण को एक द्रोण जल में पकावे। चौथाई शेष क्वाथ से धाय का फूल एक प्रस्थ, गुड़ दो सौ पल, द्राक्षा, अनार, खांड़, दश २ पल—सभी द्रव्यों को एक जगह मिलाकर शुद्ध घृतलिप्त घडे में रक्खे। जब वर्ण तथा गन्ध से युक्त रस ( सिद्ध रस ) हो जाय तब गन्ने के रस के शुक्तपूर्ण भाण्ड में भर दे। छः मास बाद छानकर उचित मात्रा में पान करे। यह गुग्गुल्वासव सभी रोगियों को देना चाहिए। भोजन के पहले, भोजन के मध्य में, या प्रत्येक ग्रास ( कवल ) या ग्रास के बीच २ में अवस्था तथा बल देखकर क्रम से इस योग को थोड़ी मात्रा से प्रारम्भ कर पूर्ण मात्रा देना चाहिए। यह आसव उदररोग, प्लीहा, ऊरुस्तम्भ, कामला, पुराना श्वासरोग, कास, शोथ तथा भगन्दर को नाश करता है। कृमि, कुष्ठ तथा प्रमेह में हितकर है और अग्नि को दीप्त करने वाला है ॥ २१३–२२१ ॥

अर्शस्सु ताम्बूलासवः—

जतुलिप्तं ननु कृत्वा भाण्डकमर्धप्रवेशितं भूमौ।
तत्तरुणहरितजम्बूपत्रक्वाथेन संशुद्धम् ॥ २२२ ॥
शुद्धे च शर्कराभिरगरुं दद्यात्सुगन्धतरम्।
वासार्थं, धातक्याः पलानि खलु सप्त देयानि ॥ २२३ ॥
पूगीफलानि खदिरं दशपलिकानि दापयेत्तत्र।
ताम्बूलीपत्रशतैर्दशभिः क्षुण्णैश्च पञ्चभिश्चान्यैः ॥ २२४ ॥
पलशतमेकं मधुनः शतं च सार्धं तु वारिणो देयम्।
कङ्कोलकक्कुष्णानां प्रत्येकं द्वे पले च स्युः ॥ २२५ ॥
त्रिफलाजातिफलैलालवङ्गकुसुमानि चैकपलिकानि।
दत्त्वाऽवलोड्यमेतत्त्रीणि दिनानि पाणिना पात्रे ॥ २२६ ॥
स भवेद्यदा सशब्दस्ततो गुडशतपलानि त्रीणि।
देयानि प्रविलीनमग्नियोगात्तं तु जलद्रोणसंयुक्तम् ॥ २२७ ॥

पक्षद्वयेन पेयो रसनाक्षिमनोहरः सुरभिगन्धः ।
ताम्बूलासव एप रसायनानां भवेदग्र्यः ॥ २२९ ॥
प्रीणयति हन्ति गुदजान् सर्वांश्च कफोद्भवांस्तथा रोगान् ॥
बलवर्णशुक्रजननो ह्युपयोगादश्मरीं हन्यात् ।
संवत्सरमुपयुक्तः स्थिरवयसं मानवं कुरुते ॥ २३० ॥

अर्शरोगों में ताम्बूलासव—कलई किये हुए पात्र को आधा जमीन में गाड़ दे और उसको नये हरे जामुन के पत्र के क्वाथ से स्वच्छ करे। और उसमें शर्करा के साथ अगरु आदि सुगन्धित द्रव्यों को सुगन्धित करने के लिये डाल दे, उस स्वच्छ घड़े में धाय का फूल सात पल, सुपारी तथा खदिर का चूर्ण दश २ पल मिला दें। ताम्बूल का पत्ता कूटकर पन्द्रह सौ, मधु सौ पल, जल डेढ़ सौ पल, कंकोल (शीतलचीनी), पीपर दो २ पल, त्रिफला (हर्रे, बहेड़ा, आंवला), जायफर, इलायची, लवंग, नागकेशर—एक २ पल के चूर्ण को डालकर तीन दिन तक हाथ से चलावे। जब शब्द होने लगे तब तीन सौ पल गुड मिला दे। अग्नि के संयोग से शब्द के बन्द हो जाने पर एक द्रोण अवशिष्ट जल को एक माह तक मुह बन्द कर रख दे, उसके बाद छान कर रख ले और पान करे। यह जिह्वा, तथा आख को मनोहर बनानेवाला है। मनोहर गन्ध से युक्त यह ताम्बूलासव, रसायनों में श्रेष्ठ है। प्रसन्न करता है और सभी प्रकार के अर्श रोगों को तथा कफोद्भव रोगों को नष्ट करता है। बल, वर्ण तथा शुक्रोत्पादक है। यह आसव उपयोग करने से पथरी रोग को नाश करता है, एक वर्ष तक उपयोग करने से बहुत दिन तक जीनेवाला बनता है ॥ २२२–२३० ॥

अपस्मारे पञ्चमूत्रासवः—

अजागोसुरभीणां च चतुष्कर्षं खरोष्ट्रयोः ।
मूत्रं संग्राह्य कुम्भे च दत्त्वा चूर्णं प्रदापयेत् ॥ २३१ ॥
वचाया वातकुम्भस्य लशुनस्यैलया सह ।
प्रत्येकं तु लवङ्गस्य पलार्धं कृमिनाशिनः ॥ २३२ ॥
व्योपस्यापि पलं सार्धमभयैकपला मता ।
चुल्ल्यग्रे वासरान्सप्त निक्षिप्याशु समुद्धरेत् ॥ २३३ ॥
प्लीहोदरहरं दिव्यं मूढवातकफापहम् ।
अशीतिवातशमनं पञ्चमूत्रासवं विदुः ॥ २३४ ॥

अपस्मार में पञ्चमूत्रासव—बकरी, गाय, सुरभी (सुरैया गाय), गदही तथा ऊंटिनी के मूत्र चार २ कर्ष लेकर घड़े में डाल दे उसमें वच, वातकुम्भ, लहसुन, इलायची, लवंग, विडंग—आधा २ पल, व्योष (सोंठ, पीपर, मरिच),

डेढ़ पल, हर्रे एक पल—इन द्रव्यों के चूर्ण को छोड़कर मुख बन्द कर, चुल्ही (चूल्हा) के आगे सात दिन तक रक्खे और शीघ्र ही निकाल ले। यह पंच मूत्रासव प्लीहा, उदररोग को दूर करता है, मूढवात तथा कफ को नाश करता है। अस्सी प्रकार के वात रोगों को नष्ट करता है। (इसमें गुड़ का निर्देश नहीं किया गया है अतः मूत्र-मानके अनुसार आठ पल तथा मधु चार पल छोड़ना चाहिए। अन्य विधि-आसव के तरह समझना चाहिए) ॥२३१–२३४

धातुक्षये हरीतक्यासवः—

प्रस्थार्धं तु हरीतक्याः धात्रीप्रस्थद्वयं तथा।
दशमूलशतार्धं च पौष्करं च तदर्धकम् ॥ २३५ ॥
तत्तुल्यं चित्रकं दद्याच्चित्रकार्धा दुरालभा।
गुडूच्या विंशतिपल विशालापलपञ्चकम् ॥ २३६ ॥
खदिरस्य पलान्यष्टौ तदर्धं बीजपूरकम्।
मञ्जिष्ठा मधुकं कुष्ठं कपित्थं देवदारुकम् ॥ २३७ ॥
विडङ्गं चविकां रोध्रं भार्ङ्गी स्यादेलवालुकम्।
संवर्तक कणां चैव क्रमुकं शटिसुप्रभम् ॥ २३८ ॥
प्रियंगुसारिवामांसीनागकेसररेणुकम् ।
त्रिवृतां रजनीं रास्नां मेषश्रृङ्गीं पुनर्नवाम् ॥ २३९ ॥
शताह्वां रोहिणीं दन्तीं पलांशां क्वाथयेज्जले।
चतुर्थभागशेषे तु द्राक्षां षष्टिपलां क्षिपेत् ॥ २४० ॥
त्रिंशत्पलानि धातक्या गुडाच्छुद्धाच्चतुःशतम्।
द्वात्रिंशत्पलिकं क्षौद्रं सर्वमेकत्र कारयेत् ॥ २४१ ॥
भाण्डे पुराणे सुस्निग्धे मांसीमरिचधूपिते।
धूपिते च पुनर्दद्यात्पिप्पलीनां पलद्वयम् ॥ २४२ ॥
जातीफलं लवङ्गं च त्वगेलापत्रकेसरान्।
कर्षमात्रां च नेपालीं दत्त्वा पक्षं निधापयेत् ॥ २४३ ॥
कतकफलचूर्णेऽपि क्षिप्ते निर्मलता भवेत्।
पक्षादूर्ध्वं पिबेद्यस्तु मात्रया च यथाबलम् ॥ २४४ ॥
धातुक्षयं जयेत्पीतः कासं पञ्चविधं तथा।
अर्शांसि षट्प्रकाराणि तथाऽष्टावुदराणि च ॥ २४५ ॥
प्रमेहं च महाव्याधिमरुचिं पाण्डुतां तथा।
सर्वान् वातान् तथाऽप्यामं श्वासं छर्दिं तथैव च ॥ २४६ ॥
अष्टादशैव कुष्ठानि शोषं शूलं भगन्दरम्।
शर्करां मूत्रकृच्छ्रं च ह्यश्मरीं च विनाशयेत् ॥ २४७ ॥

कृशानां च महापुष्टिं कुरुते च महाबलम् ।
महावेगो महातेजा महावीर्यबलोद्धतः ।
कामपुष्टिं करोत्येष वन्ध्यानां पुत्रदो भवेत् ॥ २४८ ॥

धातुक्षय में हरीतक्यवलेह—हरीतकी आधा प्रस्थ, आंवला दो प्रस्थ, दशमूल (बिल्व, गम्भारी, स्योनाक, पाढल, अरणी, शालपर्णी, पृश्निपर्णी, बड़ी कटेरी, छोटी कटेरी, गोखरू) पचास पल, पुष्करमूल पच्चीस पल, चित्रक पच्चीस पल, दुरालभा ( यवासा ) साढ़े बारह पल, गुडूची बीस पल, विशाला ( इन्द्रायण ) पांच पल, खैर आठ पल, बीजपूरक ( बिजौरा नीबू का रस ) चार पल, मजीठ, मुलेठी, कूठ, कैथ का गूदा, देवदारु, विडंग, चव्य, पठानी लोध, भांगरा, पलवालु, संवर्तक ( बहेड़ा ), पीपर, सोपारी, कपूरकचरी, प्रियंगु, सारिवा, जटामांसी, नागकेशर, सम्भालू के बीज, निशोथ, हल्दी, रास्ना, मेढासिंघी, पुनर्नवा, सौंफ, रोहिणी ( कुटकी ), दन्तीमूल—एक २ पल—इन द्रव्यों को यवकुटकर चौगुने जल में क्वाथ करे। चतुर्थांश शेष क्वाथ में मुनक्का साठ पल, धाय का फूल तीस पल, स्वच्छ गुड चार सौ पल, मधु बत्तीस पल—सभी द्रव्यों को एक जगह मिलाकर घृतस्निग्ध, जटामासी, मरिच आदि द्रव्यों से धूपित पुराने भाण्ड में भर कर पुनः पीपर दो पल, जायफल, लवंग, दालचीनी, इलायची, तेजपत्र, नागकेशर, नेपाली ( नेपाली धनिया )—एक २ कर्ष—इन द्रव्यों के चूर्ण को मिला दे। साफ बनाने के लिये कतकफल (निर्मली) का चूर्ण भी छोड दे। और अच्छी तरह मुह बन्द कर एक पक्ष ( पन्द्रह दिन ) तक गुप्त स्थान में रक्खे। पन्द्रह दिन बाद छानकर बल के अनुसार मात्रापूर्वक जो पान करता है वह धातुक्षय को जीत लेता है। पान करने से यह आसव पांच प्रकार के कास, छः प्रकार के अर्शरोग, आठ प्रकार के उदररोग, महाव्याधि प्रमेह, अरुचि, पाण्डुरोग, सभी प्रकार के वातरोग, आमवात, श्वास, छर्दि, अठारह प्रकार के कुष्ठरोग, शोष ( सूखारोग ), शूल, भगन्दर, शर्करा ( पेशाब के रास्ते शर्करा आना ), मूत्रकृच्छ्र तथा पथरी रोग को नाश करता है। दुर्बलों को पुष्ट तथा बलवान बनाता है। अधिक वेगवान् , तेजस्वी, वीर्यवान् तथा बलवान् बनाता है। और कामदेव को पुष्ट करता है। यह आसव वन्ध्या स्त्रियों को भी पुत्र देनेवाला है ॥ २३५–२४८ ॥

आवर्तक्याद्यासवः—

नेत्रभेषजशिफापलाष्टकं सार्धमैलपलमर्धमस्तकीम् ।
हेमजार्धपलमेकतः कृतं द्रोणवारिमिलितं दिनत्रयात् ॥ २४९ ॥
यः पिबेद् द्विपलिकं दिनोदये नीरमस्तसमये समाहितः ।
तस्य नश्यति कटीसमुद्भवं दद्रु मासयुगलेन निश्चितम् ॥ २५० ॥

आवर्तक्यासव—नेत्रभेषजशिफा (सना-सोनामुखी का मूल) आठपल, ऐल (एलिया, मुसब्बर) आधा पल, मस्तकी (रूमिमुस्तकी) आधा पल, हेमजा (धतूरबीज) आधा पल—इन द्रव्यों को एकत्र कर एक द्रोण जल में तीन दिन तक रक्खे। पुनः तीन दिन के बाद छानकर दो पल की मात्रा में सूर्योदय तथा सूर्यास्त के समय में जो व्यक्ति पान करता है वह कटिभाग में उत्पन्न दद्रु (दाद) को दो माह में अवश्य ही नष्ट कर देता है ॥ २४९–२५० ॥

क्षये दशमूलासवः—

दशमूलतुलार्धं तु पौष्करं च तदर्धकम्।
तत्तुल्यं चित्रकं दद्याच्चित्रकार्धां दुरालभाम् ॥ २५१ ॥
गुडूचीं च तथा रोध्रं प्रदद्यात् पलविंशतिम्।
खदिरस्य पलान्यष्टौ तत्समं बीजसारकम् ॥ २५२ ॥
प्रस्थसामलकीनां च तदर्धा च हरीतकी।
मञ्जिष्ठा मधुकं कुष्ठं कपित्थं देवदारु च ॥ २५३ ॥
विडङ्गं चविका ह्यक्षं भार्ङ्गी स्यादष्टवर्गकम्।
त्रिवृता रजनी रास्ना कर्कटाख्या पुनर्नवा ॥ २५४ ॥
प्रियङ्गुसारिवामांसीनागकेसररेणुकम् ।
शताह्वेन्द्रयवा मुस्तं द्विपलान् क्वाथयेज्जले ॥ २५५ ॥
अष्टद्रोणे, चतुर्थांशं क्वाथमत्रावतारयेत् ।
द्राक्षायाः पलषष्टिं वै क्वाथयित्वा चतुर्गुणे ॥ २५६ ॥
जले त्रिभागशेषे तु पूते तस्मिन्विनिक्षिपेत्।
त्रिंशत्पलानि धातक्या गुडाच्छुद्धाच्चतुःशतम् ॥ २५७ ॥
द्वात्रिंशत्पलिकं क्षौद्रं सर्वमेकत्र कारयेत्।
भाण्डे स्निग्धे पुराणे च मांसीमरिचधूपिते ॥ २५८ ॥
धूपिते च पुनर्दद्यात्पिप्पलीनां पलद्वयम्।
जातीफलं लवङ्गं च त्वगेलापत्रकेसरान् ॥ २५९ ॥
जातीपत्रीं च कङ्कोलं चन्दनं वालुकं तथा।
कर्षमात्रां च नेपालीं दत्त्वा भूमौ निधापयेत् ॥ २६० ॥
पक्षादूर्ध्वं पिबेदेतं मात्रया च यथाबलम्।
धातुक्षयं जयेत्पीतः कासं पञ्चविधं तथा ॥ २६१ ॥
अर्शांसि षट्प्रकाराणि तथाऽष्टावुदराणि च।
प्रमेहं च महाव्याधिमरुचिं पाण्डुतां तथा ॥ २६२ ॥
सर्वान्वातांस्तथाऽप्यामं श्वासं छर्दिमरोचकम्।
अष्टादशैव कुष्ठानि शोफं शूलं भगन्दरम् ॥ २६३ ॥

शर्करां मूत्रकृच्छ्रं च ह्यश्मरीं च विनाशयेत् ॥ २६४ ॥
महावेगो महावीर्यो महातेजा महाद्युतिः ।
कामपुष्टिकरो ह्येष वन्ध्यानां पुत्रदो भवेत् ॥ २६५ ॥

क्षयरोग में दशमूलासव—दशमूल ( बिल्व, गम्भारी, स्योनाक, पाढल, अरणी, शालपर्णी, पृश्निपर्णी, वनभंटा, रेंगनी, गोखरू ) आधा तुला ( पचास पल ), पुष्करमूल पच्चीस पल, दुरालभा ( जवासा ) साढ़े बारह पल, गुडूची तथा पठानी लोध पच्चीस पल, खैर आठ पल, विजयसार आठ पल, आंवला एक प्रस्थ, हर्रें आधा प्रस्थ, मजीठ, मुलेठी, कूठ, कैथ, देवदारु, विडंग, चव्य, बहेड़ा, भांगरा, अष्टवर्ग (जीवक, ऋषभक, ऋद्धि, वृद्धि, मेदा, महामेदा, काकोली, क्षीरकाकोली ), निशोथ, हल्दी, रास्ना, काकड़ासिंघी, पुनर्नवा, प्रियंगु, सारिवा, जटामांसी, नागकेशर, सम्भालू का बीज, सौंफ, इन्द्रयव, मोथा—दो २ पल—इन द्रव्यों को यवकुट कर आठ द्रोण जल में क्वाथ करे और चतुर्थांश क्वाथ उतार ले । मुनक्का साठ पल चौगुने जल में क्वाथ कर तीन भाग शेष क्वाथ को छानकर उसमें धाय का फूल तीस पल, स्वच्छ गुड़ चार सौ पल, मधु बत्तीस पल—इन सभी द्रव्यों को एकत्र कर घृतस्निग्ध जटामांसी, मरिच आदि से धूपित पुराने भाण्ड मे भर दे, और उसमें पिप्पली दो पल, जायफर, लवंग, दालचीनी, इलायची, तेजपत्र, नागकेशर, जावित्री, कंकोल ( शीतलचीनी ), चन्दन, एलवालु तथा नेपाली धनिया—एक २ कर्ष—इन द्रव्यों के चूर्ण को मिलाकर जमीन के ऊपर गुप्त स्थान में रक्खे । एक पक्ष ( पन्द्रह दिन ) बाद छानकर बल के अनुसार मात्रा में पान करे । पान करने से यह आसव धातुक्षय को जीत लेता है, और पांच प्रकार के कास, छः प्रकार के अर्शरोग, आठ प्रकार के उदररोग, महाव्याधि प्रमेह, अरुचि, पाण्डु, सभी प्रकार के वातरोग, आमवात, श्वासरोग, छर्दि, अरोचक, अठारह प्रकार के कुष्ठरोग, शोथ, शूल, भगन्दर, शर्करा, मूत्रकृच्छ्र तथा पथरी को नाश करता है । यह अतिवेग, वीर्य, तेज, द्युति तथा कामशक्ति को देता है और वन्ध्या स्त्रियों को पुत्र देनेवाला है ॥ २५१–२६५ ॥

खर्जूरासवः—

खर्जूरमुस्तामलकीनिकुम्भाद्राक्षाभयापूगफलानि पाठा ।
भार्ङ्गीशटीकुष्ठजलाजमोदं मूलं कणायाः सपलङ्कषं वै ॥ २६६ ॥
पुनर्नवा कायफलं प्रियङ्गुः कर्चूरकं कृष्णमजाजिविस्रे ।
त्रिवृच्छिवाच्छलि(ल्ल)धसासकं च लज्जालुरोहीतकलिङ्गमूलम् ॥२६७॥
अमूनि सर्वाणि महौषधानि चत्वारि चत्वारि पलानि चैव ।
मांसीचतुर्जातकणालवङ्गं जातीफलं चन्दनलोहचूर्णम् ॥ २६८ ॥

प्रमाणतो द्विद्विपलान्यमूनि सुधातकीपुष्पपलानि सप्त ।
गुडस्य सप्त त्रिगुणानि दद्यान्मणानि सचूर्ण्य ततः समस्तम् ॥२६९॥
घृतस्य भाण्डे विपुले निवेश्य दशोत्तर प्रस्थशतं जलस्य ।
क्षिप्त्वा क्षिपेत्पञ्च दिनानि भूमौ निष्पन्नकल्पं हृदये विचार्य ॥२७०॥
षष्ठे दिने तच्च सुयोजनीयं ताम्रस्य यन्त्रद्वयमध्यभागे ।
शतत्रयं नागलतादलानां सहस्रयुग्मं शतपत्रकाणाम् ॥ २७१ ॥
प्रक्षाल्य देय विधिनाऽथ सन्धि विमुद्रय चुल्ल्यां विनिवेश्य यन्त्रम् ।
निष्काशयेदर्कसतो यथावद्दत्त्वा जलं चोपरि यन्त्रकस्य ॥ २७२ ॥
बलाबलं रोगनिपीडितानां विमृश्य देयः पलकप्रमाणः ।
खार्जूरसंज्ञः प्रिय आसवोऽयं विसूचिकायक्ष्मभयं निहन्ति ॥ २७३ ॥
हृद्रोगकासविषमज्वरशोफतर्षश्वासप्रमेहबलसंक्षयपाण्डुरोगान् ।
हिध्माश्च नाशयति सर्वशिरोविकारान् रुच्यग्निवर्धनबलप्रदवृष्य एषः॥२७४॥

खर्जूरासव—खजूर, नागरमोथा, आंवला, निकुम्भ ( दन्तीवृच ) मूल, मुनक्का, हर्रे, सुपारी, पाठा ( पाढ़ी ), भांगरा, शटी ( कपूरकचरी ), कूठ, जल ( सुगन्धवाला ), अजमोदा, पिपरामूल, गुग्गुलु, पुनर्नवा, कायफर, प्रियंगु, कपूर, मरिच, अजाजी ( स्याहजीरा ), विस्रा ( हाऊवेर ), निशोथ, हर्रे, (अच्छल(ल्ल):=तिलकल्क), अच्छलि (तिलकल्क), धमासक (धमासा), लज्जालु, रोहित (रोहिडा), कलिञ्जमूल (कुलिञ्जन) चार पल—इन महौषधियों के चूर्ण, तथा जटामासी, चातुर्जात ( दालचीनी, इलायची, तेजपत्र, नागकेशर ), पीपर, लवंग, जायफर, चन्दन, लौहभस्म—दो २ पल, धाय का फूल सात पल, गुड़ एक्कीस मण ( मानिका )—सभी द्रव्यों को चूर्ण कर घृतस्निग्ध बड़े भाण्ड में छोड़कर एक सौ दस प्रस्थ जल भर पांच दिन पृथ्वी पर रक्खे, कल्प तैयार हो जाने पर छठे दिन तामा के दो यन्त्र के बीच ( भभका ) में रख दे और उसमें नागलता ( पान 'नागवल्ली' ) का पत्र तीन सौ, शतपत्रक (लालकमल का फूल) दो हजार धोकर डाल दे। तथा अच्छी तरह सन्धि बन्द कर यन्त्र को चुल्ली पर ( चूल्हा ) रक्खें । इसके बाद यन्त्र के ऊपर जल देता रहे, और अच्छी तरह अर्क को निकाले। रोगियों के बल तथा दुर्बलता को देखकर एक २ पल की मात्रा में पिलाना चाहिए। यह खजूर-संज्ञक प्रिय आसव—हैजा तथा राजयक्ष्मा को दूर करता है। यह हृद्रोग, कास, विषमज्वर, शोथ, तृषा, श्वास, प्रमेह, बलक्षय, पाण्डुरोग, हिध्मा तथा सभी प्रकार के शिरोरोग को नाश करता है। यह योग रुचि तथा अग्नि को बढ़ानेवाला, बल देनेवाला तथा वृष्य ( शक्ति बढ़ानेवाला ) है ॥ २६६–२७४ ॥

मस्त्वासवः—

वंशपत्रीप्रतीकाशमस्तुद्रोणे सुनिर्मले ।
क्षिपेद् गुडतुलां भाण्डे वचाकुष्ठविलेपिते ॥ २७५ ॥
तस्मिन् दद्यात्तु कृष्णाया प्रस्थं प्रस्थत्रयं तथा ।
त्रिफलाया विडङ्गानां कुडवं मरिचस्य च ॥ २७६ ॥
काश्मरीफलमृद्वीकापरूपकफलानि च ।
वत्सकस्य च बीजानि समानि मरिचेन तु ॥ २७७ ॥
पञ्चमूलं च षड्ग्रन्थां दन्ती चित्रकमेव च ।
द्वे द्वे पले च भल्लाताद्भिषक् समुपकल्पयेत् ॥ २७८ ॥
यवपल्ले स्थितः पेयोऽरिष्टो मात्राबलं प्रति ।
पाण्डुरोगोदरे हन्ति ग्रहण्यर्शोविकारनुत् ॥ २७९ ॥
परं भगन्दरप्लीहशोषकासामयापहः ।
अग्निसंदीपनः पथ्यो बाधिर्यस्थौल्यनाशनः ॥ २८० ॥
मस्त्वासव इति ख्यातो लेखनो मेदुरे हितः ।

मस्त्वासव—वंशपत्री प्रतीकाश ( वंशपत्री ) मस्तु एक ( दही का तोड़ ) एक द्रोण, वच तथा कूट को सूक्ष्म चूर्ण कर मधु के साथ लेप बनाकर उस लेप से लिप्त भाण्ड में भरकर एक तुला गुड़ डाल दे, और उसमें पीपर एक प्रस्थ, त्रिफला ( हर्रे, बहेड़ा, आंवला ) तीन प्रस्थ, विडंग एक कुड़व, मरिच एक कुडव, गम्भारी फल, मुनक्का, फालसा, इन्द्रजव—एक २ कुडव (चार २ पल), पंचमूल ( विल्व, गम्भारी, स्योनाक, पाढल, अरणी ), षड्ग्रन्था ( वच ), दन्तीमूल, चित्रक तथा भल्लातक—दो २ पल—इन द्रव्यों के चूर्ण को मिला दे। मुह बन्द कर यव की राशि में एक माह तक रक्खे। एक मास बाद छानकर इस अरिष्ट को बल के अनुसार मात्रापूर्वक पान करे। यह अरिष्ट पाण्डुरोग, उदर रोगों को नाश करता है, ग्रहणीदोष, अर्शविकार को दूर करता है। भगन्दर, प्लीहा, शोप ( सूखा रोग) तथा कास रोगों को दूर करता है। अग्नि को दीप्त करने वाला, पथ्य है, बाधिर्य तथा स्थूलता को नाश करता है। यह मस्त्वासव से प्रसिद्ध आसव लेखन है तथा मेदुर ( वसावृद्धि ) में हित कारक है ॥

ज्वरे कुब्जकासवः—

शतं कुब्जकमूलस्य मृद्वीकार्धशतं तथा ॥ २८१ ॥
मधूकपुष्पकाश्मर्यभागान् दशपलोन्मितान् ।
चतुर्द्रोणेऽम्भसः पक्त्वा शीते पादावशेषिते ॥ २८२ ॥
शतत्रयं गुडस्याथ धातक्याः पलविंशतिम् ।

कनकस्य तु चत्वारि व्योषं कङ्कोलमेव च ॥ २८३ ॥
एलात्वक्पत्रजातीनां लवङ्गस्य तथैव च ।
भागान् पलप्रमाणांश्च सूक्ष्मचूर्णं तु कारयेत् ॥ २८४ ॥
कुब्जमूलासवो ह्येष मासमात्र विधारितः ।
शमयेत्सन्निपातोत्थान् ज्वरान् सर्वान् न संशयः ॥ २८५ ॥

ज्वर में कुब्जकासव—कुब्जक ( सदा गुलाब पुष्प ) सौ पल, मुनक्का पचास पल, मधूकपुष्प ( महुआ का फूल ), गम्भारीफल—दश २ पल—इन द्रव्यों को चार द्रोण जल में पकावे, चौथाई शेष ( एक द्रोण ) क्वाथ ठंढा होने पर गुड़ तीन सौ पल तथा धाय का फूल बीस पल, धतूर का बीज—चार पल, व्योष ( सोंठ, पीपर, मरिच ), कंकोल (शीतलचीनी)—चार २ पल, इलायची, तेजपत्र, जायफर, लवंग एक २ पल—इन द्रव्यों का सूक्ष्म चूर्ण मिलाकर घृतलिप्त भाण्ड में भरकर गुप्त स्थान में एक मास तक रक्खे। एक मास बाद तैयार यह कुब्जमूलासव सभी प्रकार के ज्वर तथा सन्निपातजन्य ज्वर को शान्त करता है। इसमें सन्देह नहीं है ॥ २८१-२८५ ॥

नालिकेरासवः—

नालिकेरोदकं चैव द्रोणमात्रं प्रदापयेत् ।
द्रोणार्धं रसमिक्षोश्च रसप्रस्थं तु शाल्मलेः ॥ २८६ ॥
दशमूलरसस्यापि प्रस्थमात्रं तथैव च ।
घृतभाण्डे विनिक्षिप्य मध्ये चूर्णं निवेशयेत् ॥ २८७ ॥
चातुर्जातकधातक्योः पलानि खलु षोडश ।
शाणमात्रा तु कस्तूरी केशरं तगरं तथा ॥ २८८ ॥
चन्दनं देवपुष्पं च पलमात्रं पृथक् पृथक् ।
मासादूर्ध्वं पिबेच्चामुं रूपे कामसमो भवेत् ॥ २८९ ॥
वृद्धोऽपि तरुणीं गच्छेत् षण्ढोऽपि पुरुषायते ।
वलीपलितसंत्यक्तः शतायुश्च भवेन्नरः ॥ २९० ॥
नालिकेरासवः प्रोक्तः शम्भुना परमेष्ठिना ।

नालिकेरासव—नालिकेर ( नारियल ) का जल एक द्रोण, गन्ने का रस आधा द्रोण ( आठ प्रस्थ ), शाल्मलि ( सेमर ) का रस एक प्रस्थ, दशमूल ( विल्व, गम्भारी, स्योनाक, पाढ़ल, अरणी, शालपर्णी, पृश्निपर्णी, वनभंटा, रेगनी, गोखरू ) का स्वरस एक प्रस्थ ( हरा दशमूल न मिलने पर क्वाथ लेना चाहिए )—इन द्रव्यों को घृतलिप्त भाण्ड में रखकर बीच में—चातुर्जात ( दालचीनी, इलायची, तेजपत्र, नागकेशर ) तथा धाय का फूल सोरह पल, ( चातुर्जात चार पल लेना चाहिए और धाय का फूल बारह पल ), कस्तूरी एक

शाण, केशर, तगर, चन्दन, लवंग—एक २ पल—इन द्रव्यों के चूर्ण को डाल दे और मुह बन्द कर गुप्त स्थान में एक मास तक रक्खे। एक मास बाद छानकर पान करे। इस आसव को पान करने वाला, रूप में कामदेव के समान हो जाता है। वृद्ध भी नवयौवना के साथ प्रसंग करने में समर्थ हो जाता है और नपुंसक पुंस्त्व प्राप्त करता है। वली-पलित को त्याग कर मनुष्य शतायु होता है। इस नालिकेरासव को परमेष्ठी भगवान् शंकर ने कहा है ॥

कूष्माण्डासवः—

कूष्माण्डं जर्जरीकृत्य रसमादाय यत्नतः ॥ २६१ ॥
द्रोणं, गुडार्धं दातव्यं, चूर्णमेषां विनिक्षिपेत्।
कटुत्रिक लवङ्गं च चातुर्जातं तथैव च ॥ २६२ ॥
जातीफलं च कङ्कोल जातीपत्री प्रियङ्गुकम्।
कपित्थं वत्सकं चैव बीजं गोक्षुरकस्य च ॥ २६३ ॥
अमृतासत्त्वभार्ग्यौ च बलाबीज तथैव च।
हपुषा क्रमुक चैव देवदारु मदावहम् ॥ २६४ ॥
मुस्तं खदिरसारं च चित्रकं च फलत्रिकम्।
रास्ना यष्ट्याह्वकं चापि तुम्बरु नागकेशरम् ॥ २९५ ॥
ग्रन्थिकं चाजमोदा च कारवी दीप्यकस्तथा।
कट्फल च तुगाक्षीरी ह्याकल्लकमुटिङ्गणम् ॥ २६६ ॥
कपित्थवल्कलं चैव शताह्वा गजशेलुकम्।
कलिङ्गकाश्च काकोली शटी मोचरसो घनम् ॥ २९७ ॥
कोकिलाक्षस्य बीजानि कसेरुः सहदेविका।
भूनिम्बश्चविका स्पृक्का पद्मकं च निशाद्वयम् ॥ २६८ ॥
धान्यकं सुरदाली च क्षीरकन्दस्तथैव च।
एतानि चाक्षमात्राणि लोहचूर्ण पलाष्टकम् ॥ २६६ ॥
प्रक्षिपेदथ धातक्याः पलानि खलु षोडश।
मासार्धं घृतभाण्डे तु यत्नतः स्थापयेत्क्षितौ ॥ ३०० ॥
अनेन विधिना सिद्ध आसवः परिकीर्तितः।
पीत्वाऽस्य पलमेकं तु प्रातरुत्थाय नित्यशः ॥ ३०१ ॥
धातुक्षयं च मन्दाग्नि प्रमेहं पाण्डुमेव च।
अर्शांसि ग्रहणीदोषान् प्लीहोदरभगन्दरान् ॥ ३०२ ॥
रक्तपित्तामवाते च श्लेष्मरक्तं तथैव च।
निहन्ति वातजान् रोगान् मेदःस्थौल्यापहाऽऽसवः ॥ ३०३ ॥

कूष्माण्डासव—कूष्माण्ड श्वेत कोहड़े को कूटकर यत्नपूर्वक निकाला हुआ रस एक द्रोण तथा गुड आधा द्रोण लेकर घृतलिप्त भाण्ड में रक्खे और इसमें कटुत्रिक ( सोंठ, पीपर, मरिच ), लवंग, चातुर्जात (दालचीनी, इलायची, तेजपत्र, नागकेशर), जायफर, शीतलचीनी, जावित्री, प्रियंगु, कैथ, इन्द्रयव, गोखरू, गुडूचीसत्व, भांगरा, वरियार का बीज, हपुषा ( हाऊवेर ), सुपारी, देवदारु, प्यदावह (भृंगराज), मोथा, खैरसार, चित्रक, त्रिफला ( हर्रे, बहेड़ा, आंवला ), रास्ना, जेठीमधु, तुम्बरू, नागकेशर, ग्रन्थिक ( पिपरामूल ), अजमोदा, कारवी (कलजीरी), अजवायन, कायफर, वंशलोचन, आकल्लक (अकरकरा), उटिङ्गण (उटङ्गन), कैथ की छाल, सौंफ, गज ( गज पीपल ), शेलुक ( लसोड़ा ), कलिंगक (इन्द्रजव), काकोली, कपूरकचरी, शेमर का गोद, मोथा, कोकिलाक्षबीज ( तालमखाना ), कसेरू, सहदेइया, चिरायता, चव्य, स्पृक्का ( लताविशेष, पृका ), पद्मकाठ, आमाहल्दी-दारुहल्दी, धनिया, देवदाली, क्षीरकाकोली—एक २ अक्ष—इन द्रव्यों के चूर्ण तथा लौह भस्म आठ पल, धाय का फूल सोरह पल—इन द्रव्यों को एकत्र कर मिला दे। मुह वन्द कर एक मास तक जमीन पर रक्खे। इस प्रकार सिद्ध ( तैयार ) आसव कहा गया है। इस आसव को जो प्रातः उठकर प्रतिदिन एक पल की मात्रा में पान करता है वह धातुक्षय, मन्दाग्नि, प्रमेह, पाण्डुरोग, अर्श, ग्रहणीदोष, प्लीहोदर, भगन्दर, रक्तपित्त, आमवात, श्लेष्म-रक्त तथा वातजन्य रोगों को नाश करता है। और यह आसव मेदा की स्थूलता को दूर करता है ॥ २९१–३०३ ॥

रसायनारिष्टः—

समूलां पिप्पलीं शृङ्गीं बृहतीमश्मभेदकम् ।
पाटलां देवकाष्ठं च श्वदंष्ट्रामभयां तथा ॥ ३०४ ॥
षोडशपलमेकैकं कोलानामाढकं पृथक् ।
दन्तीचित्रकमूलानां पलानि पञ्चविंशतिम् ॥ ३०५ ॥
चतुर्गुणे जले पक्त्वा ग्राह्यमर्धावशेषितम् ।
शीते समावपेद्भाण्डे प्रलिप्ते मधुसर्पिषा ॥ ३०६ ॥
खण्डस्य द्विशतं शुद्धं तद्वल्लोहस्य दापयेत् ।
पत्रीकृतं तिलोत्सेधं सूक्ष्मचूर्णान्यमूनि च ।
प्रियंगुं पिप्पलीं लोध्रं मृद्वीका चैलवालुकम् ॥ ३०७ ॥
क्रमुकं शतपुष्पां च निम्बं तेजस्वतीमपि ।
पलिकं देवदारोश्च खदिराच्च चतुष्पलम् ॥ ३०८ ॥
क्षौद्रप्रस्थद्वयं चापि समावाप्य घटे शुभे ।
सौम्ये पुष्ये तथा हस्ते रोहिण्यामुत्तरासु च ॥ ३०९ ॥

दशरात्रस्थितः पेयोऽरिष्टश्चात्रेयपूजितः ।
अश्विभ्यां कथितः पूर्वं रसायनवरो ह्ययम् ॥ ३१० ॥
मात्रामग्निबलापेक्षी पिबेदस्य हिताशनः ।
धन्यः पुष्टिकरो बल्यो वलीपलितनाशनः ॥ ३११ ॥

रसायनारिष्ट—पिपरामूल, पीपर, काकड़ासिंघी, बृहती (वनभंटा), पाषाणभेद, पाटला, देवदारु, गोखरू, हर्रे—सोलह २ पल, बेर एक आढ़क, दन्तीमूल, चित्रकमूल पच्चीस २ पल—इन सभी द्रव्यों को यवकुटकर चौगुने जल में पकावे, आधा भाग शेष, शीत क्वाथ को मधु तथा घृत से लिप्त भाण्ड में भर दे और उसमें शुद्ध खांड दो सौ पल, तिल के बराबर मोटा लोहपत्र, प्रियंगु, पीपर, पठानी लोध, मुनक्का, एलवालु, सुपारी, सौंफ, निम्ब, तेजस्वती (तेजबल)—एक २ पल, देवदारु, खदिर—चार २ पल—इन द्रव्यों का चूर्ण तथा दो प्रस्थ मधु मिला दे। मृगशिरा, पुष्य, हस्त, रोहिणी, तीनों उत्तरा इन नक्षत्रों में, दशरात्रि तक संधान करे और उसके बाद छानकर पान करे। यह अरिष्ट आत्रेय द्वारा प्रशंसित है। यह श्रेष्ठ रसायन अश्विनीकुमार के द्वारा पहले कहा गया है। अग्निबल के अनुसार मात्रापूर्वक इस अरिष्ट को पान करे तथा हितकर भोजन करे। यह अरिष्ट उत्तम है, पुष्टि को देने वाला है, बल को देने वाला तथा वली-पलित को नाश करने वाला है ॥ ३०४–३११ ॥

ज्वरे धान्यकाद्यरिष्टः—

धान्यकोशीरमुस्तानां पलमेकत्र कारयेत् ।
द्विपलं पद्मकं कुष्ठं कुर्यान्निम्बं तदर्धकम् ॥ ३१२ ॥
सर्वांशेन ततो दद्याच्छिन्नाङ्गां च फलत्रिकम् ।
जलद्रोणद्वयं दत्त्वा षोडशांशेन संहरेत् ॥ ३१३ ॥
पलं दार्व्यास्ततस्तस्मिन् शीते पूते भिषग्वरः ।
पलानि षोडश क्षौद्राद्दत्त्वा सर्वं विमन्थयेत् ॥ ३१४ ॥
स्थापयेद् घृतभाण्डे तु मासादूर्ध्वं प्रयोजयेत् ।
धान्यकादिररिष्टोऽयं सर्वज्वरविनाशनः ॥ ३१५ ॥

ज्वर में धान्यकारिष्ट—धनिया, खस, मोथा—एक २ पल, पद्मकाठ, कूठ—दो २ पल, निम्ब एक पल, गुडूची तथा त्रिफला सभी द्रव्यों के बराबर (आठ २ पल) लेकर दो द्रोण जल में पकावे, सोरहवां भाग शेष रहने पर कपड़ा से छानकर ठंढा होने पर दारुहल्दी एक पल, मधु सोरह पल डालकर सभी द्रव्यों को मिलाकर घृतलिप्त भाण्ड में भरकर एक मास तक जमीन पर रक्खे। एक मास के बाद छानकर प्रयोग करे। यह धान्यकारिष्ट सभी प्रकार के ज्वरों को नाश करता है ॥ ३१२–३१५ ॥

धातुक्षये लवङ्गासवः—

देवपुष्पं वराङ्गं च केशरं पृथुकां तथा ।
कलौञ्जीं मर्कटीबीजं मुशलीद्वयगोक्षुरम् ॥ ३१६ ॥
बलाबीजानि पोस्तत्त्वग्बीजं च करहाटकम् ।
पृथक् पृथक् प्रकुर्वीत पलानां पञ्चकं तथा ॥ ३१७ ॥
चतुर्द्रोणेऽम्भसः पक्त्वा कुर्यात्पादावशेषितम् ।
शटी च पिप्पलीमूलं मरिचं साश्वगन्धकम् ॥ ३१८ ॥
शुण्ठी जातीफलं चापि कुङ्कुमं जातिपत्रिका ।
आकल्लकं कबाब च ह्येला कृष्णाऽगुरुस्तथा ॥ ३१९ ॥
तालिसं चन्दनं चैव विजया क्षीरकन्दका ।
वृद्धदारुभवं बीजं क्रमुकं वंशरोचना ॥ ३२० ॥
धत्तूरस्य च बीजानि पलमात्राणि कारयेत् ।
सर्वमेकत्र संचूर्ण्य पूते शीते विनिक्षिपेत् ॥ ३२१ ॥
द्वात्रिंशत्पलिकं क्षौद्रं धातक्याश्च पलाष्टकम् ।
तुलार्धं तु गुडाज्जीर्णाद् घृतभाण्डे विनिक्षिपेत् ॥ ३२२ ॥
मासादूर्ध्वं पिबेदेनं प्रमेहं हन्ति दुर्जयम् ।
धातुक्षयं जयेच्छीघ्रं लवङ्गाद्यासवस्त्वयम् ॥ ३२३ ॥

धातुक्षय में लवंगासव—लवंग, दालचीनी, केशर, पृथुका ( हिंगुपत्री ), कलौञ्जी ( मंगरैल ), मर्कटबीज ( केवाछ का बीज ), दोनों मुसली ( कृष्णमुसली, सफेदमुसली ), गोखरू, बरियार का बीज, पोस्तत्वक् ( पूतिकरंज की छाल ) तथा बीज, करहाटक ( मदनफल )—पांच २ पल—चार द्रोण जल में पकावे, एक द्रोण शेष रहने पर छानकर ठंढा होने पर शटी ( कपूरकचरी ), पिपरामूल, मरिच, अश्वगन्धा, सोंठ, जायफर, केशर, जावित्री, आकल्लक ( अकरकरा ), कबाब ( कबाबचीनी ), इलायची, पीपर, अगरु, तालीस पत्र, चन्दन, विजया (भांग), क्षीरकन्दका (क्षीरविदारी), विधारा बीज, सुपारी, वंशलोचन, धतूर बीज—एक २ पल—इन द्रव्यों के चूर्ण बत्तीस पल, मधु, धाय का फूल आठ पल, पुराना गुड़ आधा तुला ( पचास पल )—सभी द्रव्यों को एकत्र कर घृतलिप्त भाण्ड में भरकर एक मास तक जमीन पर रक्खे। एक मास बाद छानकर पान करे। यह लवंगाद्यासव दुर्जय प्रमेह को नाश करता है तथा धातुक्षय को शीघ्र ही जीत लेता है ॥ ३१६-३२३ ॥

विद्रधौ वरुणासवः—

शतं पलानां वरुणस्य मूलं त्वक् शिंशपायाश्च तदर्धमात्रा ।

तावत्तथा पुष्करमूलमुक्तं तदर्धमग्निश्च तदर्धमात्रः ॥ ३२४ ॥
कुरण्टको रोहितकत्वचश्च तावच्च शिग्रुदेशमूलकं च ।
पलानि त्रिंशत्खलु देवदारोः क्षुद्रा च तुल्या सुरदारुणा च ॥ ३२५ ॥
दर्भस्य मूलानि पलानि पञ्च हिंस्रातरोस्त्रीणि च कण्टकार्याः ।
राजादनस्यापि पलानि सप्त शतावरीमूलपलत्रयं च ॥ ३२६ ॥
तत्तुल्यकाश्मर्यकमर्जुनश्च शृंगी शताह्वा गजपिप्पली च ।
बलाशटीनागबलाकरञ्जत्रायन्तिकाकेवुकमेषशृङ्ग्यः ॥ ३२७ ॥
कुष्ठं च वासासितकर्बुकं च विडङ्गकृष्णातिविषाश्च जीरम् ।
चव्यं च रास्नोत्पलसारिवा च स्यात्कौटजश्चाऽप्यथ दीप्यकं च। ३२८॥
वातार्यरिष्टारुरनार्यतिक्तं रक्ताऽमृता तेजनी(नि)वल्कलं च ।
स्व्याधिघाता हपुषा च भृङ्गी प्रत्येकमेषां हि पलद्वयं तु ॥ ३२९ ॥
पचेज्जलद्रोणचतुष्टये च तत्पादशेषे पलषट्शतं च ।
क्षिपेद् गुडं माक्षिकधातकीनां पलानि त्रिंशत्सकलं पुनस्तत् ॥३३०॥
निधापयेन्मांस्यगुरुप्रधूपिते भाण्ड ततः कुङ्कुमचन्दनद्वयम् ।
पलं क्षिपेद्वै कतकं निशाकरं लवङ्गमाकल्लकवंशरोचनम् ॥ ३३१ ॥
भार्गी सुराष्ट्री तगरं कबाबं जातीफल पत्रकजातिपत्र्यौ ।
लोहं चतुर्जातकबालकं च प्रत्येकमेषां हि पलं विनिक्षिपेत् ॥ ३३२ ॥
मासं निधेयो यवमध्यतस्तु पेयो यथाव्याधिबलं समीक्ष्य ।
प्लीहोदरं विद्रधिगुल्मकासं श्वासं तथा रक्तविकारहिक्के ॥ ३३३ ॥
शूलामवातार्बुदपाण्डुरोगं कुष्ठं तथा छर्दिसरोचकं च ।
शोफं तथाऽऽध्मानभगन्दरं च शुक्राश्मरीं ग्रन्थिमनेकभेदम् ॥३३४॥
शोपापतानार्दितपक्षघातसन्धिग्रहार्तींश्च हलीमकं च ।
निहन्ति वन्ध्यासुतदोऽथ वृष्यः प्राणप्रदोऽयं वरुणासवो हि ॥३३५॥
पित्तानिलश्लेष्मरुजापहश्च वैतालरक्षोग्रहभीतिहन्ता ।
ग्रन्थान्समालोक्य चिकित्सकानां हिताय नून कथितो मया हि॥३३६॥

विद्रधि में वरुणासव—वरुण का मूल सौ पल, शिंशपा (शीशम की जड़) पचास पल, पुष्करमूल पचास पल, चित्रक पच्चीस पल, कुरण्ट ( पीतझिण्टी ) साढ़े बारह पल, रोहितक की छाल साढ़े बारह पल, सहिजन साढ़े बारह पल, दशमूल, ( विल्व, गम्भारी, स्योनाक, पाढल, अरणी, शालपर्णी, पृश्निपर्णी, वनभंटा, रेगनी, गोखरु ) साढ़े बारह पल, देवदारु तीस पल, छोटी कटेरी तीस पल, इन्द्रायण तीस पल, दर्भ का मूल पांच पल, हिंस्रातरु ( हिंस्र ) तीन पल, कण्टकारी ( भटकटैया ) सात पल, राजादन ( खिरिनी ) सात पल, शतावरीमूल तीन पल, गम्भारी तीन पल, अर्जुन तीन पल, काकड़ासिंघी, सौंफ, गजपीपर, बरियार, कपूरकचरी, नागबला ( गगेरन ), करञ्ज, त्रायमाणा, केवुक

( केमुककन्द वृक्षविशेष वै. श. सि. ), मेढ़ासिंघी, कूट, अडूसा, असित (धववृक्ष), कर्बुक (गन्ध शटी), विडंग, पिप्पली, अतीस, जीरा, चव्य, रास्ना, नील कमल का फूल, सारिवा, कौटज (इन्द्रजव), अजवायन, वातारि (एरण्ड), निम्ब, अरुः (रक्त-खदिर) अनार्यतिक्त, (चिरायता), रक्ता (मंजीठ ), गुडूची, तेजनीवल्कल (तेजवल की छाल ), व्याधिघात ( अमलतास ), हाऊवेर तथा भृङ्गी ( भृङ्गराज )—दो २ पल—इन द्रव्यों को यवकुटकर चार द्रोण जल में पकावे, एक द्रोण शेष रहने पर गुड़ छः सौ पल ( छः तुला ), मधु तथा धाय का फूल तीस २ पल—इन सभी द्रव्यों को जटामांसी तथा अगरु से धूपित घृतस्निग्ध भाण्ड में भर दे और केशर, सफेद चन्दन, लाल चन्दन—एक २ पल, कतक ( निर्मली ), निशाकर ( कपूर ), लवंग, आकल्लक ( अकरकरा ), वंशलोचन, भांगरा, सुराष्ट्री ( गोपीचन्दन ), तगर, कबाबचीनी, जायफर, तेजपत्र, जावित्री, लौहभस्म, चातुर्जात ( दालचीनी, इलायची, तेजपत्र, नागकेशर ) तथा बालक ( सुगन्धवाला )—एक २ पल—इन द्रव्यों के चूर्ण को मिलाकर मुह बन्द कर एक मास तक यवराशि के मध्य में रक्खे। एक मास बाद छान कर रोग के बल को देखकर मात्रापूर्वक पान करे। यह वरुणासव—प्लीहोदर, विद्रधि, गुल्म, कास, श्वास, रक्तविकार, हिक्का, शूल, आमवात, अर्बुद, पाण्डुरोग, कुष्ठ, छर्दि, अरोचक, शोथ, आध्मान, भगन्दर, शुक्राश्मरी ( वीर्य की पथरी ), अनेक प्रकार के ग्रन्थिरोग, शोष ( सूखारोग ), अपतानकवात, अर्दित, पक्षाघात, सन्धिग्रह तथा हलीमक आदि रोगों को नाश करता है और वन्ध्या स्त्रियों को पुत्र देनेवाला, शक्तिवर्द्धक तथा प्राणप्रद है। पैत्तिक, वातज तथा श्लैष्मिक रोगों को दूर करता है और वैताल ( भूत ), राक्षस, दुष्ट ग्रह—इन सबों के भय को नष्ट करनेवाला है। इस योग को मैंने अनेक ग्रन्थों को देखकर चिकित्सकों के हित के लिये कहा है॥ ३२४–३३६॥

प्लीहरोगे रोहीतकासवः—

रोहीतकात्तुलामेकां चतुर्द्रोणेऽम्भसः पचेत्।
द्रोणशेषे रसे तस्मिन् पूते शीते प्रदापयेत्॥ ३३७॥
पलानि खलु धातक्याः षोडश द्विशतं गुडात्।
पलं पृथक् त्रिजातस्य पञ्चकोलपलं तथा॥ ३३८॥
चूर्णीकृतं क्षिपेत्सर्वं घृतलिप्ते तु भाजने।
पक्षादूर्ध्वं पिबेच्चापि ततो मात्रां यथाबलम्॥ ३३९॥
प्लीहं प्लीहोदरं चैव प्लीहशूलं तथैव च।
हृच्छूलं पार्श्वशूलं च तथा सर्वमरोचकम्॥ ३४०॥
हन्ति विबन्धशूलं च पाण्डुरोगं सकामलम्।

नाशयेच्छर्दतीसारं ज्वरं जीर्णं तथैव च ॥ ३४१ ॥
रोहितकासवो ह्येष प्लीहं च शमयेद् ध्रुवम् ।

प्लीहारोग में रोहीतकासव—रोहीतक ( रोहिड़ा ) एक तुला जल चार द्रोण में पकावे, एक द्रोण शेष क्वाथ को छानकर ठंढा होने पर घृतलिप्त भाण्ड में भरकर धाय का फूल सोरह पल, गुड़ दो सौ पल, त्रिजात ( दालचीनी, इलायची, तेजपत्र ) पृथक् एक २ पल, पञ्चकोल ( पीपर, पीपरामूल, चव्य, चित्रक, सोंठ )—एक २ पल—इन द्रव्यों को चूर्ण कर मिला दे और मुह वन्द कर जमीन पर पन्द्रह दिन तक रक्खे, इसके वाद छानकर वल के अनुसार मात्रापूर्वक पान करे। यह रोहितकासव—प्लीहारोग, प्लीहोदर, प्लीहाशूल, हृदय का शूल, पार्श्वशूल, सभी प्रकार के अरोचक, विवन्धशूल ( कोष्ठबद्धता के कारण शूल), पाण्डुरोग तथा कामला रोग को नाश करता है और छर्दि अतिसार तथा जीर्ण ज्वर को भी नाश करता है। यह आसव प्लीहारोग को अवश्य ही शान्त करता है ॥

गण्डीरासवः—

जातसारं तु गण्डीरं सपुष्पं परिशोषयेत् ॥ ३४२ ॥
खण्डशः क्षोदितं कृत्वा तस्य पञ्चाढकं पचेत् ।
त्रींश्चैव त्रिफलाप्रस्थान् दशमूलीतुलां तथा ॥ ३४३ ॥
दद्यात्कुटजवल्कस्य पलानां पञ्चविंशतिम् ।
इन्द्रयवं सभल्लातं विडङ्गं घनमेव च ॥ ३४४ ॥
अर्धप्रस्थसमं भागानेकैकस्य समावपेत् ।
पाठा मधुरसा दन्ती पड्ग्रन्था चित्रकस्तथा ॥ ३४५ ॥
एषां दशपलान् भागान्मृद्वीकायास्तथाऽऽढकम् ।
दशद्रोणेषु तोयस्य पचेद् द्विद्रोणशेषितम् ॥ ३४६ ॥
पूते तस्मिन्कषाये तु गुडस्यैकां तुलां क्षिपेत् ।
तथा तु शोधितस्यापि, शुभे भाण्डे निधापयेत् ॥ ३४७ ॥
द्वौ प्रस्थौ मधुनश्चैव द्वावयोरजसस्तथा ।
अर्धप्रस्थौ पिडङ्गानां कुडवो मरिचस्य च ॥ ३४८
एतयोः सूक्ष्मचूर्णानि प्रतिवापार्थमाहरेत् ।
चूर्णं मरीचकानां च मधुना सह योजयेत् ॥ ३४९ ॥
कर्तव्यो भाण्डलेपस्तु समासिच्य निधापयेत् ।
एष मासस्थितः पेयो यथाव्याधिबलाबलम् ॥ ३५० ॥
गण्डीरारिष्ट इत्येष व्यासतः परिकीर्तितः ।
एष शोषान् प्रमेहांश्च गुल्मांश्च जठराणि च ॥ ३५१ ॥

क्रिमिकुष्ठानि वर्ध्मानि प्लीहार्शांसि भगन्दरम् ।
श्वयथून् पाण्डुरोगांश्च ग्रहणीदोषमेव च ॥ ३५२ ॥
ग्रन्थींश्च गलगण्डं च गण्डमालां तथैव च ।
विषमज्वरकासांश्च विद्रधीन् वातशोणितम् ।
अरिष्टः शमयत्याशु युधि शक्र इवासुरान् ॥ ३५३ ॥

गण्डीरासव—परिपक्व गण्डर दूब को पुष्पसहित सुखा ले और छोटे २ टुकड़ा काटकर पांच आढक ले ले, और त्रिफला ( हर्रे, बहेड़ा, आंवला ) तीन प्रस्थ, दशमूल ( विल्व, गम्भारी, स्योनाक, पाढल, अरणी, शालपर्णी, पृश्निपर्णी, वनभंटा, रेगनी, गोखरू )—एक तुला, कुटज ( कोरैया ) की छाल पच्चीस पल, इन्द्रयव, भल्लातक, विडंग, मोथा—आधा २ प्रस्थ ( आठ २ पल ), पाठा ( पाढ़ी ), मधुरसा ( मूर्वा ), दन्तीमूल, वच तथा चित्रक—दश २ पल, मुनक्का एक आढक—इन द्रव्यों का यवकूट चूर्ण ( मोटा चूर्ण ) लेकर दश द्रोण जल में क्वाथकर दो द्रोण शेष क्वाथ छानकर उसमें गुड़ एक तुला मिलाकर अच्छी तरह परीक्षित मजबूत स्वच्छ भाण्ड में भर दे और उसमें मधु दो प्रस्थ, लौह-भस्म दो प्रस्थ मिला दे । विडंग आधा प्रस्थ, मरिच एक कुडव—इन द्रव्यों के सूक्ष्म चूर्ण को प्रक्षेप करे पहले भाण्ड को मरिच का चूर्ण मधु में मिलाकर अच्छी तरह लेप कर दे बाद उसमें सभी द्रवद्रव्य तथा चूर्ण द्रव्यों को भरे और एक मास तक जमीन पर रक्खे । इसके बाद छानकर व्याधि-बलाबल के अनुसार मात्रा में पान करे । गण्डीरारिष्ट विस्तारपूर्वक कहा गया है । यह अरिष्ट—शोष, प्रमेह, गुल्म, जठररोग, कृमिरोग, कुष्ठरोग, वर्ध्म, प्लीहा, अर्श, भगन्दर, शोथ, पाण्डुरोग, ग्रहणी दोष, ग्रन्थिरोग, गलगण्ड, गण्डमाला, विषमज्वर, कास, विद्रधि तथा वातरक्त आदि रोगों को शीघ्र शान्त करता है । जैसे इन्द्र युद्ध में असुरों को शीघ्र शान्त कर दिये ।

प्लीहरोगे रोहीतकासवः—

तुलाद्वयं रोहितमूलकानां द्विद्रोणमात्रेण जलेन पक्त्वा ।
देयं गुडस्य द्विशतं पलानामष्टादश स्युस्त्रिफलापलानि ॥ ३५४ ॥
लवङ्गजातीफलधातकीनां पलानि लोहस्य षडेव दद्यात् ।
देयं चतुर्जातकपञ्चकोलं पृथक् पृथक् पञ्चपलं तथैव ॥ ३५५ ॥
गुल्मज्वरारोचकहृद्विकारभगन्दरप्लीहनिपीडितानाम् ।
रक्तामयश्वासनिपीडितानां सदाऽऽसवोऽयं विधिना प्रयोज्य. ॥ ३५६ ॥

प्लीहारोग में रोहितकासव—रोहितक ( रोहिड़ा ) का मूल दो तुला, जल दो द्रोण में पकाकर चतुर्थांश शेष क्वाथ को छानकर उसमें गुड़ दो सौ पल, त्रिफला ( हर्रे, बहेड़ा, आंवला ) अठारह पल, लवंग, जायफर, धाय का

फूल, लोह ( अगर ) छः पल, चतुर्जात ( दालचीनी, इलायची, तेजपत्र, नागकेशर ) पांच पल, पंचकोल ( पीपर, पिपरामूल, चव्य, चित्रक, सोंठ, ) पांच पल—इन द्रव्यों के चूर्ण को मिलाकर घृतलिप्त भाण्ड में एक मास रक्खे। एक मास बाद इस आसव को गुल्म, ज्वर, अरोचक, हृदयविकार, भगन्दर तथा प्लीहा, इन रोगों से पीड़ित तथा रक्तरोग, श्वास से पीड़ित व्यक्तियों के लिये विधिपूर्वक सदा प्रयोग करना चाहिए ॥ ३५४–३५६ ॥

योगराजासवः—

द्राक्षायाः शर्करायाश्च गुडस्य च पृथक् पृथक् ।
पलानि दश कार्याणि पथ्यापलचतुष्टयम् ॥ ३५७ ॥
लवङ्गबदरीसर्जार्जुनानां तु त्वचस्तथा ।
पलं पलं पृथग्ग्राह्यं देवदारुपलं तथा ॥ ३५८ ॥
चित्रकस्य च लोध्रस्य पिप्पलीमूलकस्य च ।
धातकीकुसुमानां च तद्वद्देयं पलं पलम् ॥ ३५९ ॥
तथा पूगफलानां तु कषायाणां पलं मतम् ।
मञ्जिष्ठायाः पले द्वे तु क्वाथ्यसंज्ञानि तानि च ॥ ३६० ॥
लवङ्गकलिकाजातीपत्रैलानागकेशरम् ।
मरीचपिप्पलीशुण्ठीत्वङ्मांसीचव्यमुस्तकम् ॥ ३६१ ॥
कुष्ठं जातीफलं ग्रन्थिपर्णं स्नुक् कटुरोहिणी ।
एषां पलं पलं ग्राह्यं तज्ज्ञेयं चूर्णसंज्ञितम् ॥ ३६२ ॥
क्वाथ्यद्रव्यात्ततः सम्यग्जलमष्टगुणं क्षिपेत् ।
क्वाथं तदुदके कुर्यादर्धभागावशेषितम् ॥ ३६३ ॥
तत्क्वाथं वस्त्रपूतं तु भाण्डेऽन्यस्मिन्मनोहरे ।
कृत्वाऽत्र प्रक्षिपेच्चूर्णं तद्भाण्डं धान्यराशिगम् ॥ ३६४ ॥
कृत्वा सप्तदिनं शीते काले चोष्णमये तथा ।
यावद्दिनानि त्रीणि स्युः पश्चाद्भाण्डे समुद्धरेत् ॥ ३६५ ॥
पुनस्तद्वस्त्रपूतं तु भाण्डे कर्पूरवासिते ।
निक्षिप्य सेवयेत्प्रातः पलमात्रोपलक्षितम् ॥ ३६६ ॥
स दत्तो वातपित्तघ्नो दीपनो रक्तरोगनुत् ।
योगराज इति ख्यात आसवोऽयं गुणोत्तरः ॥ ३६७ ॥

योगराजासव—मुनक्का, शर्करा, गुड दश २ पल, हर्रे चार पल, लवंग, बेर, सर्ज, अर्जुन, दालचीनी अलग २ एक पल, देवदारु एक पल, चित्रक, पठानीलोध्र, पिपरामूल तथा धाय का फूल एक २ पल, पूगफल (सुपारी) तथा कषाय द्रव्य एक २ पल मंजीठ दो पल—इन क्वाथ्य-संज्ञक द्रव्यों को द्रव्य से

अठगुने जल से क्काथ करने पर शेष आधे क्काथ को छानकर स्वच्छ भाण्ड में भर॰ कर, उससे लवंगकलिका (लवंग का फूल), जावित्री, इलायची, नागकेशर, मरिच, पीपर, सोंठ, दालचीनी, जटामांसी, चव्य, मोथा, कूठ, जायफर, ग्रन्थिपर्ण (गठि-वन या कुकुरौंधा) सेहुंड़ तथा कुटकी एक २ पल—इन द्रव्यों के चूर्ण को छोड़कर उस भाण्ड को धान्य की राशि में शीतकाल मे सात दिन, उष्णकाल में तीन दिन रक्खे और उसके बाद निकाल ले तथा पुन. कपड़े से छान कर कर्पूर से सुगन्धित पात्र में रक्खे और एक पल की मात्रा में प्रातः पान करे। यह आसव वात-पित्त को नाश करता है दीपन है और रक्तरोग को दूर करता है। यह योगराज नामक आसव उत्तरोत्तर गुणवान होता है ॥ ३५७–३६७ ॥

अर्शोरोगे पील्वासवः—

मूर्वाखर्जूरपाठानिलरिपुमधुकं कच्छुरा हारहूरा
कोलत्वग्वेतसाम्लं दहनमिशिकणाकृष्णविश्वालवङ्गम्।
त्वग्लोध्राद्दाडिमाच्च पलमिति पृथग् दन्तिमूलेन युक्त
पीलुद्रोणे द्विपक्षं गुडपलशतयुग् धान्यराशौ निदध्यात् ॥ ३६८ ॥
अर्शः प्लीहं च गुल्मं जठरगदमथो नाशयेच्चाग्निमान्द्यं।
कुर्याच्चाग्नि प्रदीप्तं प्रबलबलयुत पीलुसंज्ञासवोऽयम् ॥ ३६९ ॥

अर्शरोग मे पिप्पल्यासव—मूर्वा, खजूर, पान ( पाढ़ी ), अनिलरिपु (एरण्ड), मुलेठी, कच्छुरा (यवासा), हारहूरा (उत्तरा गोस्तनिका द्राचा विशेष), कोल (बैर), दालचीनी, अम्लवेत, चित्रक, सौफ, पिप्पली, मरिच, सोंठ, लवंग, पठानीलोध तथा दाडिम ( अनार ) की छाल अलग २ एक २ पल, दन्तीमूल एक पल, पीलुरस एक द्रोण, गुड़ दो सौ पल—इन सभी द्रव्यों को भाण्ड मे भरकर मुँह बन्द कर एक माह तक धान्य की राशि में रक्खे। एक मास बाद सिद्ध यह पीलुसंज्ञक आसव अर्शरोग, प्लीहा, गुल्म, जठररोग तथा अग्नि मान्द्य को नाश करता है और अग्नि को प्रदीप्त करता है तथा मनुष्य को बलवान बनाता है ॥ ३६८–३६९ ॥

प्रमेहे मध्वासवः—

विशालातिविषाभार्गीकुष्ठमुस्ताप्रियङ्गवः।
विडङ्गत्रिफलाकृष्णाचव्यग्रन्थिकदीप्यकाः ॥ ३७० ॥
अक्षांशान् सलिलद्रोणे पक्त्वा पादावशेषिते।
दत्त्वा क्षौद्रं तदर्ध हि स्निग्धे भाण्डे निधापयेत्।
एष मध्वासवो हन्ति मेहं द्विपलयोजितः ॥ ३७१ ॥

प्रमेहरोग में मध्वासव—इन्द्रायण, अतीस, भांगरा, कूठ, मोथा, प्रियंगु, विडंग, त्रिफला, पीपर, चव्य, पीपरामूल तथा अजवायन—एक २ अक्ष—इन

द्रव्यों को एक द्रोण जल में पकाकर चौथाई शेष क्वाथ में उस क्वाथ का आधा मधु डालकर स्निग्ध भाण्ड में भरकर रक्खे। यह मध्वासव दो पल की मात्रा में प्रयोग करने से प्रमेह को नष्ट करता है ॥ ३७०–३७१ ॥

लोहासवः—

फलत्रिकं निम्बपटोलमुस्ता-पाठामृताचित्रकचन्दनं च।
वेल्लं समङ्गा च मधूकसार-कर्चूरवासात्रिवृताहरिद्राः ॥ ३७२ ॥
दुरालभापर्पटकण्टकारी-शक्राशनं यासकचर्मरङ्गे।
शशाङ्कलेखाकपिकच्छुमूलं मेथी च बिल्वं कुटजश्च तिक्ता ॥ ३७३ ॥
त्रायन्तिका पुष्करकस्य मूलं पलैकमानानि महौषधानि।
षष्टिः पलानां खदिरस्य सारो ह्ययोरजः स्यात्पलयुग्ममानम् ॥३७४॥
स्याल्लोहकिट्टं च तुलाप्रमाणं तत्पञ्चकं केवुकजीवनीयम्।
प्रक्षिप्य भाण्डे शशियुग्मघस्रान् सूर्यातपे स्थाप्य ततस्तु योज्यः
लोहासवोऽयं भिषजोपदिष्टः सर्वोत्तमो रोगविनाशहेतुः ॥ ३७५ ॥

इति श्रीसोढलग्रथिते गदनिग्रहे षष्ठ आसवाधिकारः संपूर्णः।
समाप्तश्चायं प्रथमः प्रयोगखण्डः।



लोहासव—त्रिफला, निम्ब, पटोलपत्र, मोथा, पाठा ( पाढी ), गुडूची, चित्रक, रक्तचन्दन, विडंग, मंजीठ, मधूकसार ( महुआ की लकड़ी ), कचूर, अडूसा, निशोथ, हल्दी, यवासा, पित्तपापड़ा, कण्टकारी ( कटेरी ), शक्राशन ( भांग ), यासक ( धमासा ) चर्मरङ्गा ( शब्दार्थ चिन्तामणि मे आवर्तिकी लता विशेष 'आहुल' ), शशाङ्कलेखा ( वाकुची ), कपिकच्छु मूल ( केवाछ की जड़ ), मेथी, बिल्व, कोरैया, कटुकी, त्रायमाणा, पुष्करमूल—एक २ पल, खैरसार साठ पल, लौहभस्म दो पल, लोहकिट्ट ( मण्डूर ) एक तुला, केवुक जीवनीय ( जल ) पांच तुला—इन सभी द्रव्यों को भाण्ड मे छोडकर एक्कीस दिन तक सूर्य के धूप मे रक्खे और एक्कीस दिन के बाद प्रयोग करे। वैद्यों का बताया हुआ यह लोहासव सभी औषधों मे उत्तम है और रोगों को नाश करनेवाला है ॥ ३७२–३७५ ॥

इति श्री सोढल-ग्रथित गदनिग्रह मे छठां आसवाधिकार समाप्त।
गदनिग्रह का प्रथम प्रयोग खण्ड समाप्त।



# परिशिष्टम् १

## स्नेहचूर्णगुटीलेहासवानां परिभाषाः

( वैद्य श्री यादवजी त्रिकमजी आचार्य )

अत्र गदनिग्रहे वैद्यवरसोढलेन घृतादिसाधनपरिभाषा नोक्ता, अतोऽध्येतॄणां सौकर्यार्थं मया संक्षेपेण परिभाषा निर्दिश्यते। तत्र पूर्वं मानपरिभाषैव ज्ञेया भवति। अतः सोच्यते—

न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित्।
अतः प्रयोगकार्यार्थं मानमत्रोच्यते मया॥
यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम्।
षड्भिस्तु रक्तिकाभिः स्यान्माषको हेमधान्यकौ॥
माषैश्चतुर्भिः शाणः स्याद्धरणं तन्निगद्यते।
टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते॥
क्षुद्रको वटकश्चैव द्रङ्क्षणः स निगद्यते।
कोलद्वयं च कर्षः स्यात्स प्रोक्तः पाणिमानिका॥
अक्षः पिचुः पाणितलं किञ्चित्पाणिश्च तिन्दुकम्।
बिडालपदकं चैव तथा षोडशिका मता॥
करमध्यो हंसपदं सुवर्णं कवडग्रहः।
उदुम्बरं च पर्यायैः कर्ष एव निगद्यते॥
स्यात्कर्षाभ्यामर्धपलं शुक्तिरष्टमिका तथा।
शुक्तिभ्यां च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका॥
प्रकुञ्चः षोडशी बिल्वं पलमेवात्र कीर्त्यते।
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतश्च निगद्यते॥
प्रसृतिभ्यामञ्जलिः स्यात्कुडवोऽर्धशरावकः।
अष्टमानं च स ज्ञेयः, कुडवाभ्यां च मानिका॥
शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः।
शरावाभ्यां भवेत्प्रस्थश्चतुःप्रस्थैस्तथाऽऽढकम्॥
भाजनं कंसपात्रं च चतुःषष्टिपलं स्मृतम्।
चतुर्भिराढकैर्द्रोणः कलशो नल्वणोऽर्मणः॥

उन्मानं च घटो राशिर्द्रोणपर्यायसंज्ञकाः ।
द्रोणाभ्यां सूर्पकुम्भौ च चतुःषष्टिशरावकः ॥
सूर्पाभ्यां च भवेद् द्रोणी वाहो गोणी च सा स्मृता ।
द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः ॥
चतुःसहस्रपलिका षण्णवत्यधिका च सा ।
पलानां द्विसहस्रं च भार एकः प्रकीर्तितः ॥
तुला पलशतं ज्ञेयं सर्वत्रैष विनिश्चयः ।
मापटङ्काख्यबिल्वानि कुडवः प्रस्थ आढकम् ।
राशिर्द्रोणिः खारिकेति यथोत्तरचतुर्गुणाः ॥

युक्तिः योजना, कर्तव्यविधिरिति यावत् । यवेत्यादि अत्र परमाण्वादिमाना-कथनं तु तेषां चिकित्सायामनुपयोगादेव । सर्षपोऽत्र गौरसर्षपः । तैरष्टभिरेको यवः । यवोऽत्र निस्तुषो ग्राह्यः । चतुर्भिर्यवैरेका गुञ्जा, सा चात्र रक्ता ज्ञेया । षड्भिः रक्तगुञ्जाभिरेको माषकः । अयं च सुवर्णमाषक इति सुश्रुतादौ प्रसिद्धः । चतुर्भिर्माषकैरेकः शाणः । द्वाभ्यां शाणाभ्यामेकः कोलः, द्वाभ्यां कोलाभ्यां चैकः कर्षः । स च संप्रति भारतवर्षे प्रचलितरूप्यकाख्यव्यावहारिक-द्रव्यपरिमितः । अतो माषशाणकोला यथाक्रमं एकाणक-आणकचतुष्टय-अर्धरूप्यक-( रू० ४॥, रू० ।, रू० ।।, ) परिमिता ज्ञेया । शरावस्य 'शेर' इति नाम्ना भाषायां व्यवहारः, द्रोणस्य च 'मण' इति नाम्ना । अन्यत्स्पष्टम् ।

शुष्काणां स्यादिदं मानं द्विगुणं तद्द्रवार्द्रयोः ।
न द्वैगुण्यं तुलामाने पलोल्लेखागते तथा ॥
शुष्कद्रव्येषु यन्मानमार्द्रस्य द्विगुणं हि तत् ।
शुष्कस्य गुरुतीक्ष्णत्वं तस्मादर्धं प्रयोजयेत् ॥
शुष्कं नवीनं यद्द्रव्यं योज्यं सकलकर्मसु ।
आर्द्रं च द्विगुणं दद्यादेष सर्वत्र निश्चयः ॥

यत्र प्रयोगे यद्द्रव्यं शुष्कमुपयुज्यते तस्य यावन्मानं लिखितं तावन्मितमेव तद्ग्राह्यं, तदेव यद्यार्द्रमुपयुज्यते तदोक्तमानापेक्षया द्विगुणं ग्राह्यं; यच्च द्रव्यं क्षीर-तोयादिकं द्रवमेवोपयुज्यते तदप्युक्तमानापेक्षया द्विगुणं ग्राह्यं, एतच्च द्रवार्द्रयोर्द्वैगुण्यं रक्तिकादौ कुडवादौ च सर्वत्रैव ज्ञेयं, परं यत्र तुलामानं यत्र वा पलशब्देन मानो-ल्लेखः यथा-'रोहितकत्वचः श्रेष्ठात्पलानां पञ्चविंशतिः' इत्यादौ तत्र तु द्रवार्द्रयोर्द्वैगुण्यं न कार्यम् । यत्तु "गुञ्जादिमानमारभ्य यावत्स्यात्कुडवस्थितिः । द्रवार्द्र-शुष्कद्रव्याणां तावन्मानं समं मतम् ॥ प्रस्थादिमानमारभ्य द्विगुणं तद्द्रवार्द्रयोः"—इति तत्तु न प्रमाणं, युक्तिविरोधाच्चरकसुश्रुतविरोधाच्च । येषां

तु द्रव्याणामार्द्रतायामेव नियमतः प्रयोगो न शुष्कतायां, तेषामार्द्राणां द्वैगुण्यं न कार्यं; आर्द्रतायामेवैषामुपयोगस्तु तदवस्थायामेवैषामुत्कृष्टवीर्यत्वात्। तानि च यथा—

"गुडूची कुटजो वासा कुष्माण्डं च शतावरी। अश्वगन्धासहचरौ शतपुष्पा प्रसारणी॥ प्रयोक्तव्या सदैवार्द्रा द्विगुणं नैव कारयेत्—" इति। अन्यच्च—"वासानिम्बपटोलकेतकिवलाकुष्माण्डकेन्दीवरीवर्षाभूकुटजाश्वगन्धसहितास्ताः पूतिगन्धामृताः। मांसं,नागबला सहाचरपुरौ हिङ्ग्वार्द्रके नित्यशो ग्राह्यास्तत्क्षणमेव न द्विगुणिता ये चेक्षुजाता घनाः"—इति।

अथ भेषजादिग्रहणसंकेतः—

लवणं सैन्धवं प्रोक्तं चन्दनं रक्तचन्दनम्।
चूर्णलेहासवस्नेहाः साध्या धवलचन्दनैः॥
कषायलेपयोः प्रायो युज्यते रक्तचन्दनम्।
पयःसर्पिःप्रयोगेषु गव्यमेव हि गृह्यते॥
शकृद्रसो गोमयकं सूत्रं गोमूत्रमुच्यते।
सिद्धार्थः सर्षपे ग्राह्य उत्पले नीलमुत्पलम्॥
कालेऽनुक्ते प्रभातं स्यादङ्गेऽनुक्ते जटा भवेत्।
भागेऽनुक्तेच साम्यं स्यात् पात्रेऽनुक्ते च मृन्मयम्॥
द्रवेऽनुक्ते जलं ग्राह्य तैलेऽनुक्ते तिलोद्भवम्।
एकमप्यौषधं योगे यस्मिन्यत्पुनरुच्यते॥
मानतो द्विगुणं ग्राह्यं तद्द्रव्यं तत्त्वदर्शिभिः।
व्याधेरयुक्त यद् द्रव्यं गणोक्तमपि तत्त्यजेत्॥
अनुक्तमपि युक्तं यद्योजयेत्तत्र तद्बुधः।
कदाचिद् द्रव्यमेकं वा यदि योगे न लभ्यते॥
तत्तद्गुणयुतं द्रव्यं परिवर्तेन गृह्यते।
द्रव्याभावे तु तत्तुल्यं द्रव्यमेव प्रदीयते॥
न्यग्रोधादेस्त्वचो ग्राह्याः सारः स्याद्बीजकादितः।
तालीसादेश्च पत्राणि फलं स्यात्त्रिफलादितः॥
धातक्यादेश्च पुष्पाणि स्नुह्यादेः क्षीरमाहरेत्।
महान्ति यानि मूलानि काष्ठगर्भाणि यानि च॥
तेषां तु वल्कलं ग्राह्यं सूक्ष्ममूलानि कृत्स्नतः।
जाङ्गलानां वयःस्थानां चर्मरोमनखादिकम्॥
क्षीरमूत्रपुरीषाणि जीर्णाहारे तु ग्राहयेत्।
चतुष्पात्सु स्त्रियः श्रेष्ठाः पुमांसो विहगेषु च॥

वल्मीककुत्सितानूपश्मशानोपरमार्गजाः ।
जन्तुवह्निहिमव्याप्ता नौषध्यः कार्यसाधिकाः ॥
शरद्यखिलकार्यार्थं ग्राह्यं सरसमौषधम् ।
विरेकवमनार्थं च वसन्तान्ते समाहरेत् ॥

अथ स्नेहपाकपरिभाषा—अत्राह सुश्रुतः,—"स्नेहाच्चतुर्गुणो द्रवः, स्नेहचतुर्थांशो भेषजकल्कः, तदैकध्यं संसृज्य विपचेदित्येष स्नेहपाककल्पः। भवति चात्र—स्नेहभेषजतोयानां प्रमाणं यत्र नेरितम्। तत्रायं विधिरास्थेयो निर्दिष्टे तत्तदेव तु" इति। स्नेहाच्चतुर्गुणो द्रव इति वचनं एकद्वित्रिद्रवेषु चतुर्गुणत्वन्यूने स्नेहसाधननिषेधार्थं, नतु पञ्चप्रभृतिद्रवेषु चतुर्गुणाधिक्ये प्रतिषेधार्थं, तेन यत्रैकेन द्रवेण पाकस्तत्रैकेनैव चातुर्गुण्यं, यत्र द्वाभ्यां द्रवाभ्यां स्नेहपाकस्तत्र स्नेहद्विगुणाभ्यां ताभ्यां चातुर्गुण्यं, यत्र त्रिभिर्द्रवैः स्नेहपाकस्तत्र त्रिभिः मिलितैश्चातुर्गुण्यं, यत्र तु चतुर्भिर्द्रवैः स्नेहपाकस्तत्र स्नेहसमैश्चतुर्भिश्चातुर्गुण्यमिति। यत्र तु पञ्चप्रभृतीनि द्रवाणि तत्र तु सर्वाणि स्नेहसमान्येव ग्राह्याणि। तत्र क्षीरे विशेषः–, यत्र द्रवान्तरं नोक्तं तत्र क्षीरं चतुर्गुणम्। द्रवान्तरप्रयोगे तु क्षीरं स्नेहसमं मतम्–इति। अस्यायमर्थः—यत्र केवलेन क्षीरेणैव पाकस्तत्र क्षीरमेव चतुर्गुणं दत्त्वा स्नेहः साधनीयः। यत्र तु एकद्रवान्तरयुतेन क्षीरेण पाकस्तत्र क्षीरं स्नेहसमं द्रवान्तरं च स्नेहत्रिगुणमिति मिलित्वा स्नेहचतुर्गुणेन द्रवेण पाकः यत्र च द्रवान्तरद्वययुतेन क्षीरेण पाकस्तत्र क्षीरं स्नेहसमं द्रवान्तरद्वयं च स्नेहसार्धमिति मिलित्वा स्नेहचतुर्गुणेन द्रवेण पाकः, यत्र द्रवान्तरत्रययुतेन क्षीरेण पाकस्तत्र क्षीरं द्रवान्तरत्रयं च स्नेह समिति प्रत्येकं मिलितैश्चतुर्गुणैः स्नेहपाकः। तदूर्ध्वं चतुःप्रभृतिद्रवान्तरयोगे क्षीरं द्रवान्तरं च प्रत्येकं स्नेहसमं दत्त्वा पाको निष्पादनीय। अथ कल्कमानापवाद–"वृषादि कुसुमैः कल्कैर्यत्रोक्तं स्नेहसाधनम्। कल्काढ्यत्वात्तु पादार्धं तत्र कल्कं प्रदापयेत्" इति स्नेहे कल्को नोक्तस्तत्र केवलेन द्रवेणैव चतुर्गुणेन स्नेहसाधनम्। यदुक्तं—अकल्कः खलु यः स्नेहः स साध्यः केवले द्रवे" इति। यत्र योगे द्रव्यगण एव निर्दिष्टः क्वाथो वा कल्को वा न निर्दिष्टस्तस्मिन्ननिर्देशे तस्माद्द्रव्यगणात्कल्कक्वाथावुभावपि प्रयोजयेत्। यदुक्तं सुश्रुते—"कल्कक्वाथावनिर्देशे गणात्तस्मात्प्रयोजयेत्"—इति। अत्र च गणशब्दो गणसंज्ञया यो गणः पञ्चमूलादिरुक्तस्तन्मात्रं न विवक्षितः, किन्तु त्रिप्रभृतिद्रव्यसमूहे विवक्षितः, गणात्तस्मादित्युक्ते। एतेन यत्रैकेन द्रव्येण द्रव्यद्वयेन वा पाकस्तत्र कल्केनैव, यत्र तु त्रिप्रभृतिभिर्द्रव्यैः पाकस्तत्र क्वाथकल्काभ्यामुभाभ्यामिति ज्ञेयम्। स्नेहसाधने क्वाथकल्पनोक्ता सुश्रुतेन—तत्र यथायोगं त्वक्पत्रफलमूलादीनामातपपरिशोषितानां क्षेत्रानि खण्डशश्छेदयित्वा भेद्यान्यणुशो भेदयित्वाऽवकुट्याष्ट-

गुणेन षोडशगुणेन वाऽम्भसाऽभिषिच्य स्थाल्यां चतुर्भागावशिष्टं क्वाथयित्वाऽपहरेदित्येष कषायपाककल्पः" इति । अत्राष्टगुणतोयं मृद्वादिसंघाताभिप्रायेण द्रवद्वैगुण्येनैवोक्तम् । यदुक्तमन्यत्र—"मृदौ चतुर्गुणं देयं कठिनेऽष्टगुणं जलम् । कठिनात्कठिनं यच्च तत्र षोडशिकं जलम् ॥ मृद्वादौ द्रव्यसंघाते मानानुक्तौ चिकित्सकाः । मध्यस्योभयभागित्वादिच्छन्त्यष्टगुणं जलमिति । तथा—क्वाथ्यादष्टगुणं वारि, पादस्थं स्याच्चतुर्गुणम् । स्नेहात्, स्नेहसमं क्षीरं, कल्कस्तु स्नेहपादिकः । चतुर्गुणं त्वष्टगुण द्रवद्वैगुण्यतो भवेत्" इति । यत्र क्वाथ्यद्रव्यमानमल्पमष्टगुणे तोये क्वाथकरणे स्नेहाच्चतुर्गुणः क्वाथो न भवति तत्रोक्तमानेन क्वाथ्यद्रव्यं गृहीत्वा षोडशगुणे तोये क्वाथयित्वा पादशेषं स्नेहचतुर्गुणं कुर्यादित्यभिप्रायेणोक्तं षोडशगुणेन वाऽम्भसाऽभिषिच्येति । "अथवा तत्रोदकद्रोणे त्वक्पत्रमूलादीनां तुलामावाप्य चतुर्भागावशिष्टमपहरेदित्येष कषायपाककल्पः । तुलाद्रव्ये जलद्रोणो द्रोणे द्रव्यतुलाऽम्भसि । ततः पलशते द्रव्ये जलद्रोणोऽपि चेष्यते ॥" यत्र तुलाद्रव्यं जले पचेदित्युक्तं परं जलप्रमाणं नोक्तं, तत्र द्रोणमितं जलं ग्राह्यं; यत्र तु द्रोणमिते जले द्रव्यं पचेदित्युक्तं परं द्रव्यप्रमाणं नोक्तं, तत्र द्रव्यं तुलाप्रमाणं ग्राह्यमिति भावः । 'अनिर्दिष्टप्रमाणानां स्नेहानां प्रस्थ इष्यते' इति ।

स्नेहपाककालनियम—स्नेहान् विपाच्यैव विरामयेत्तु क्षीरे द्विरात्रं स्वरसे त्रिरात्रम् । कल्के कषायेषु च पञ्चरात्रं दध्यारनाले पुनरेकरात्रम् ॥ अस्यायमर्थः—क्षीरादिद्रवाणि कल्कं चैकध्यं संसृज्य विपचेत । तत्र, क्षीरं कल्कश्च यत्र तत्रैकध्यं द्वयं संसृज्य पक्त्वा द्विरात्रं विश्रामयेत्· स्वरसः कल्कश्च यत्र तत्रैकध्यं द्वयं संसृज्य पक्त्वा त्रिरात्रं विश्रामयेत, यत्र केवलः कल्कस्तत्र कल्कं चतुर्गुणं जलं च संसृज्य पक्त्वा पञ्चरात्रं विरामयेत, यत्र कषायः कल्कश्च तत्रैकध्यं द्वयं संसृज्य पक्त्वा पञ्चरात्रं विरामयेत; यत्र दधि कल्कश्च तत्रैकध्यं द्वयं संसृज्य पक्त्वा एकरात्रं विश्रामयेत, यत्र आरनालः कल्कश्च तत्रैकध्यं द्वयं संसृज्य पक्त्वा एकरात्रं विरामयेत; अत्र दधिशब्दस्तक्रस्य, आरनालशब्दश्च सुरादीनां सधानविशेषाणां मूत्रादीनां च उपलक्षणम् । यत्र कल्कश्च क्षीरादीनां द्वित्र्यादिकानि द्रवाणि च तत्र कल्कं गर्भे दत्त्वा तत्तत् क्षीरादिकं प्रत्येकं दत्त्वा संसृज्य पक्त्वा स्वस्वोक्तकालं विरामयेत, यथा-क्षीरे द्विरात्रं, स्वरसे त्रिरात्रं, कषाये पञ्चरात्रं, दध्न्येकरात्रं, आरनाले चैकरात्रमिति । एतच्च विशेषेण गुणाधानार्थम् । उक्तं हि—"घृततैलगुडादींश्च नैकाहादवतारयेत् । व्युषितास्तु प्रकुर्वन्ति विशेषेण गुणान् यतः"—इति । विरामरात्रान्न्यूनत्वे तु विशेषेण गुणाधानाभावमात्रं नतु स्नेहपाकासिद्धिः, अधिके च न दोषः । सिद्धं स्नेहं वस्त्राद्गालयित्वोपयुञ्ज्यात् । तत्र मृदुपाके द्रवसद्भावात्किट्टं सर्वथा न पीडनीयं, मध्यमे मनाक् पीडनीयं, द्रवा-

भावात्; खरे तु यथेष्टं पीडनीयं, द्रवरहितत्वात्। मध्यपाकस्तु सर्वत्र प्रशस्तः। यदुक्तं,—'वरं पाको मृदुः कार्यः स्नेहादीनां न वै खरः। स पूर्णं वीर्यमादत्ते तज्जहाति खरः पुनः'।

अथ स्नेहपाकविज्ञानम्। अत्राह सुश्रुतः—अत ऊर्ध्वं स्नेहपाकक्रममुपदेक्ष्यामः। स च त्रिविधः। तद्यथा—मृदुः, मध्यः, खर इति। तत्र स्नेहौषधिविवेकमात्रं यत्र भेषजं स मृदुः, मधूच्छिष्टमिव विशदमविलेपि च यत्र भेषजं स मध्यमः, कृष्णमवसन्नमीषद्विशदं चिक्कणं च यत्र भेषजं स खर इति। अत ऊर्ध्वं दग्धस्नेहो भवति, तं पुनः साधु साधयेत्। तत्र पानाभ्यवहारयोर्मृदुः, नस्याभ्यञ्जनयोर्मध्यमः, बस्तिकर्णपूरणयोस्तु खर इति। भवतश्चात्र—शब्दस्योपरमे प्राप्ते फेनस्योपरमे तथा। गन्धवर्णरसादीनां सम्पत्तौ सिद्धिमादिशेत्॥ घृतस्यैवं विपक्वस्य जानीयात्कुशलो भिषक्। फेनोऽतिमात्रं तैलस्य शेषं घृतवदादिशेत्॥ इति॥

अथ चूर्णपरिभाषा—अत्यन्तशुष्कं यद् द्रव्यं सुपिष्टं वस्त्रगालितम्। तत्स्याच्चूर्णं रजः क्षोदस्तन्मात्रा कर्षसंमिता॥ चूर्णे गुडः समो देयः शर्करा द्विगुणा भवेत्। चूर्णेषु भर्जितं हिङ्गु देयं नोत्क्लेदकृद्भवेत्॥ लिहेच्चूर्णं द्रवैः सर्वैर्घृताद्यैर्द्विगुणोन्मितैः। पिबेच्चतुर्गुणैरेव चूर्णमालोडितं द्रवैः॥ चूर्णविधाने द्विविधः प्रचारो दृश्यते वृद्धवैद्यानाम्। तत्रैके द्वित्र्यादिद्रव्यनिष्पाद्ये चूर्णप्रयोगे प्रत्येकं द्रव्यं संचूर्ण्य वस्त्रगालितं कृत्वा ततो यथोक्तमानेन गृहीत्वा एकीकृत्य प्रयुञ्जन्ति, अपरे तु सर्वाण्यपि द्रव्याणि यथोक्तमानानि सगृह्य एकध्यं संचूर्ण्य वस्त्रगालितं कृत्वा व्यवहरन्ति। बहुषु प्रयोगेषु चूर्णं जम्बरीरार्द्रकादीनां रसैर्भावयेदित्युक्तं, तत्र यस्य भावना देया तस्य यदि स्वरस उपलभ्यते तदा स्वरसेनैव भावयेत्, यदा तु स्वरसो नोपलभ्येत तदा "भाव्यद्रव्यसमं क्वाथ्यं क्वाथ्यादष्टगुणं जलम्। अष्टांशशेषितः क्वाथो भाव्यानां तेन भावना—" इति परिभाषया क्वाथं निष्पाद्य तेनैव भावयेत्। भावनाविधिस्तु—"द्रवेण यावता सम्यक् चूर्णं सर्वं प्लुतं भवेत्। भावनायाः प्रमाणं तु चूर्णे प्रोक्तं भिषग्वरैः॥ दिवा दिवातपे शुष्कं रात्रौ रात्रौ निवासयेत्। शुष्कं चूर्णीकृतं द्रव्यं यथोक्तं भावनाविधिः" इति। यथोक्तं भावनाविधिरिति सप्तवारं त्रिवारमेकवारं वा यावद्वारं भावनोक्ता तावद्वारं भावयेदित्यर्थः। अनुक्ते तु सप्तवारं भावयन्ति वृद्धवैद्याः।

गुटिकापरिभाषा—वटकाश्चाथ कथ्यन्ते तन्नाम गुटिका वटी। मोदको चटकः पिण्डी गुण्डी वर्तिस्तथोच्यते॥ लेहवत्साध्यते वह्नौ गुडो वा

शर्कराऽथवा। गुग्गुलुर्वा, क्षिपेत्तत्र चूर्णं तन्निर्मिता वटी॥ कुर्यादवह्नि-सिद्धेन कचिद्गुग्गुलुना वटीम्। द्रवेण मधुना वाऽपि गुटिकां कारयेद्बुधः॥ यथा लेहार्थं गडादिकं साध्यते तथैवात्र गुड शर्करा गुग्गुलुर्वा पक्तव्यः। पाके सति चूर्णं प्रक्षिप्य वटकान कुर्यादिति भावः। गुडपाकलक्षणं तु गदनिग्रह एव प्रोक्तम् (प्रयोगखण्ड पृ० २४५)। गुडवद्गुग्गुलोः पाकः सबन्धस्तु विशेषत। मण्डूराणां च सर्वेषां पाकोऽयं परिकीर्तितः॥ पक्षान्तरमाह-कचिदिति; न सर्वत्र। अवह्निसिद्धेन कुट्टितेन गुग्गुलुना वटकाः कार्याः। अथवा द्रवेण तोयक्षीरादिना, वा मधुना क्षौद्रेण संप्लाव्य संमर्द्य वटिकां कारयेत। वटिकाया गुडशर्करादीना मानं—सिता चतुर्गुणा देया वटीषु द्विगुणो गुडः। चूर्णाच्चूर्णसमः कार्यो गुग्गुलुर्मधु तत्समम्। द्रवं च द्विगुणं देयं मोदकेषु भिषग्वरैः॥ एतच्च शर्करादीना मानमनुक्तप्रमाणेषु प्रयोगेषु ज्ञेयम्।

अवलेहपरिभाषा--काथादीनां पुनःपाकाद्घनत्व सा रसक्रिया। सोऽवलेहश्च लेहश्च तन्मात्रा स्यात्पलोन्मिता॥ अनुक्ते सितादीना परिमाणमुच्यते--सिता चतुर्गुणा देया चूर्णाच्च द्विगुणो गुडः। द्रवं चतुर्गुणं दद्यादिति सर्वत्र निश्चयः॥ द्रवमिति क्षौद्रघृतादिकम्। चतुर्धा खलु निष्पाद्यते लेहः। तत्र प्रथमः दार्व्यादिद्रव्याणा सामान्यकाथपरिभाषया काथं निष्पाद्य पुनर्वस्त्रगालित यावद्घनं भवेत्तावत्पक्त्वा निष्पाद्यते, तस्य विशेषतो 'रसक्रिया' इति नाम्ना प्रसिद्धिः। तथाहि--"गृहीत्वा काथकल्पेन काथं पूतं पुनः पुनः। काथयेत्फाणिताकारमेषा प्रोक्ता रसक्रिया" इति। द्वितीयस्तु काथ्यद्रव्याणि यथोक्तमानेन काथयित्वा तं काथं वस्त्रपूतं कृत्वा, तत्र शर्करादिकं प्रक्षिप्य पुनः पक्त्वा पाके सिद्धे चूर्णं प्रक्षिप्य निष्पाद्यते। तृतीयः केवल शर्करादिकं जले पक्त्वा सिद्धे पाके चूर्णादिकं प्रक्षिप्य निष्पाद्यते। चतुर्थस्तु चूर्णं यथोक्तमानैः क्षौद्रघृतादिभिः संप्लाव्य निष्पाद्यते। अथ लेहादौ चूर्णप्रक्षेपविचारः--प्रायो न पाकश्चूर्णानां भूरिचूर्णस्य तेन हि। आसन्नपाके प्रक्षेपः स्वल्पस्य पाकमागते॥ आसन्नपाक इति उपस्थितपाके नतु पाकमापन्ने, तथा सति प्रचुरचूर्णस्य प्रवेशो न स्यादित्यर्थः। स्वल्पस्य चूर्णस्य पाकान्ते कदुष्णदशायां प्रक्षेप इति। पाकलक्षणं तु—सुपक्के तन्तुमत्त्वं स्यादवलेहेऽप्सु मज्जनम्। स्थिरत्वं पीडिते मुद्रा गन्धवर्णरसोद्भवः॥ तथा—रसो गन्धः शुभः पाके वर्तिः स्याद्दृढमर्दनात्॥ इति। स्थिरत्वमिति निश्चलत्वम्। एतेन द्रवरहित इत्यर्थः। मुद्राऽत्र निम्नता।

अथ आसवारिष्टपरिभाषा—द्रवेषु चिरकालस्थं द्रव्यं यत्सहितं भवेत्। आसवारिष्टभेदैस्तत्प्रोच्यते भेषजोचितम्॥ यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः। अरिष्टः काथसिद्धः स्यात्तन्मानं द्विपलोन्मितम्॥ अनु-

क्तमानारिष्टेषु द्रवद्रोणे गुडात्तुलाम् । क्षौद्रं दद्याद्गुडादर्धं प्रक्षेपं दशमांशिकम् ॥ प्रक्षेपं पश्चाद्देयं द्रव्यं धातकीपुष्पादिकं, दशमांशिकं गुडपरिमाणादित्यर्थः । क्वाथ्यद्रव्याणि द्राक्षादीनि यथोक्तमानैर्जले निष्क्वाथ्य वस्त्रपूतं विधाय गुडादिकं धातकीकुसुमादिकं च यथोक्तमानेन प्रक्षिप्य घृतभाविते दृढे मृन्मये कुम्भे यावदर्धं प्रपूर्य पक्षं मासं वा भूमौ स्थाप्य जातरसे उद्धृत्य वस्त्रगालितं कृत्वा उपयुञ्ज्यादित्यरिष्टविधिः । आसवकरणे तु जलादौ द्रवे एव गुडादीनि प्रक्षिप्य संधानं, न न क्वाथकरणम् । शेषं अरिष्टवत् ।

अथ भेषजमात्राविचारः—न्यूनं चेन्मात्रया द्रव्यं न व्याधीन् विनिवर्तयेत् । मात्रयाऽधिकया युक्तं जनयेच्चापदं परम् ॥ मात्राया नास्त्यवस्थानं दोषमग्निं बलं वयः । व्याधिं द्रव्यं च कोष्ठं च वीक्ष्य मात्रां प्रयोजयेत् ॥ तथाऽप्यल्पबुद्धीनामवबोधाय तत्र तत्र यथास्थूलं मात्रानिर्देशः कृत इति ज्ञेयम् । संप्रति मनुष्याणा अल्पदेहबलवत्वात् प्राचीनग्रन्थोक्तमात्रापेक्षया पादप्रमाणा अर्धा वा मात्रा देया ।

इति वैद्य श्रीयादवजी-त्रिकमजी विरचितं परिशिष्टं समाप्तम्



# परिशिष्ट[1] २

## मान-परिभाषा

प्राचीन समय में मागध तथा कलिंग दो ही मान ( तोल ) प्रचलित थे। प्राचीन आचार्यों ने द्रव्य ग्रहण में प्रायः उन्हीं दो मानों का उल्लेख अपने अपने ग्रन्थों में किया है। कुछ आचार्यों ने कलिंग मान से मागध-मान को श्रेष्ठतम माना है।

व्यावहारिक जगत में वस्तुओं के आदान-प्रदान, क्रय-विक्रय तथा ओषधि निर्माण में द्रव्यों का शास्त्रोक्त मात्रा में प्रयोग करने के लिये मान-ज्ञान की आवश्यकता पडती है।

व्यवहार-कुशल वैद्य उपर्युक्त मागध तथा कलिंग मान के अनुसार ही आधुनिक प्रचलित मानों में नाम मात्र का हेर-फेर करके ओषधि द्रव्यों का ग्रहण करते हैं।

प्राचीन शास्त्रोक्त मान, पुरातन भारतीय मान तथा नवीनतम प्रचलित स्वतन्त्र भारतीय मानों का समन्वयात्मक विवेचन अधोलिखित तालिका द्वारा किया जाता है—

### प्राचीन पारिभाषिक मानों की तालिका

| | |
|---|---|
| चार माष = एक टंक | चार प्रस्थ = एक आढक |
| ,, टंक = ,, अक्ष ( कर्ष ) | ,, आढक = ,, द्रोण ( राशि ) |
| ,, अक्ष = ,, बिल्व | ,, द्रोण = ,, द्रोणी |
| ,, बिल्व = ,, कुडव | ,, द्रोणी = ,, खारी |
| ,, कुडव = ,, प्रस्थ | |

### प्राचीन तथा अर्वाचीन मानो का समन्वयात्मक तालिका

| मागध मान | आधुनिक मान | प्रचलित मान |
|---|---|---|
| ८ सरसो = १ यव | × | ३० मिलीग्राम |
| ४ यव = १ गुंजा | १ रत्ती | १२१ ,, |
| ६ रत्ती = १ माशा | × | ७२९ ,, |
| ४ माशा = १ शाण, धरण, टक- | ३ माशा | २ ग्रा० ९१६ ,, |
| २ टक = १ कोल, वदर, द्रक्षण, क्षुद्रक, वटक | ६ माशा | ५ " ८३२ ,, |
| २ कोल = १ कर्ष, पिचु, पाणिमानिक, अक्ष, सुवर्ण, बिडालपदक, पोटलिका, कवडग्रह उदुम्बर | १ तोला | ११ ग्राम ६६४ मि० ग्रा० |

---

१. यह परिशिष्ट वस्तुतः प्रथम परिशिष्ट का ही संक्षिप्त भावानुवाद है। मूल वचन प्रथम परिशिष्ट में ही मिलेंगे।

| | | |
|---|---|---|
| २ कर्ष = ½ शुक्ति, पल | २ तोला | २३ ग्राम ३२८ मि० ग्रा० |
| २ शुक्ति = १ पल, मुष्टि, आम्र षोडशी— | ४ ,, | ४६ ,, ६५५ ,, |
| २ पल = १ प्रसृति | ८ ,, | ९३ ,, ३१० ,, |
| २ प्रसृति = १ कुडव अञ्जलि अर्द्ध-शराव, अष्टमान ४ पल— | १६ ,, | १८६ ,, ६२१ ,, |
| २ कुडव = १ मानिक, शराव | ३२ ,, | ३७२ ,, ७४२ ,, |
| २ मानिक = १ प्रस्थ | ६४ ,, | ७४६ ,, ४८३ ,, |
| ४ प्रस्थ = १ आढक | २५६ ,, | २ किलो ९८५ ग्रा० ९३३ मि० |
| ४ आढक = १ द्रोण, कलश | १०२४ ,, | ११ ,, ८९० ,, ३८७ ,, |
| ४ द्रोण = १ द्रोणी, वह, गोणी | ४०९६ ,, | ४७ ,, ५६१ ,, ५४८ ,, |
| ४ द्रोणी = १ खारी | × | × × × |
| १०० पल = १ तुला ( ५ सेर ) | ४०० ,, | ४ कि० ६६५ ग्रा० ५२० मि० |
| २ हजार पल = १ भार (१०० सेर) | ८००० ,, | ९३ ,, ५२७ ,, ६०० ,, |

## कलिंग मान

१२ सरसो = १ यव
२ यव = १ रत्ती
३ रत्ती = १ वल्ल ( वाल )
८ रत्ती = १ माशा
४ माशा = १ शाण, टंक
६ माशा = १ गद्याण
१० माशा = १ कर्ष
४ कर्ष = १ पल
४ पल = १ कुडव

## भारतीय तौल

८ रत्ती = १ माशा
१२ माशा = १ तोला
५ तोला = १ छटाँक
८० तोला = १ सेर ( प्रचलित सेर )

नोट—जहाँ ४ तोले का छटाँक होता है वहाँ ६४ तोले का सेर माना जाता है। प्राचीन प्रस्थ ६४ तोले का होता है, संभवतः इसी के आधार पर सेर को भी ६४ तोले का मानते हैं।

## वर्तमान समय के मान

१० मिलीग्राम = १ सैंटीग्राम
१० सैंटीग्राम = १ डेसीग्राम
१० डेसीग्राम = १ ग्राम
१० ग्राम = १ डेकाग्राम
१० डेकाग्राम = १ हैक्टोग्राम
१० हैक्टोग्राम = १ किलोग्राम
१० किलोग्राम = १ मिरीयाग्राम
१० मिरीयाग्राम = १ क्वींटल
१० क्वींटल = १ मैट्रिक टनी
२०० मिलीग्राम = १ कैरेट

## द्रव पदार्थ तौलने का प्रचलित मान

१० मिलीलीटर = १ सेन्टीलीटर
१० सेन्टीलीटर = १ डेसीलीटर

१० डेसी लीटर = १ लीटर
१० लीटर = १ डेका लीटर
१० डेका लीटर = १ हेक्टो लीटर
१० हेक्टो लीटर = १ किलो लीटर

## द्रव्यग्रहण-प्रकार

औषधि निर्माण में तीन प्रकार के द्रव्यों का ग्रहण किया जाता है—शुष्क ( सूखा ), आर्द्र ( गीला तथा द्रव ( पिघलने वाला—स्निग्ध )। योग निर्माण में प्रायः शुष्क द्रव्य ही लेने का विधान है। जहाँ शुष्क द्रव्य नही मिले वहाँ आर्द्र द्रव्य दुगुनी मात्रा में और जहाँ आर्द्र द्रव्य लेने का विधान है वहाँ यदि आर्द्र ( ताजा ) नहीं मिले तो शुष्क द्रव्य आधी मात्रा में ही लेना चाहिए। परन्तु जिस प्रयोग में तुला-मान तथा पल के मान का उल्लेख किया गया हो वहाँ आर्द्र-द्रव्यों को दुगुना नहीं लेना चाहिए।

किसी भी योग में निम्नलिखित द्रव्यों का आर्द्र ( कच्चा ) ही लेने का विधान है। यथा—

गुडूची, कोरैया, अड़ूसा, कुष्माण्ड, शतावरी, असगन्ध, सहचर ( कठसरैया ), सौंफ, प्रसारणी तथा नीम, परवल, केतकी, वला, कुमुदिनी, पुनर्नवा, पूतिगन्धा, मोस, नागवला, गुग्गुलु, हिंगु, अदरक और गुड।

कहीं २ पर गुंजा ( रत्ती ) से लेकर कुडव ( एक पाव ) तक द्रव, आर्द्र तथा शुष्क द्रव्यों का मान औषध बनाने में बराबर लेने का विधान किया गया है तथा प्रस्थ ( सेर ) से ऊपर औषध बनाने में द्रव तथा आर्द्र द्रव्यों का सूखे द्रव्यों से दुगुना लेने का विधान किया गया है। परन्तु यह युक्तिविरुद्ध एवं चरक सुश्रुत आदि ग्रन्थों से विरुद्ध होने के कारण प्रामाणिक नहीं है।

## द्रव्यग्रहण-नियम

जहाँ एक नाम से अनेक द्रव्यों का बोध होता है, वहाँ विशेष ( रूढ ) द्रव्य ग्रहण करने का संकेत मिलता है। यथा—लवण से 'सेन्धा नमक' तथा चन्दन से 'लाल चन्दन'। चन्दन के सम्बन्ध में विशेष नियम यह है कि—चूर्ण, अवलेह, आसव तथा स्नेह के लिये सफेद चन्दन तथा लेप एव कषाय के लिये प्रायः लाल चन्दन का ही प्रयोग होता है।

जहाँ पर दूध तथा घी का सामान्य वचन होता है वहाँ गाय का दूध तथा घृत लेते हैं। शकृद् रस से गाय का गोबर तथा मूत्र से गाय का ही मूत्र ग्रहण करते हैं। सरसों से सफेद सरसों तथा उत्पल से नील कमल ग्राह्य है। समय का निर्देश न किया गया हो तो प्रातः काल ग्रहण करना चाहिए। औषधों के अंग का निर्देश न हो तो जटा, ( मूल ) ग्रहण करें। वनस्पतियों के भाग का निरूपण न होने पर सामान्यतः सौम्यभाग का ग्रहण होता है। पात्र का निर्देश न हो तो मिट्टी का पात्र ग्रहण करे। जिस योग में द्रव का नामोल्लेख न किया गया हो वहाँ जल तथा तैल का नाम निर्देश न हो तो तिल तैल ग्राह्य है। एक ही योग में एक ही द्रव्य को दो बार कहा गया हो तो दुगुना ग्रहण करे। जिस किसी योग में गणोक्त द्रव्यों का विधान है किन्तु उस गण का कोई औषध व्याधि के लिये उपयुक्त नही है

तो उसे निकाल देना चाहिए और दूसरे उपयोगी औषध को ग्रहण कर लेना चाहिए। कदाचित् किसी योग में कोई एक द्रव्य न उपलब्ध हो सके तो उस द्रव्य के गुण के तुल्य द्रव्य को समान मात्रा में ग्रहण करे। वट आदि वृक्षों की छाल ग्राह्य है और विजयसार आदि का सार (लकडी के मध्य का भाग) ग्राह्य है। तालीसादि गण का पत्र, त्रिफला आदि फलवान् वृक्षों का फल, धाय आदि पुष्पवान् वृक्षों का पुष्प तथा सेंहुण आदि क्षीरी वृक्षों का क्षीर ग्रहण किया जाता है। जो वृक्ष बडी एव विस्तृत जड वाले होते है उनकी छाल एव छोटी-छोटी जडवाले वृक्षों की जड ग्रहण की जाती है।

जगली जवान पशुओं का चर्म, रोम तथा नख ग्रहण करना चाहिए। दूध, मूत्र तथा पुरीप को ग्रहण करना हो तो आहार पच जाने के बाद ग्रहण करे।

वल्मीक, कुत्सित स्थान, आनूपदेश, ऊषर तथा मार्ग में उत्पन्न एवं कीडे लगे, अग्निदग्ध, हिम विशीर्ण औषधियाँ कार्यसाधक ( रोगनाशक ) नहीं होती हैं। अतः इस प्रकार दूषित औषध को योग में ग्रहण नहीं करना चाहिए।

सभी कार्यों के लिये शरद् ऋतु में सरस औषधियों को ग्रहण करना चाहिए। वमन तथा विरेचन के लिये वसन्त ऋतु के अन्त में औषधों को ग्रहण करे।

## स्नेहपाक-परिभाषा

सुश्रुताचार्य के मतानुसार स्नेह के चौगुना द्रव द्रव्य, तथा स्नेह के चतुर्थांश औषधि कल्क को एकत्र कर पकाये, यह स्नेह पाक करने का नियम है। यह नियम—जहाँ पर स्नेह औषध तथा जल के प्रमाण का निर्देश किया गया है, वहाँ के लिये है किन्तु जहाँ पर आचार्यों ने प्रमाण का निर्देश कर दिया है वहाँ तो निर्देशानुसार ही द्रव्यों को ग्रहण करे। स्नेह से चौगुना द्रव्य लेने का विधान है। यह वचन एक, दो तथा तीन द्रव्यों को जहाँ लिया गया है वहाँ के लिये है अर्थात एक द्रव पदार्थ हो तो चौगुना, दो द्रव पदार्थ हो तो दोनों को मिलाकर चौगुना, तीन पदार्थ हों तो तीनों द्रव्यों को मिलाकर चौगुना होना चाहिए। चौगुना से कम द्रव के साथ स्नेहपाक करने का विधान नहीं है। जहाँ चार द्रवों का निर्देश है वहाँ प्रत्येक द्रव स्नेह के समभाग होना चाहिए। जहाँ पर चार से अधिक द्रवों का निर्देश है वहाँ सभी द्रवों को स्नेह के समभाग लेना चाहिए। यहाँ चातुर्गुण्य के नियम का अपवाद हो जाता हैं यह सामान्य नियम है। जहाँ क्षीर के साथ स्नेहपाक का विधान हैं वहाँ कुछ वैशिष्ट्य है—

जहाँ केवल दूध के साथ स्नेहपाक का विधान है वहाँ स्नेह का चौगुना दूध लेना चाहिए। यदि दूध के साथ द्रवान्तर का भी निर्देश हो तो स्नेह के समभाग दूध और तीन भाग द्रव पदार्थ लेना चाहिए। जहाँ दूध के साथ दो द्रव पदार्थों का उल्लेख है वहाँ भी दूध स्नेह के समभाग ही होगा अर्थात् दो द्रव पदार्थों का तीन भाग, दूध एक भाग मिलाकर चौगुना द्रव पदार्थ लिया जायगा। इसी प्रकार जहाँ दो से अधिक द्रव पदार्थ का निर्देश हो वहाँ दूध एवं द्रव पदार्थ स्नेह के समभाग लेकर चातुर्गुण्य की कल्पना करे। इस प्रकार चार से अधिक द्रव पदार्थ का निर्देश होने पर स्नेह के समभाग दूध एवं द्रव पदार्थ लेकर स्नेह पाक करे।

